# भट्टिकाव्यम्

जयमङ्गलरचितजयमङ्गलया

भरतमल्लिककृतमुग्धबोधिन्या टीकया च

समेतम् ।

---

## द्वितीयखण्डम् ।

---

बि, ए, उपाधि-धारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृत्य प्रकाशितम् ।


कलिकाताराजधान्याम्

सरस्वतीयन्त्रे

मुद्रितम् ।

इं १८७६

# भट्टिकाव्यम् ।

---

## दशमः सर्गः ।

---

अथ स वल्कदुकूलकुथादिभिः परिगतोज्ज्वलदुद्धतवालधिः ।
उदपतद्दिवमाकुललोचनैर्नृरिपुभिः सभयैरभिवीक्षितः ॥ १ ॥
अनुप्रासवत् ।

---

शब्दलक्षणमुक्तमपि लक्षयन् काव्यलक्षणार्थं प्रसन्नकाण्डमुच्यते काव्यस्यात्र प्रसन्नत्वात् प्रथमश्चेदं लक्षणं यत् प्रसन्नतानाम अविद्वदङ्गनाबालप्रतीतार्थं प्रसन्नवदिति शब्दलक्षणं पुनः प्रकीर्णमेव द्रष्टव्यं तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कारमाधुर्यप्रदर्शनदोषाः भाषासमावेशश्चेति तत्रालङ्कारो द्विविधः शब्दालङ्कारोऽर्थालङ्कारश्चेति तत्र पूर्वो द्विविधः अनुप्रासो यमकञ्चेति उभयं दर्शयन्नाह ।

अथेति। अथ दाहादेशानन्तरं स वानरो वियदाकाशमुदपतत् उत्पतितवान् वल्कं अशुकं शुल्कवल्कोल्का इति निपातनं आदिशब्दादन्यैरपि सुझादिभिः परिगतः परिवेष्टितः ज्वलन्नुद्धत ऊर्द्धीकृतो वालधिः पुच्छं यस्य सः न्टरिपुभिः राक्षसैः सभयैराकुललोचनैरभिवीक्षितः किमयमनुष्टास्यतीति अनुप्रासवदिति अनुप्रासो यस्मिन् विद्यत इति तस्य च लक्षणं सरूपवर्णविन्यासमनुप्रासं प्रचक्षत इति ॥ १ ॥ ज० म०

अथ प्रकीर्णकशब्दलक्षणमुक्त्वा काव्यं लक्षयन् प्रसन्नकाण्डमारभते काव्यस्यात्र प्रसन्नत्वात् प्रसादः शब्दार्थयोर्गुणविशेषः तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कारस्य माधुर्यादिगुणस्य भाविकस्य भाषासमावेशस्य च दर्शनात् काव्यशोभाजनकोऽलङ्कारः स च द्विविधः शब्दालङ्कारो-

रणपण्डितोऽग्रविबुधारिपुरे कलहं स राममहितः कृतवान्।
ज्वलदग्निरावणगृहञ्च बलात्कलहंसराममहितः कृतवान्॥२॥

युक्पादयमकम्।

---

ऽर्थालङ्कारश्च तत्र पूर्वो द्विविधः अनुप्रासो यमकश्च तत्र प्रथममनुप्रास-शब्दालङ्कारं प्रदर्शयति।

अथेत्यादि। दाहादेशानन्तरं स वानरो वियदाकाशं उदपतत् उद्गतवान् कीदृशः वल्कैस्तरुविशेषत्वग्भिर्दुकूलैः क्षौमैः कुथैश्चित्रकम्बलैः आदिशब्दात् कुशादिभिश्च परिगतो वेष्टितः ज्वलन् उद्धत ऊर्द्ध्वीकृतो बालधिः पुच्छं यस्य सः तथा न्वरिपुभि. राक्षसैरभिवीक्षित आभिमुख्येन भालितः कीदृशैः किमयं करिष्यतीति सभयैस्त्रासयुक्तैः अतएव आकुललोचनैः आ कुलानि द्रुतस्ततः परिक्षिप्तानि लोचनानि येषां वल्कं वल्कलमस्त्रियामित्यमरः। कार्पासं बादरं प्रोक्तं दुकूलाद्यञ्च वल्कलमित्यमरमाला। कुथपदस्थाने कुशपदं केचित्पठन्ति बालहस्तस्तु बालधिरित्यमरः। द्रुतविलम्बितनामवृत्तमिदं तल्लक्षणं यथा द्रुतविलम्बितमाह नभौभराविति। अनुप्रासवदिति अनुप्रासो विद्यतेऽस्मिन्निति मोङ्भष्पाद्दलुरिति वलुः वर्णानुवृत्तिरनुप्रासः तथाच वर्णानामनुवृत्तिर्या नातिदूरान्तरश्रुतिः। अनुप्रासः स तेनैव सनाथा काव्यपद्धतिरिति। सरूपवर्णविन्यासमनुप्रास प्रचक्षत इति च अनुप्रासो द्विविध उद्भटानुप्रासश्छेकानुप्रासश्च अनेकस्य वर्णस्य सकृत्साद्दश्यं छेकानुप्रासः स एवोत्कृष्टत्वादिह प्रदर्शितः॥१॥ भ०

यमकस्यापि लक्षणं। तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम्। वर्णानां यः पुनर्वादो यमकन्तन्निरूप्यते॥ इति तदनेकविधं दर्शयन्नाह

रणेति। स कपिः वियदुत्पतितो राममहितो रामपूजितः रणपण्डितो युद्धकुशलः अग्रविबुधारिपुरे अग्रो यो विबुध. इन्द्रः तस्य यो रिपुर्दशाननस्तस्य पुरे लङ्कायां कलहं कृतवान् कलहंसान् रमयतीति कलहंसराम रमेरण्यन्तात्कर्म्मण्यण् तादृशं रावणगृहं बलाद्ध्र्यमाणोऽपि ज्वलदग्नि दीप्यमानपावकम् कृतवान् कृतं विद्यते यस्येति कृतामेचोत्यर्थः। अर्हितः पञ्जुः युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमितत्वात्॥२॥ ज० म०

निखिलाभवन्न सहसा सहसा ज्वलनेन पूः प्रभवता भवता ।
वनिताजनेन वियता वियता त्रिपुरापदं नगमिता गमिता ॥३॥

पादान्तयमकम् ।

---

अथ यमकान्युच्यन्ते तल्लक्षणं यथा तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् । वर्णानां यः पुनर्वादो यमकं तन्निरुच्यते इति अस्य भेदा बहवः काव्यप्रकाशादौ दर्शिताः केचनात्र दर्शिताः तत्र प्रथमं युक्पादयमकं दर्शयति

रणेत्यादि । अपरस्य श्रेष्ठस्य विबुधस्य इन्द्रस्य योऽरिः शत्रुर्दशाननः तस्य पुरे लङ्कायां स कपिः कलहम् युद्धम् कृतवान् रावणस्य गृहम् ज्वलदग्नि दीप्यमानपावकम् बलाद्धार्य्यमाणोऽपि कृतवान् चकार रावणगृहम् कीदृश कलहंसरामम् कलहंसेन कादम्बेन राममभिरामं कलहंसान् रमते रमयतीति अन्तर्भूतण्यर्थाद्रमेः ढात्पक्षिणीति षण् वा कलहंसा रमन्तेऽस्मिन्नाधारे घञ् वा यद्वा बलेन रूपेण अतोऽतन्यो गच्छन्त्यः कलहंसरामाराजपत्न्यो यत्र गृहे तत्तथा स कीदृशः रणपण्डितः युद्धकुशलः राममहितः रामेण महितः पूजितः महपूजे स्वार्थे च्छार्थेत्यादिना वर्त्तमानविहितः क्तोभूतक्तस्य बाधक इति केचित् । वस्तुवस्तु भूते कर्मणि क्तः आनुबन्धादिभ्यो वर्त्तमानक्तेनातीतक्तस्य बाधेन प्रमाणमिति कातन्त्रटीकाकृत.प्युक्तं अहितः शत्रुर्यादूराक्षसानां अस्य विष्णोरामरूपस्य हित इति वा कृतवान् कृती कार्य्यज्ञः हिंसावान् वा बलं गन्धे रसे रूपे स्थामनिस्थौल्यसैन्ययोरिति रभसः । कलहसस्तु कादम्बे राजहंसे नृपोत्तमे इति कृतं युगेऽपि हिंसायाम् पर्य्याप्ते विहिते कुले इति विश्वः । युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमकितत्वात् तथाच द्वितीये च चतुर्थे च यमकम् यत्र दृश्यते । युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैरिति ॥ २ ॥ भ०

निखीत्यादि । ज्वलनेनाग्निना प्रभवता वृद्धिङ्गच्छता भवता सस्तुत्यमानेन सहसा तत्क्षणम् पूः पुरी निखिला सर्व्वा न सहसा अभवत् सानन्दा न जाता हृ ससानन्दकार्य्यत्वात् एवमुक्तं स्वनहसोर्वेत्यपि

सरसां सरसां परिमुच्य तनुं पततां पततां ककुभो बहुशः ।
सकलैः सकलैः परितः करुणैरुदितैरुदितैरिव खं निचितम् ॥४॥
पादादियमकम् ।

---

रूपम् वनिताजनेन वियता नभसा वियता भयादितस्ततो गच्छता त्रिपुरापदङ्गमिता प्रापिता पूः त्रिपुरेष्वपि दह्यमानेषु भयादितस्ततो जनो गतः नगस्त्रिकूटपर्व्वतस्मिता सती । पादान्तयमकमिति पादान्तेषु यमितत्वात् ॥ ३ ॥ ज० म०

निखिलेत्यादि । ज्वलनेनाग्निना सहसा तत्क्षणम् निखिला सकला पूर्लङ्का सहसा हाससहिता नाभवत् किन्तु सशोकाभवत् हासस्यानन्दकार्यत्वात् ज्वलनेन कीदृशेन प्रभवता वृद्धिं गच्छता भवता उत्पद्यमानेन पू. कीदृशी वनिताजनेन त्रिपुरापदं त्रिपुरसम्बन्धिनीमापदं विपत्तिं गमिता प्रापिता स्त्रीजनेन कीदृशेन वियता गगनपथेन वियता गच्छता भयात् पलायमानेन यथा हरशराग्निना संदह्यमानेषु त्रिपुरेषु भयाद्वनिता इतस्ततो गच्छन्ति तथात्रापीति भावः ज्वलनेन त्रिपुरापदं गमिता वनिता जनेनोपलक्षितेति केचित् पुनः कीदृशी नगं त्रिकूटपर्व्वतं इता प्राप्ता नगेन मिता परिच्छिन्नेति वा इणेरखि इणः विपूर्व्वादिणः शतृः वीलईलवदित्यस्माद्वा ईलकान्तिगतिव्याप्तिक्षेपप्रजनखादने इति प्रमिताक्षरा नाम वृत्तं तल्लक्षणं यथा प्रमिताक्षरा सजससैः कथितेति पादान्तयमकमिति पादचतुष्टयान्ते यमकितत्वात् ॥ ३ ॥ भ०

सरसामित्यादि । सरसाम् तोयाशयानाम् तनुं शरीरम् सरसम् साद्र्रं परिमुच्य त्यक्त्वा पततां पक्षिणाम् बहुशः बहून् वारान् ककुभो दिशः पततां गच्छताम् उदितैः शब्दितैः वदेर्यजादित्वात्सम्प्रसारणम् सकलैः समस्तैः सकलैः माधुर्य्यवद्भिः कलशब्दस्य गुणमात्रवृत्तित्वेऽपि तद्वति वर्त्तते ततश्च सहशब्देन समासो भवति करुणैः कारुण्यजनकैः रुदितैरिव क्रन्दितैरिव परितः समन्तात् खमाकाशम् विततम् व्याप्तम् । पदादियमकमिति पदानामादौ यमितत्वात् ॥ ४ ॥ ज० म०

न च काञ्चन काञ्चनसञ्चितिं न कपिः शिखिना शिखिनासमयीत्
न च न द्रवता द्रवता परितो हिमहानकृता न कृता क्वचन ॥ ५ ॥

पादमध्ययमकम् ।

---

सरसामित्यादि । सरसां जलाशयानां सरसां आर्द्रां स्निग्धां तनुं शरीरं जलाशयमध्यं परित्यज्य भयात् त्यक्त्वा बहुशो बहून् वारान् ककुभो दिशः पतताम् गच्छताम् पक्षिणाम् उदितैः शब्दितैः खमाकाशम् परितः सर्व्वतो निचितम् व्याप्तं रुदितैरिव क्रन्दितैरिव सकलैः सम्पूर्णैः सकलैरव्यक्तमधुरैः कलशब्दोऽव्यक्तमधुरवचन. किम्वा सर्व्वैरुदितैर्वचनैरव्यक्त-मधुरध्वनियुक्तैरित्यर्थः वाक्यसमुदायस्यावयवयोगात् करुणैः कारुण्य-जनकैः केचित्तु सरसाम् सम्बन्धिनाम् पतताम् सरसाम् तनुं परित्यज्य भयात् परिशोष्येत्याहुः वदेः क्तो यजादित्वात् सम्प्रसारणम् । रुदितानि जिः तोटकनामवृत्तं तल्लक्षणं यथा वद तोटकमब्धिसकारयुतम् । पादादियमकमिति चतुर्णां पादानामादौ यमकितत्वात् ॥ ४ ॥ भ०

न चेत्यादि । काञ्चनसञ्चितिं सौवर्णेष्टकसंहतिम् काञ्चन काञ्चिदपि शिखिना अग्निना शिखिना ज्वालावता न कपिर्न च समयीत् न च न मिश्रितवान् अपि तु संश्लेषं नीतवान् यौतेर्लुङि उतो वृद्धि-लुकि हलीति वृद्धिः क च कश्चिन्नाम हिमहानकृता हिमहानस्य हिमा-पचयस्य कर्त्री शिखिना जहातेर्भावे ल्युट् न च न द्रवता न च न विसर्पता अपि तु द्रुतस्ततो गच्छता द्रवता द्रवभावः परितः न न कृता किन्तु कृतैव काञ्चनसञ्चितेरित्यर्थात् । पादमध्ययमकमिति पादानां मध्ये यमितत्वात् ॥ ५ ॥ ज० म०

न चेत्यादि । कपिर्हनूमान् काञ्चन काञ्चनसञ्चितिं सौवर्णेष्टक-संहतिम् शिखिना अतिशयितशिखायुक्तेन जाज्वल्यमानेन शिखिना वह्निना न समयौत् इति न अवश्यमेव समयौत् मिश्रितवान् युञ् मिश्रणे धौ रपिहस्तुतोऽह्ने स्निरिति स्निः अभिधानात् विभक्त्यन्तात् किमश्चिन्नाविप्येते हिमहानकृता वह्निना परितः सर्व्वतो न च न

अवसितं हसितं प्रसितं मुदा
विलसितं ह्रसितं स्मरभासितम् ।
न समदाः प्रमदा हतसम्मदाः
पुरहितं विहितं न समीहितम् ॥ ६ ॥

चक्रवालयमकम् ।

---

द्रवता अपि तु गच्छता सता क्वचन कुत्रापि काञ्चनसञ्चितैर्द्रवता द्रवत्वम् न कृता अपि तु कृतैव द्रुगतौ यत् द्रवस्य भाव इति तः छिमस्य छानम् नाशम् करोतीति क्विप् छानमिति जहातेरनटि रूपम् । पाद-मध्ययमकमिति चतुर्णां पादानां मध्ये यमकितत्वात् ॥ ५ ॥ भ०

अवेत्यादि । हसितं यत्प्रसितं सन्ततप्रवृत्त नित्यप्रमुदितत्वात्तत्रत्य-जनस्य तदभिषङ्गादवसित अपगतं षोऽन्तकर्म्मणीत्यस्य द्यतिस्यतीतीत्वं मुदा हर्षेण यद्विलसितं शृङ्गारविचेष्टितं लसित श्लिष्टमनुबद्धमिति यावत् स्मरभासित सन्धुक्षदीपितं ह्रसितं अल्पीकृतं प्रमदाश्च स्त्रियः न समदाः सदर्पा न जाताः हृतसंमदाः ध्वस्तहर्षाः प्रमदसम्मदौ हर्षे इति निपातनं यच्च पुरहित पुरानुकूलं समीहितं कस्तुरीप्सितं तच्च विहितं नानुष्ठितमित्यर्थः । चक्रवालयमकमिति मण्डलाकारेण यमितत्वात् तथाहि द्वयोर्द्वयोः पदयोरन्त्यवर्णानां नेमिवदवस्थितत्वात् मध्यस्य वर्णस्याविसदृशस्य नेमिवदिति । तथाचास्य लक्षणं पदानामवसाने तु वाक्ये स्यात्तुल्यवर्णता । प्रतिपाद भवेद्यत्र चक्रवालं तदुच्यत इति ॥६॥ ज०म०

अवेत्यादि । मुदा हर्षेण यद्धसितं हास्यं प्रसितम् अत्यन्तप्रवृत्त-मासीत् तदवसितं विनष्टम् तत्रत्यलोकानामप्रमुदितत्वात् षोयन्तःशे अकर्म्मकत्वात् गत्यर्थाकर्मकेत्यादिना कर्त्तरि क्तः दोषोमास्थामिति इः, प्रसितमिति षिञ्बन्धने इत्यस्य रूपम् किञ्च मुदा यत् विलसितं विलासः शृङ्गारचेष्टितं स्मरेण कामेन भासितं उद्दीपितं लसितं संश्लिष्ट-मासीत् तदप्यवसितमिति सम्बन्धः लषश्लिषक्रीडे ह्रसितमिति पाठे

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा ।
समिद्धशरणादीप्ता देहे लङ्कामतेश्वरा ॥ ७ ॥
समुद्गयमकम् ।

---

विलसितमल्लीभूतं प्रमदाश्च स्त्रियो न समदाः न सदर्पाः यतो हृतसम्मदा नष्टहर्षा जाताः धजलनट इति मदेरल् यत्र पुरहितं नगरानुकूलं समीहितं कर्त्तुमिष्टं तन्न विहितं नानुष्ठितम् । चक्रवालयमकमिति मण्डलाकारेण यमकितत्वात्तथाहि सर्व्वेषां पादानां अन्त्यवर्णानां सदृश-तया नेमिवदवस्थितत्वात् मध्यस्य वर्णस्य च विसदृशस्य नाभिवदवस्थित-त्वात् । मण्डलाकारतालक्षणं यथा पादानामवसाने तु सर्व्वेषां तुल्य-रूपता । प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यत इति ॥ ६ ॥ भ०

समिद्धेत्यादि । देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा ततएव दीप्ता शोभावती लङ्का पुरी मतेश्वरा ज्ञातमहादेवा तत्रान्य-देवस्य नामापि न गृह्यते समिधोदधति ज्वलतन्तीवेति समिद्धा ऋषयः पूर्व्वस्मादातोऽनुप सर्गे क इति क. द्वितीयस्मादन्येष्वपि दृश्यत इति डः अपिशब्दस्य सर्व्वोपाधिव्यभिचारार्थत्वात् धात्वन्तरादपि भवति झयो-होऽन्यतरस्यामिति पूर्व्वसवर्णः तान् शृणन्ति हिंसन्तीति कृत्यल्युटो-बहुलमिति कर्त्तरिल्युट् समिद्धशरणा राक्षसास्तान् दानमानाभ्यामा-दीपयति प्रोत्साहयतीति क्विप् समिद्धशरणा दीप्तेन रावणेन ताय्यते पाल्यत इति तायतेः कर्म्मणि कारके विवक्षिते संपदादिदर्शनात् क्विप् वेरपृक्तस्येति लोपात्पूर्व्वं लोपोव्योर्व्वलीति लोपः समिद्धशरणा दीप्ता रावणस्य पालनीया समिद्धशरणा दीप्ता लङ्का देहे दग्धा अलङ्कामो-ऽस्येत्यलङ्कामः तद्भावः अलङ्कामता तस्यामलङ्कामतायां पर्य्याप्तेच्छायां ईश्वरा लङ्का सर्व्वेच्छासम्पादनात् । समुद्गयमकमिति समुद्गाकारेण यमितत्वात् पादद्वययोरर्द्धद्वययोश्च सपुटवत्सादृश्यात् ॥ ७ ॥ ज० म०

समिद्धेत्यादि । लङ्का देहे दग्धा अर्थात् हनूमता कर्म्मणि ठी कीदृशी देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा शरणं गृह-

पिशिताशिनामनुदिशं स्फुटताम्
स्फुटतां जगाम परिविह्वलता।

---

रक्षिलोरित्यमरः। अतएव दीप्ता शोभावती मतेश्वरा मतो ज्ञात ईश्वरो महादेवो यस्यां तत्रान्यदेवस्य नामापि न ज्ञायते इति भावः। मतः पूजित इति वा पुनः कीदृशी समिद्धशरणा दीप्ता समिधो दधातीति आदन्तत्वात् जनजनादिति डः किंवा समिधो जुहोतीति तेनैव गमादित्वात् डः समिद्धो मुनिः तं शृणन्ति हिंसन्तीति समिद्धशरणा राक्षसाः शृक्षगिहिंसने कभावेऽमो इति कर्त्तर्य्यनट् नन्द्यादित्वाद्वा तान् मानदानाभ्यामदीपयतीति कर्त्तरि क्विप् समिद्धशरण.दीप् रावणः तेन ताय्यते पाल्यते इति कर्म्मणि क्विप् तायृङ्पालनसन्तत्योः व्योर्लोपोऽस्य इति यलोपः समिद्धशरणादीपो रावणस्य पालनीयेत्यर्थः किं वा समिद्धानां दीप्तिमतां देवादीनां शरणेन हिंसनेन अदीपं दीप्तप्रभावं तायते पालयति सन्तनुते वेति भावे क्विप् दीपन दीविति भावे क्विप् पश्चान्नञ् समास अलङ्कामतेश्वरा अलङ्कामतायां यथेष्टेच्छायां ईश्वरा सर्व्वेच्छायाः सम्पादयित्रीत्यर्थः अलमत्यर्थः कामोऽस्य अलङ्कामः तस्य भावोऽलङ्कामता तस्यामीश्वरेति सप्तमीसमासः वरप्रत्ययान्तादीश्वरशब्दात् स्त्रियामत आबिग्राप् भवत्येव औणादिकवरट्प्रत्ययान्तात्तु ईप् प्रत्यय इति बोध्यं श्रीपतिस्वरसात् नदादावीश्वरशब्दं विभाषया पठन्त्यन्ये। शोभादिरयमित्यपरे यद्वा लङ्काभिः कुलटाभिर्मतः पूजित ईश्वरो यत्र यद्वा अलमत्यर्थं कामत ईषन्मत ईश्वरोयत्र कोरीपदर्थे इति कुशब्दस्य कादेशः लङ्का रक्षःपुरी शाखा डाकिनी कुलटासु चेति विश्वः। समुद्गयमकमिति द्वयोरर्द्धयोः सम्पुटाकारेण यमकितत्वात् तथाच रुद्रभटः अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नामेति अर्द्धाभ्यासः समुद्गः स्यादिति दण्डी॥ ७॥ भ०

पिशिताशिनामित्यादि। पिशिताशिनां मांसाशिनां राक्षसानामनुदिशं दिशि दिशि अव्ययीभावे शरत्प्रभृतिभ्य इति टच् स्फुटतां पलायमानानां परिविह्वलता स्फुटतां स्पष्टतां जगाम जनेन चेतरेण

ह्वलता जनेन बहुधाचरितम्
चरितं महत्त्वरहितं महता ॥ ८ ॥

काञ्चीयमकम् ।

न गजा नगजा दयिता दयिता विगतं विगतं ललितं ललितम् ।

---

ह्वलता चलता महता शौर्य्यादिगुणयुक्तेनापि सता यच्चरितं चेष्टित बहुधा बहुप्रकारं तन्महत्त्वरहितं महता विकलमाचरितं अनुष्ठितं भयात् । काञ्चीयमकमिति रसनाकारेण यमितत्वात् तथाद्यपादस्यान्ते परस्यादौ च सदृशो विन्यासः ॥ ८ ॥ ज० म०

पिशितेत्यादि । पिशिताशिनां राक्षसानां परिविह्वलता व्याकुलता स्फुटतां स्पष्टतां जगाम किम्भूर्वतां अनुदिशं दिशि दिशि स्फुटतां पलायनेन विकाशं गच्छतां स्फुटशिविकाशे अनुशब्देन वीप्सायामव्ययीभावे शरद्विपाडय इति अप्रत्ययः महता शौर्य्यादिगुणयुक्तेनाप्यपरेण जनेन ह्वलता चलता महत्त्वरहितं माहात्म्यविवर्जितं चरितं चेष्टितं बहुधा बहुप्रकारैराचरितं कृत भयात् ह्वलह्मलचाले । काञ्चीयमकमिति रसनाकारेण यमकितत्वात् तथाच एकस्यान्ते परस्यादौ सदृशं दृश्यते यदि । तत्काञ्चीयमकं नाम व्याहृतं कविपुङ्गवैरिति एतदेव दण्डिना सन्दष्टयमकमुक्तं तथाहि सन्दष्टयमकस्थानमन्तादीपादयोर्द्वयोरिति ॥ ८ ॥ भ०

न गजेत्यादि । गजा हस्तिनः नगजाः पर्व्वतजाताः अतएव दयिता दृष्टा न दयिताः न रक्षिताः दयतिरत्र रक्षणार्थः विगतं वीनां पक्षिणाङ्गतं गमनमपि विगतं नष्टं ललितं यदीप्सितं वस्तु तल्ललित पीडितं प्रमदा योषित् प्रमदा प्रगतो मदो यस्या इति प्रमदा हर्षशून्येत्यर्थः आमहता रोगपीडितेव आमोरोग इव शब्दलोपोऽत्र द्रष्टव्य अमेन पीडिता पलायनहता वा अमोगत्यादिषु महतां शूराणां अरण अविद्यमानयुद्धं मरणं विनाशनं समयात् सम्याप्र यातेर्लङि रूप समय त कालेन । यमकावलीति यमकमाला ॥ ९ ॥ ज० म०

प्रमदा प्रमदा महता महता मरणं मरणं समयात्समयात् ॥ ९॥

यमकावली।

न वानरैः पराक्रान्तां महद्भिर्भीमविक्रमैः।

---

न गेत्यादि। गजा हस्तिनो न दयिता न रक्षिताः जिदयङ् यङ्ग्रहणे गतौ वधेदानेऽवने कीदृशाः नगजाः पर्व्वतजाः तेनोत्कृष्टा- अतएवदयिता दृष्टाः परञ्च विगतं वीनां पक्षिणां गत गमन विगतं विनष्टं अग्निदग्धपक्षत्वात् ललितमीप्सितं वस्तु हारभेदो वा ललितं चलितं भयाकुलजनसंसर्गादन्यत्र गतमित्यर्थः ललितं हारभेदे स्यादीप्सिते चलितेऽपि चेति विश्वः। प्रमदा नारी अप्रमदा प्रमदरहिता हर्षशून्या इत्यर्थः प्रगतमदा वा आमहता रोगपीडितेव इवशब्दाद्यर्थोऽत्र गम्यते अमकुरोगे घञ् यद्वा अमेन गमनेन हता पीडिता यद्वा अमेन दाहेन हाहाकारशब्देन वह्निशब्देन वा हता व्याकुला अमगतौ शब्दे महतां शूराणां अरणं युद्धरहितं मरणं समयात् कालवशात् समयात् सम्प्राप्तं यातेर्धौ यद्वा महतां जनानाम् अह खेदेऽद्भुते निश्चये वा तां प्रमदां समयात् समीपे समयात् कालेन युद्धरहितम् मरणं स्यात् आगत अत सा तत्यगमने इत्यस्मात् आ.ङ्पूर्व्वात् क्विप् स्त्रियं हित्वा यतो न गच्छन्ती- त्यर्थः। यमकावलीति यमकमाला तथाहि पदेषु यत्र सर्वेषु सादृश्यं दृश्यते यदि। यमकावलिरुद्दिष्टा श्लिष्टा यमककोविदैरिति ॥ ९ ॥ भ०

नवेत्यादि। वानरैरन्यैर्महद्भिर्महाप्राणैर्भीमविक्रमैः असह्यशौर्य्यैः शक्रादिभिः न पराक्रान्तां नावष्टब्धां नगरीं लङ्कां नरैर्मनुष्यैर्नैव पराक्रान्तां विग्टहीतां कपिर्हनूमान् ददाह दग्धवान्। अयुक्पादय- मकमिति। प्रथमतृतीययोर्यमितत्वात् ॥ १० ॥ ज० म०

नवेत्यादि। कपिर्हनूमान् नगरीं ददाह दग्धवान् नगरीं कीदृशीं वानरैर्वालिसुग्रीवादिभिर्न पराक्रान्तां न गतां सर्व्वैर्मनुष्यैः कार्त्त- वीर्य्यादिभिर्न पराक्रान्तां न विग्टहीतां किम्बा अनरैर्मनुष्यभिन्नैर्देव- यक्षादिभिरपि नवा पराक्रान्तां न च विग्टहीतां कीदृशैर्महद्भिर्महा-

नवा नरैः पराक्रान्तां ददाह नगरीं कपिः ॥ १० ॥

अयुग्मपादयमकम् ।

द्रुतं द्रुतं वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितम् ।
समं समन्तादपगोपुरं पुरं परैः परैरप्यनिराकृतं कृतम् ॥ ११ ॥

पादाद्यन्तयमकम् ।

---

प्रमाथैर्भीमविक्रमैर्भीमशौर्यैः शिवतुल्यपराक्रमैर्वा । अयुक्पादयमक-मिति । अयुजोः प्रथमतृतीययोर्यमकितत्वात् ॥ १० ॥ भ०

द्रुतमित्यादि । यत्पुरं चितं सौवर्णष्टहसंहत्या व्याप्तं तद्वह्नि-समागतं अग्निसंयुक्तं द्रुतं विलीनं द्रुतं प्रवाहेण प्रवृत्तं द्रुतं शीघ्रं अही-नया उत्कृष्टया द्युत्या तेजसा रोचितं भासितं महीकृतं प्राप्तं अपगोपुरं अपगतपुरद्वारं अतएव समन्तात्सर्व्वतः समं तुल्यं कृतं परैः शत्रुभिः परैरपि उत्कृष्टैरपि शक्रादिभिरनिराकृतं अनभिभूतं सत् । पादाद्यन्त-यमकमिति पादस्यादावन्ते च यमितत्वात् ॥ ११ ! ज० म०

द्रुतमित्यादि । पुरं लङ्कां समन्तात् सर्व्वतः समं भूमितुल्यं कृतं उच्चानां द्रुतत्वात् कीदृशं द्रुतं शीघ्रं द्रुतं द्रवीभूतं यतो वह्निसमागतं अग्निसंयुक्तं महीं भूमिं गतं प्रवाहेण प्राप्तमहीनद्युतिरोचितं अहीनया उत्कृष्टया द्युत्या दीप्त्या रोचितं शोभितं अहीनद्युतिना रावणेन रोचितं अभिलषितमिति केचित् । चितं स्वर्णष्टहादिभिर्व्याप्तं अतएव वह्नियोगे द्रवत्वयुक्तं अपगोपुरं अपगतपुरद्वारं परैरुत्कृष्टैरपि परैः शत्रुभिरिन्द्रादिभिरनिराकृतं अनभिभूतं द्रुतं शीघ्रे विलीने च बिद्राणे चाभिधेयवदिति विश्वः । पादाद्यन्तयमकमिति पादस्यादावन्ते च यम-कितत्वात् ॥ ११ ॥ भ०

नश्यत्यादि । अबलानां स्त्रीणां अबलानां अविद्यमानरक्षकाणां वृन्दानि समूहान् हारीणि हारवन्ति हारीणि अवश्यं हरन्ति आव-श्यके णिनिः चेतसङ्गत्यर्थात् नश्यन्ति पलायमानानि सन्ति कपीन्द्रो

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः।
हारीण्यबलानां हारीण्यबलानाम्॥ १२॥
मिथुनयमकम्।
नारीणामपनुनुदुर्न देहखेदा-
न्नारीणामलसलिला हिरण्यवाप्यः।

---

ददर्श। मिथुनयमकमिति पादद्वयस्य चक्रवाकमिथुनवदवस्थित-त्वात्॥ १२॥ ज० म०

नश्यन्तीत्यादि। कपीन्द्रो हनूमान् अबलानां स्त्रीणां वृन्दानि समूहान् ददर्श दृष्टवान् कीदृशानि नश्यन्ति नाशं प्राप्नुवन्ति पलाय-मानानि वा हारीणि हारयुक्तानि हारीणि मनोहारीणि घञादि-त्वात् णिन् अवश्यं हरन्तीति आवश्यके णिन्निति परः। कीदृशानां अबलानां अविद्यमानरक्षकाणां अतिकृशानां वा। तनुमध्या छन्दः लक्षणं यथा त्यौचेत्तनुमध्या। मिथुनयमकमिति पादद्वयस्य चक्रवाक-युगलवत् स्थितत्वात्॥ १२। भ०

नारीत्यादि। अरीणां सम्बन्धिन्यो हिरण्यवाप्यः सुवर्णघटिता वाप्यः नारीणां स्त्रीणां अग्नितापाद्देहखेदान्नापनुनुदुः नापनीतवत्यः कुतः आरीणामलसलिलाः रीङ् स्रवण इत्यस्मादाङ्पूर्व्वात् स्वादय ओदित इति निष्ठा नत्वं आरीणङ्गतममलं सलिलं यासु हिरण्यवापी-ष्विति हृत्वांश्चोपेत्य नत्वा तासां घर्म्मं सुख नाभवत् न जातं अनल-परीतपत्रपुष्पत्वाद्वृक्षाणां आरीणां नारीणामिति योज्यं शत्रुसम्बन्धिनी-नामित्यर्थः अरीणामिमा इति तस्येदमित्यण् तदन्तात् टिड्ढाणञित्या-दिना ङीप् अत्र हृत्वानुपेत्य स्थितानामित्यध्याहर्त्तव्यं अन्यथा समान-कर्त्तृकत्वात् पूर्व्वकाले क्त्वाप्रत्ययो न स्यात्। वृन्तयमकमिति प्रतिपदं पुष्पफलस्येव मूलेऽवस्थितत्वात्॥ १३॥ ज० म०

नारीणामित्यादि। हिरण्यवाप्यः सुवर्णस्थलनिर्म्मितदीर्घिका नारीणां स्त्रीणां देहखेदान् अग्निसन्तापजनितान् न अपनुनुदुः नाप-

नारीणामनलपरीतपत्रपुष्पा-
न्नारीणामभवदुपेत्य शर्म्म वृक्षान् ॥ १३ ॥

वृन्तयमकम् ।

अथ लुलितपतत्रिमालं लग्नासनबाणकेशरतमालम् ।

---

नीतवत्यः हिरण्यवाप्यः कीदृश्यः भारीणामलसलिलाः आरीणं द्रुतं अमलं निर्म्मलं सलिलं स्वर्णजलं यासु अग्नितेजसा स्वर्णघटिततीरस्य द्रुतत्वात् स्वर्णजलं तत्र जातमित्यर्थः अोरीङ्य चरणे आङ्पूर्व्वात् क्तः स्वृल्वाद्योदिति नः किंवा शुष्कत्वादारीणं ईषद्गतं जलं यासु रीगीवधे गतौ गत्यर्थात् कर्त्तरि क्त. ल्वादित्वात् क्तस्य नः णत्वञ्च आरीणां अरिसम्बन्धिनीनां तासां नारीणां वृक्षान् उपेत्य समीपे गत्वा स्थितानां शर्म्म सुखं नाभवत् न जात स्थितानामित्यध्याहारात् समानकर्तृकता वृक्षान् कीदृशान् अनलपरीतपत्रपुष्पान् अनलेनाग्निना परीतं व्याप्तं पत्रञ्च पुष्पञ्च येषां तान् अतएव न शर्म्म नारीणां कीदृशीनां नारीणां आपो नारा इति प्रोक्तास्तत्र भवानां ततो वा आगतानां वरुणलोका-दानीतानामित्यर्थः आरीणामिति अरिशब्दात् तस्येमा इति ष्णः शर्म्म नाभवदित्यत्र पूर्व्वतो नञनुषज्यते केचित्तु अरीणां शत्रूणां हिरण्य-वाप्य इति पूर्व्वत्र योजयन्ति नारीणां जलभवानामिति न व्याचक्षते तन्मते परार्द्धेऽपि नञ् विद्यते। क्वचित्तु पुष्पान्नारीणामिति न द्वय-संयोगवत् पाठो दृश्यते तत्र पूर्व्वोक्तव्याख्यायां न नञनुषङ्गस्तस्य विद्य-मानत्वात् केचित्तु आङ्पूर्व्वादर्त्तेरौणादिक इप्रत्यय. आ समन्तात् रीणां गच्छन्तीनामित्याहुः। प्रहर्षिणीच्छन्दः लक्षणं यथा त्र्याशाभि-र्म्नजरगाः प्रहर्षिणीयमिति। वृन्तयमकमिति प्रतिपादं पुष्पफलस्येव मूले वृन्तवदवस्थितत्वात् तथाहि पादादौ सदृश यस्य प्रतिपादं प्रदृश्यते। तद्वृन्तयमकं नाम कथ्यते कविपुङ्गवैरिति॥ १३ ॥ भ०

अथेत्यादि। दाहानन्तरं लुलितानां चलितानां पतत्रिणां पक्षिणां

सवनं विविक्तमालं सीतां द्रष्टुं जगामालम्॥ १४॥

पुष्पयमकम्।

---

माला संहतिर्यस्मिन् तद्वनमशोकवनिकाख्यं स कपिर्जगाम रुग्नाः भग्नाः असनादयो यस्मिन् वने तत्रासनः पीतसालः वाणः ग्रन्थिका केशरो नागकेशरो देववल्लभो वा विविक्ताः शुचयो मालाः स्रजो यस्मिन् तद्विविक्तमालं सीतां द्रष्टुं अलं पर्य्याप्तौ सीतां द्रक्ष्यामीति जगाम। पुष्पयमकमिति प्रतिपादं छन्दादुपरि पुष्पमिवावस्थित-त्वात्॥ १४॥ ज० म०

अथेत्यादि। अथ दाहानन्तरं स हनूमान् अल पर्य्याप्तं सीतां द्रष्टुं वन अशोकवनिकां जगाम वनं कीदृशं लुलितपतत्रिमालं लुलिता चलिता पतत्रिणां पक्षिणां माला संहतिर्यत्र यद्यपि छन्दःशास्त्रे सानुस्वारस्य गुरुत्वमनुशिष्टं तथापि तथा पादान्तगोऽपि वेति वचना-त्तस्य लघुत्वात् प्रथमपादे द्वादशमात्रा भवन्ति किन्तु भवति नेह विषमेज इत्यार्य्यायां प्रायिकं तृतीयगणस्यात्र मध्यगुरुत्वात् सत्तगणादौ इत्या-जोनलहृक्वटसेऽजोविषम इत्यत्र नञः प्रशंसापरत्वमिति टीकाकृतोक्तं जापचमती यपञ्चवस ओट्ठाणेन ह्रो दगुरुमजखा गुव्विणीए गुणवहि आगहो देसियआसेद इत्यनेन अप्राशस्त्योक्तत्वात् नतु विषमस्यजगणे लक्षणवहिर्भूता गाथा भवन्तीति वस्तुतः पत्निमालमिति पाठः मध्ये तकारपाठो लेखकप्रमादात् रुग्णा भग्ना असनादयो यत्र वने असनः पीतसालः वाणोञ्झिण्टीविशेषः केशरं हिङ्गुलि प्रोक्तं केशरो नाग-केशरे सिंहछटायां किञ्जल्कपुन्नागवकुलेष्वपीति विश्वः। तमालः स्वनाम-ख्यातः विविक्ताः पृथग्भूता मालाः स्रजः पङ्क्तयो यत्र तत्तथा विविक्तः आदरस्पृक्ते विविक्तः शुभभूतयोः। चारुवह्निर्मिते धौरे-विविक्तं रहसि स्मृतमिति विश्वः। पुष्पयमकमिति प्रतिपादान्ते छन्दोपरि पुष्पवत् स्थितत्वात्॥ १४॥ भ०

घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकात्मजा तरुमृगेण तरुस्थलशायिनी ॥१५॥
पादादिमध्ययमकम् ।

---

घनेत्यादि । तरुमृगेण कपिना जनकात्मजा ददृशे दृष्टा घनाः निरन्तराः ये गिरीन्द्राः मेघसदृशा वा तेषां यल्लङ्घनं अतिक्रमणं तेन शालिना युक्तेन कपिना वनगता काननस्था वनजद्युतिलोचना पद्मस्येव कान्तिर्ययोर्लोचनयोः ते तथाविधे लोचने यस्याः नक्रोडादि-वक्‌च इति ङीप्‌प्रतिषेधः जनमता जनेनावबुद्धा पतिव्रतेयमिति मनु अवबोधन इत्यस्य भूते निष्ठायां रूपं न लोकेति षष्ठीप्रतिषेधः कर्त्तरि तृतीया तस्याश्च कर्तृकरणे इति समासः वर्त्तमाने तु मति-बुद्धीत्यादिना क्तप्रत्ययः क्तस्य च वर्त्तमान इति षष्ठी तस्याश्च क्तेन च पूजायामिति समासप्रतिषेधः स्यात् तरुस्थलशायिनी तरुमूले यत् स्थलं तत्रैव शयाना सत्यपि शयने तेन व्रत इति णिनिः । आदि-मध्ययमकमिति पादानामादौ मध्ये च घनवनजनतरुशब्दानां यमि-तत्वात् ॥ १५ ॥ ज० म०

घनेत्यादि । तेन तरुमृगेण कपिना तरुस्थलशायिनी जनकात्मजा ददृशे कर्मणि रूपं तेन कीदृशेन घनगिरीन्द्रविलङ्घनशालिना घना निविड़ा ये गिरीन्द्राः पर्व्वतास्तेषां विलङ्घनं विद्यतेऽस्येति अस्त्यर्थे शालिनुप्रत्ययो बोध्य इति शाब्दिकाः यद्वा तेषां विलङ्घनेन शाडितुं शोभितुं शीलं यस्य शाड़ु श्लाघायां णिनिः डलयोरलयोश्चेति लत्वं कीदृशी वनगता अशोकवनिका स्थिता पुनः कीदृशी वनजद्युतिलोचना वने जले जायते इति गमादित्वात् डः वनजं पद्मं कैरवं वा तस्येव द्युतिर्ययोस्तादृशे लोचने यस्याः सा वनं सलिलकानन इत्यमरः पुनः कीदृशी जनेन मता ज्ञाता पतिव्रतात्वेन पूजिता या नतु जनानामिति षष्ठी तथाचोक्तं कारकषष्ठी न समस्यते इति न्यायात् ज्ञानेच्छापूजेति क्तः तद्योगे प्राप्तापि षष्ठी न स्यात् अथास्यानित्यता च दृश्यत इति

कान्ता सहमाना दुःखं च्युतभूषा।
रामस्य वियुक्ता कान्ता सहमाना॥ १६॥

विपथयमकम्।

मितमवददुदारं तां हनूमान्मुदारम्
रघुवृषभसकाशं यामि देवि! प्रकाशम्।

---

न्यायात् यद्वा वर्त्तमाने क्तो नातीतक्तस्य बाधक इति अतीते वा क्तस्तत्र चकारात् मनुबोधने धातूनामनेकार्थत्वात् पूजार्थेऽप्यस्य प्रयोगः। आदिमध्ययमकमिति प्रतिपादमादिमध्ययोस्तुल्यत्वात्॥ १५॥ भ०

कान्तेत्यादि। कान्ता कमनीया सहमाना वेदयमाना दुःखं वियोगजं च्युतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना सह मानेन वर्त्तत इति वोपसर्जनस्येति सभावविकल्पः दृष्ट इति सम्बन्धः। विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमितत्वात्॥ १६॥ ज० म०॥

कान्तेत्यादि। जनकात्मजा सीता कीदृशी ददृशे कान्ता कमनीया दुःखं वियोगज सहमाना तत्कृतोद्वेगं न करोतीत्यर्थः च्युतभूषणा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी सहमाना मानेन चित्तसमुन्नत्या पूजया वा सहिता। विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमकितत्वात् तनुमध्याच्छन्दः॥ १६॥ भ०

मितमित्यादि। मितं अल्पाक्षरं अर्थावगाढं तां सीतां हनूमान् मुदा हर्षेण युक्तः अवदत् कथितवान् किमित्याह अरं शीघ्रं हे देवि! रघुवृषभसकाशं रामसमीपं माल्यवन्तं पर्व्वतं प्रकाश प्रकटं यामि तव विदितविषादो ज्ञातावसादः दृष्टकृत् सम्यगामिषादः वीक्षिताशेषनिशाचरः आमिषं मांसमदन्तीति कर्म्मण्यण् वासरूपोऽस्त्रियामिति वचनात् अदोऽनन्न इति विट्प्रत्ययेनाण्णोविकल्पेन बाधनात् श्रियं शोभां अनिशमवन्तं

तव विदितविषादो दृष्टकृत्स्नामिषादः
श्रियमनिशमवन्तं पर्व्वतं माल्यवन्तम् ॥ १७ ॥

मध्यान्तयमकम् ।

उदपतद्वियदप्रगमः परैरुचिरमुन्नतिमत्पृथुसत्ववत् ।

---

रवन्तं पर्व्वतम् । मध्यान्तयमकमिति पादस्य मध्ये अन्ते च यमितत्वात् ॥ १७ ॥ ज० म०

मितमित्यादि । हनूमान् मुदा हर्षेण मितमल्पाक्षरमुदारं गम्भीरार्थं तां अवदत् किमित्याह हे देवि ! अरं शीघ्रं रघुवृषभस्य रघुश्रेष्ठस्य सकाशं समीप माल्यवन्तं पर्व्वतं प्रकाशं यथास्यात्तथा यामि तव विदितो ज्ञातो विषादो येन विषादस्य नित्यसापेक्षत्वात् समासः दृष्टः कृत्स्नः सकल आमिषादो राक्षसो येन स तथा अनिशं सतत श्रियं शोभामवन्तं माल्यवन्तंनाम पर्वतम् । मध्यान्तयमकमिति मध्यान्तपादयोर्यमितत्वात् । मालिनीवृत्तम् ॥ १७ ॥ भ०

उदपतदित्यादि । वियदाकाशमुदपतत् उत्पपात परैः शत्रुभि-रप्रगमः अनभिभवनीयः गमेः प्रहृष्टनिम्भिनमज्जेति कर्म्मण्यप् कर्तृकर्म्मणोः कृतीत्यत्र विभाषोपसर्ग इति मण्डूकप्लुत्या अनुवर्त्तनीयं सोपसर्गस्य प्रयोगे विभाषा षष्ठी रुचितं शोभितं वियन्निर्मलत्वात् अथवा अप्रगमोऽन्येषामित्यर्थात् परैरुत्कृष्टैरन्तरीक्षचारिभिः रुचितं दीपितं उन्नमितवत् उच्छ्राययुक्तं पृथुसत्त्ववद्भिः प्राणिभिर्युक्तं किं कृत्वा उदपतदित्याह वपुः शरीर प्रतिविधाय कृत्वा रुचितान् तुष्टान्मोदयतीति रुचितमुत् गत्यर्थोऽन्तान्तर्भूतः द्विषां शत्रूणां भयद नतिमत् तदानीं देवेषु कृतशिरः प्रणामत्वात् अथवा रुचिरमेवाभीष्टमेव वपुः उन्नतिमत् विभूतिमत् पृथुसत्त्ववत् विस्तीर्णसत्त्ववत् सत्त्वगुणयुक्तं वा । गर्भयमकमिति द्वयोः पादयोर्मध्ये पादद्वयस्य यमितत्वात् ॥ १८ ॥ ज० म०

उदपतदित्यादि । कपिर्वियदाकाशमुदपतत् उत्पपात कीदृशः परैः शत्रुभिरप्रगमोऽनभिभवनीयः न प्रगम्यतेऽसौ अप्रगमः यद्वा परै. सह

रुचिरमुन्नतिमत् पृथुसत्त्ववत्प्रतिविधाय वपुर्भयदं द्विषाम्॥ १८॥

गर्भयमकम्।

बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः।

---

नास्ति प्रकृष्टं गमनं यस्येत्यर्थः अतिशीघ्रगामित्वात् कीदृशं वियत् परैस्तत्कृष्टैरन्तरीक्षगामिभिः रुचिर दीपितं पुनः कीदृशं उन्नतिमत् उच्छ्राययुक्तं पृथुसत्त्ववत् महाप्राणियुक्तं उन्नतिमदिति तत्त्वविशेषणं वा किं कृत्वोदपतदित्याह द्विषां शत्रूणां भयदं वपुः रुचिरस्तुत् रुचिरान् दृष्टान् मोदते इति क्विप् नतिमत् तदानीं देवेषु कृतप्रणामत्वात् गर्भयमकमिति मध्यपादद्वयस्य यमितत्वात्॥ १८॥ भ०

बभावित्यादि। मरुत्वान् हनूमान् पितृत्वेन मरुद्विद्यते अस्येति कृत्वा मप इति वत्वं विविधं कृत वनभङ्गादि कर्म येन विविधं वा कृन्ततीति विकृतः इगुपधलक्षणः कः वृक्षादीनां च्छेदक इत्यर्थः समुद्रो मुद्रयाभिज्ञानेन चूडामणिना सह वर्त्तत इति समुत्पतितो नभसि तेजःपुञ्ज इव बभौ दीप्यतेस्म इत्यर्थं प्रथमः पादः। तस्मिन् तथाभूते मरुत्वानिन्द्रः अनुजीवितया मरुतो देवा अस्य सन्तीति कृत्वा विकृतः रावणपरिभवात् विकृतदेवाधिपत्यः विकृतः स च समुद्रः मुद्रया अप्सरसा सह वर्त्तमानः समुपलब्धमारुतिवृत्तान्तः बभौ हृष्टवान् कपिना तावदिदं कृतं रामः पुनः समूलं छेत्स्यतीति अनेकार्थत्वाद्धातूनां भातिरत्र तुष्टौ वर्त्तते इत्यथ द्वितीयः। समुद्रो जलनिधिः मरुत्वान् हनूमदुत्पतनजनितवायुना युक्तः अतएव विकृतोऽतिक्रान्तमर्य्यादः बभौ बभूव अत्र सत्तायां प्रयुक्तः इत्यथ तृतीयः सलोकपालो मरुत्वान् महाभूतात्मकेन युक्तः मरुत्वान् पूर्ववन्मतुप् मरुत्‌वानिति व्याख्याने जलाञ्जयोऽन्त इति जश् स्यात् मुदो हर्षस्य दाता पुत्रो मे सुखेन यास्यतीति मुद राति प्रदातीति आतोऽनुपसर्गे कः विकृतो मन्दगतिः बभौ वाति स्म अत्र गतौ प्रयुक्तः इत्यर्थं चतुर्थः अत्यस्वाह यमकेषु क्रियापदस्याभिधेयत्वं न दुष्यतीति तेन दीप्त्यर्थ एव योज्यः। सर्व्वयमकमिति चतुर्णामपि पादानां सदृशत्वात्॥ १९॥ ज० म०

बभावित्यादि। मरुद्वायुः पितृत्वेन वेगजनितत्वेन वा विद्यते यस्य

वभौ मरुत्वान् विकृतः समुद्रो वभौ मरुत्वान् विकृतः समुद्रः॥१९

सर्व्वयमकम्।

---

स हनूमान् वभौ शुशुभे इत्यन्वयः कीदृशः विविधानि कृतानि वनभङ्ग-लङ्कादाहादीनि येन सः समुद्रः मुद्रया प्रत्यभिज्ञानेन चूडामणिना सहितः मुद्रा प्रत्ययकारिणीति कोष.। इति प्रथमपादार्थे। तस्मिंस्तथा-भूते सति मरुत्वानिन्द्रो वभौ तुतोष धातूनामनेकार्थत्वात् भातिरत्र तोषे कीदृशः विकृतः पराभवात् विगता क्रिया जगत्परिपालनरूपा यस्य सः समुद्रः मुद्राख्याभिरप्सरोभिः सहित इति द्वितीयपादार्थः। समुद्रः सागरोऽपि वभौ चुकोप धातूनामनेकार्थत्वाद्भातिरत्र कोपे पुनः पुन-र्वानरेण लङ्घनात् कीदृश. मरुत्वान् मरुतो देवा विद्यन्ते यस्य सः मरुतौ पवनामरावित्यमरः। अतएव विकृतः अतिक्रान्तमर्य्यादः वीन् पक्षिणः कृणत्ति वेष्टते इति विकृतः कृती ध वेष्टे पूर्व्ववत् कः अतिक्रान्तमर्य्याद-त्वात् इति तृतीयपादार्थः। वाचकत्वेन मरुच्छब्दो विद्यतेऽस्य मरुत्वान् वायुर्वभौ वाति स्म भातिरिह गत्यर्थः केचित्तु मरुद्वायुर्व्वान् गच्छन् वभौ सन्धेरनित्यत्वात् न तस्य दत्वं यदुक्तं सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः। सूत्रेष्वपि तथा नित्यः सैवान्यत्र विभाषिता इत्याहुः। स्वमते सन्धेरनित्यत्वं णवातोऽडौरित्यत्र औकरणेनैवेष्टसिद्धौ डित्करणेन ज्ञापितामिति देवीदासचक्रवर्त्तिनोक्तं कीदृशः विकृतः मन्दगतित्वात् पुत्रस्नेहादन्यथाभूतः समुद्रः समुत्सहर्षौरोऽग्निर्दस्मात् वायोरग्निसख-त्वात् किं वा स इति विशेष्यपदं स लोकपालत्वेन प्रसिद्धो वायुरित्यर्थः मुदं प्रीतिं गात्रसंसर्गात् राति ददातीति मुद्रः इत्ययं चतुर्थपादार्थः। सर्व्वत्र भातेर्दीप्त्यर्थत्वमेव युक्तमिति केचित् नैकं पदं द्विः प्रयोज्यं प्रायेणैकार्थत्वेन तेनात्र भातिर्नानार्थत्वेन प्रयुक्तो न दोषावहः। सर्व्वयमक-मिति पादचतुष्टयस्य तुल्यरूपत्वात् कण्ठाभरणेन महायमकमिदमुक्तं तथाहि एकाकारचतुष्पादं महायमकमुच्यते इति रुद्रभटमते पङ्क्तिरिति नाम तदुक्तं अन्योन्यं पश्चिमयोराहृत्त्या पादयोर्भवति पुच्छः। सर्व्वैः सार्द्धं युगपत्प्रथमस्य जायते पङ्क्तिरिति॥१९॥ भ०

अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः
कर्कशं प्रथितं धाम ससत्वं पुष्करेक्षणम्।

---

अभियातेत्यादि। भूभृतं राम वरं श्रेष्ठं तुङ्गं महाकुलीनत्वादिति सर्वेषामुपरि स्थितं गुणैरुचिरं सर्वाङ्गसुन्दरं पुरोऽग्रतो वक्षःस्थले कर्कश लोमश प्रथितं लोके प्रख्यातं धाम गृह वर्णाश्रमधर्माणां ससत्त्वं पराक्रमयोगात् पुष्करेक्षणं पद्मलोचनं अभियाता अभिमुख्येन यास्यति हनूमान् लुटिरूपं अभियातेत्यादि भूभृत पर्वतं यत्राङ्गदादयः स्थिताः तमभिया अभिगच्छता हनूमता कुतः पुरो लङ्कायाः सकाशात् पुष्करे आकाशे धाम तेजः क्षणं मुहूर्त्तं प्रथितं विस्तारितं अभियातीत्यन्येभ्योऽपि दृश्यत इति क्विप् तृतीयैकवचने आतो धातोरित्याकारलोपे अभियेति रूप कीदृशं अत.वर सातत्येनाततीति पचाद्यच् अतो वायुः आदित्यो वा आवृणोतीत्यण् आवरः अतश्चावरं यतस्तुङ्गं उच्चैस्तरं रुचिर तुष्टिदं रुचिं रातीति कर्कशं कठिनस्वभावं ससत्त्वं प्राणियुक्तं। महायमकमिति श्लोकस्यैकस्य द्वितीयेन श्लोकेन यमितत्वात्॥ २०॥ ज० म०

अभीत्यादि। अर्थादेव हनूमान् कर्त्ता भूभृतं राजानं रामं अभियाता अभिगमिष्यति लुटो रूपं यद्वा भूभृतं अभियाता अभिमुख्येन गत्वा हनूमान् बभौ भाति स्मेति पूर्वेणान्वय क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति लृट्योगेऽपि कर्मणि द्वितीया किं वा शीलार्थत्व विवक्षितं अभियोगे द्वितीया भूभृतं कीदृश वरं श्रेष्ठं तुङ्गं सर्वेषामुपरि स्थितं महाकुलीनत्वात् रुचिर सर्वाङ्गसुन्दरं पुरोऽग्रे वक्षःस्थले कर्कशं महापुरुषत्वात् कठिनं लोमश वा प्रथितं लोकविख्यातं धाम गृहं गुणानामित्यर्थात् तेजःस्वरूप वा ससत्त्वं सपराक्रमं सत्त्वगुणयुक्तं वा पुष्करेक्षणं पुष्करवत् पद्मवदीक्षणे लोचने यस्य तं किं वा युद्धार्थं पुष्कर शरं ईक्षते पश्यतीति नन्द्यादित्वादनः। अभीत्यादि तेन हनूमता पुरो लङ्कायाः सकाशात् यत्राङ्गदादयः सन्ति तं भूभृत पर्वतं अभि लक्ष्यीकृत्य याता गच्छता पुष्करे आकाशे धाम तेजः क्षण मुहूर्त्तं प्रथितं विस्ता-

अभियातावरं तुङ्गं भूभृतं रुचिरं पुरः
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम् ॥ २० ॥
महायमकम् ।

चित्रं चित्रमिवायातो विचित्रं तस्य भूभृतम् ।
हरयो वेगमासाद्य सन्त्रस्ता मुमुहुर्मुहुः ॥ २१ ॥
आद्यन्तयमकम् ।

---

रितं यातेति यातेः यत्नः भूभृतं कीदृशं वरं व्रियतेऽसौ वरं कर्मण्यप् देवादिभिरङ्गदादिभिर्वा वृतमित्यर्थः किं वा वरं श्रेष्ठं किं वा भूभृत अभि लक्ष्यीकृत्य या गच्छता यातीति याः कर्त्तरि क्विप् धोरालोपोऽच्य-धाविति टापरे आलोपः अतावर अतति सातत्येन गच्छतीति अतो वायुः सूर्य्यादिर्वा अतसातत्यगमने पचादित्वादन् आवृणोतीत्यावरः अत्रापि पचादित्वादन् अतस्यावरमिति समासः पर्वतविशेषणं यत-स्तुङ्गमत्युच्च किं वा भूभृतं अता गच्छता अततीति अत् कर्त्तरि क्विप् अभिया अविद्यमानभयेन हनूमद्विशेषणं आवरं आवृणोति अर्थात् सूर्य्यादीन् तुङ्गत्वादित्यावरं पूर्ववत् पुन. कीदृश पर्वतं रुचिरं तुष्टिद रुचिं राति ददाति हनजनादिति डः कर्कशं कठिनं पाषाणमयत्वात् ससत्त्व प्राणिभिर्हिंस्रादिभिर्युक्त पुष्करं पङ्कजे व्योम्नि पयः करिकरा-ग्रयोः । औषधद्वीपविहगतीर्थराजोरगान्तरे । पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि चेति विश्वः । महायमकमिति आद्यश्लोकस्य द्वितीय-श्लोकेन यमकितत्वात् तथाच रुद्रटः अर्द्धं पुनरावृत्तं जनयति यमकं समु-द्गकं नाम । श्लोकस्तु महायमकमिति ॥ २० ॥ भ०

चित्रमित्यादि । भूधरं पर्वतं चित्रं गैरिकादिभिर्नानावर्णं अत-एव चित्रमिवालेख्यमिव आयातः आगच्छतस्तस्य हनूमतः वेगमवच्छिन्नं अद्भुतमासाद्य प्राप्य हरयः कपयः सन्त्रस्ताः सभया मुमुहुः मुहु. अयं श्लोकाद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात् ॥ २१ ॥ ज० म०

चित्रमित्यादि । तस्य हनूमतश्चित्रमद्भुतं वेगं यमासाद्य प्राप्य हरयः

गच्छन् स वारीण्यकिरत्पयोधेः
कूलस्थितांस्तानि तरूनधुन्वन् ।

कपयः सन्त्रस्ताः सन्तो मुहुर्व्वारं वारं मुमुक्षर्मोहमुपागताः तस्य कीदृशस्य भूभृत पर्वतमायातः आगच्छतः यातैः शब्दैः कीदृशं भूभृतं विचित्रं गैरिकादिभिर्नानावर्णं अतएव चित्रमिव आलेख्यमिव आद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात् ॥ २१ ॥ भ०

अर्थालङ्कारस्तु दीपकरूपकादिभेदेनानेकप्रकारः तत्र वाक्यार्थप्रकाशनाद्दीपकमुच्यते तदादिमध्यान्तभेदात्त्रिविधमिति दर्शयन्नाह ।

गच्छन्नित्यादि । स हनूमान् वेगेन गच्छन् पयोधेर्वारीणि वेगजेन वायुना अकिरत् विक्षिप्तवान् तानि वारीणि अधिक्षिप्तानि कूलस्थितांस्तरूनधुन्वन् कम्पितवन्ति धूञ् कम्पन इति सौवादिकः ते तरवः कम्पिताः पुष्पास्तरान् पुष्पाणां प्रकरान् आस्तीर्य्यन्त इति ऋदोरप् अङ्गसुखान् मृदुस्पर्शत्वात् कायस्य सुखहेतूनतन्वन् विस्तारितवन्तः तान् पुष्पास्तरान् किन्नराः मन्मथिनः कामवन्तः अध्यतिष्ठन् अध्यासितवन्तः अधिशीङ्स्थासामित्यादिनाधिकरणस्य कर्मसंज्ञा आदिदीपकमिति क्रियापदस्यादौ श्रूयमाणत्वात् द्विविधं ह्यादिदीपक एकतिङनेकतिङ्सहितञ्च तत्र यत्पूर्वं तदेकमप्यनेकार्थप्रकाशकं यथाह भामहः मदो जनयति प्रीतिमानन्दं मानभङ्गुरं । यत्प्रियासङ्गमोत्कण्ठामसह्यां मनसः शुचमिति । यत्तु द्वितीय तत्समस्तवाक्यार्थप्रकाशक यथेदमेव तत्र ह्युत्तरेषां वाक्यार्थानामाद्येनैव दीपनात् तस्मिन्नसति शेषाणामस्फुटत्वात् पूर्वकं परित्यज्य द्वितीयस्य प्रदर्शनं यत् तत्प्रतीपदीपकं नाम चतुर्थमस्तीति दर्शनार्थं तद्यथा तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय स्वान् गुणान् कीर्त्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितमिति शेषो यदत्र परस्परमसम्बद्धमिति ॥२२॥ ज० म०

अथ शब्दालङ्कारं प्रदर्श्य अर्थालङ्कारं दर्शयति स च बहुप्रकारो रूपकदीपकादिभेदात् तत्रादौ दीपकं दर्शयति ।

पुष्पास्तरांस्तेऽङ्गसुखानतन्वन्
तान् किन्नरा मन्मथिनोऽध्यतिष्ठन् ॥ २२ ॥

आदिदीपकम्

स गिरिं तरुषण्डमण्डितं समवाप्य त्वरया लताप्लगः ।

---

गच्छन्नित्यादि । स हनूमान् गच्छन् वेगजेन वायुना पयोधे-र्व्वारीणि अकिरत् क्षयविक्षेपे तानि वारीणि विक्षिप्तानि सन्ति कूल-स्थितान् तरून् अधुन्वन् अकम्पयन् धुञ् कम्पे ते तरवः कम्पिताः सन्तः पुष्पाणामास्तरणानि अतन्वन् तनदुञ् विस्तारे अङ्गसुखान् शरीरे सुखजनकान् मृदुस्पर्शत्वात् तान् पुष्पास्तरान् किन्नरा मन्मथिनः कामिनः सन्तः अध्यतिष्ठन् अध्यवात्सुः कर्म्मक्रियेत्यादिना डस्य ढत्वं आदिदीपकमिव गच्छन्नित्यादावुपादानात् तदेव सर्व्वां क्रियां दीपयति अन्यासां तन्मूलत्वात् अकिरदिति यदादौ दत्तं तेनैवान्यासामपि क्रियाणामुद्दीपनादिति केचित् । तथाहि अकिरदिति क्रियापदेन की-र्णानि वारीणि इति योजना एवं सर्वत्र ॥ २२ ॥ भ०

स गिरिमित्यादि । सः लताप्लगो हनूमान् प्रयोजककर्त्ता गिरि-मङ्गदादिभिरध्यासितं तरुषण्डमण्डितं त्वरया वेगेन समवाप्य कपि-सैन्यैर्मुदितैर्हृष्टैः प्रयोज्यकर्तृभिः अमण्डयत् मडि भूषायामिति भौवा-दिकः चौरादिके तु कपिसैन्यैः करणभूतैरिति योज्यं मुदितत्वे कारणमाह स्मितदर्शितकार्य्यनिश्चयः ईषद्धसितप्रकटीकृतसीतोपलब्धि-निश्चयः । अन्तदीपकमिति अमण्डयदिति क्रियापदस्यान्ते निर्द्दिष्ट-त्वात् ॥ २३ ॥ ज० म०

स गिरिमित्यादि । स लताप्लगः कपिर्हनूमान् प्रयोजककर्त्ता अङ्गदादिभिरध्यासितं गिरिं त्वरया वेगेन समवाप्य मुदितैर्हृष्टैः कपिसैन्यैः प्रयोज्यैरमण्डयत् शोभयामास गिरिमिति काकाक्षिगोल-कन्यायेन उभयत्र सम्बध्यते भौवादिकमडिधातोः प्रेरणे णिः किं वा

स्मितदर्शितकार्य्यनिश्चयः कपिसैन्यैर्मुदितैरमण्डयत् ॥ २३ ॥

अन्तदीपकम् ।

गरुडानिलतिग्मरश्मयः पततां यद्यपि सम्मता जवे ।
अचिरेण कृतार्थमागतं तममन्यन्त तथाप्यतीव ते ॥ २४ ॥

मध्यदीपकम् ।

---

स लतामृगः कर्त्ता त्वरया गिरिं समवाप्य कपिसैन्यैः करणभूतैरमण्डयत् शोभते स्म चौरादिकमण्डिधातो रूपं किमण्डि भूषे गिरिं कीदृशं तरुषण्डैर्व्रजसमूहैर्मण्डितं कपिसैन्यानां मुदितत्वे हेतुमाह स्मितेति स्मितेन ईषद्धास्येन दर्शितो ज्ञापितः कार्य्यस्य सीतादर्शनरूपस्य निश्चयो येन षण्ड पद्मादिसंघाते षण्डः स्यान्नोपतावपीति विश्वः । सुन्दरी छन्दः तल्लक्षणं यथा अयुजोर्यदि सौ जगौ युजोः सभराल्लौ यदि सुन्दरी तदेति अत्र वाक्यभेदाभावेऽपि अमण्डयदित्यन्तिमक्रियापदेन सम्पूर्ण-वाक्योपकारादन्तदीपकं किं वा गिरिमवाप्य त स्वयममण्डयत् कपि-सैन्यैश्चामण्डयदिति वाक्यभेदोऽत्र मन्तव्यः ॥ २३ ॥ म०

गरुडेत्यादि। पततां गच्छतां मध्ये यद्यपि गरुडादयो जवे वेग-विषये सम्मताः अभिमताः तथापि तं हनूमन्तं अचिरेणैव कालेन कृतार्थं कृतकृत्यमागतं अतीवजविनं ते कपयः अमन्यन्त मन्यतेर्लङि रूपम् । मध्यदीपकमिति क्रियापदस्य मध्ये निर्दिष्टत्वात् ॥ २४ ॥ ज० म०

गरुडेत्यादि। गरुडवायुसूर्य्या यद्यपि पततां गच्छतां मध्ये जवे वेगविषये लोकस्य सम्मता अभिमतास्तथापि ते कपयस्तं हनूमन्तं अतीव जववन्तं अमन्यन्त ज्ञातवन्तः मन्यौङ् बोधे यतोऽचिरेणैव कालेन कृतार्थं कृतकार्य्यमागतम् । मध्यदीपकमिति सम्मता इत्यस्यामन्यन्तेत्यस्य वा क्रियापदस्य मध्ये निर्द्दिष्टत्वात् विद्यासागरस्तु जव इति कारकपदं मध्ये श्रूयमाणमतीवेत्यपि दीपयतीति कारकदीपकमिदमित्याह॥२३॥ भ०

रूपकमनेकविधं दर्शयन्नाह

व्रणकन्दरलीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः।
च्युतशोणितबद्धधातुरागः शुशुभे वानरभूधरस्तदासौ ॥२५॥
रूपकम्

---

व्रणेत्यादि। असौ वानरो भूधर इव वानरभूधरः उपमित-मित्यादिना समासः तदा तस्मिन्वानरमध्यगमनकाले क्षतार्थः शुशुभे शोभते स्म व्रणानि शस्त्रक्षतानि कन्दराणीव शस्त्राणि सर्पा इव शस्त्रसर्पाः व्रणकन्दरेषु लीनाः शस्त्रसर्पा यस्य वक्षःस्थलं कर्कशोरुभि-त्तिरिव सा पृथुला विस्तीर्णा यस्य सः शोणितं बद्धधातुराग इव स्निग्धगैरिकादिराग इव स च्युतो यस्य सर्वत्र उपमितमित्यादिना समासः। रूपकमिति सावयवेन भूधरेणोपमानेन सावयवस्य कपेरुपमेयस्य तत्स्वभावतयाध्यारोपितत्वात् यथोक्तं उपमानेन तुल्यत्वमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुरिति ॥ २५ ॥ ज० म०

व्रणेत्यादि। असौ वानरस्वरूपभूधरस्तदा वानरमध्यगमनकाले शुशुभे दीप्यते स्म कीदृशः व्रणानि शस्त्रक्षतस्वरूपाणि कन्दराणि तेषु लीनाः शस्त्रस्वरूपाः सर्पा यस्य पृथु विस्तीर्णं वक्षःस्थलमेव कर्कशोरुः कठिनोरुर्भित्तिर्यस्य शोणितमेव बद्धधातुरागः स्निग्धगैरिकादिराग-श्च्युतो यत्र रूपकमिति व्रणादीनां कन्दरादिभिरिह साद्दश्यं न वाच्यं किन्तु अभेद एव विवक्षितः स च यद्यपि बाधितस्तथापि सादृश्यातिशय-व्यञ्जनात्तथात्वं गम्यते यदुक्तं उपमैव तिरोभूतभेदा रूपकमिष्यत इति उपमानेन यत्तुल्यमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकञ्चैव तद्विदुरिति च यदि व्रणानि कन्दराणीव वानरो भूधर इवेत्युपमान-समास उच्यते तदेतदेव लुप्तोपमोदाहरणं बोद्धव्यं यद्वा उपमानस-मासेऽपि रूपकत्वमिति मते उदाहरणमिदं तथाच सरस्वतीकण्ठाभरणे यदोपमानशब्दानां गौणवृत्तिरुपाश्रया। उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुरिति ॥ २५ ॥ म०

अस्यैव भेदा अपरे चत्वारः।

चलपिङ्गलकेशरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणिसंहतयः।
कलधौतसानव इवाथ गिरेः कपयो बभुः पवनजागमने ॥२६॥

एतद्विशिष्टोपमायुक्तं रूपकम्॥

कपितोयनिधीन् प्लवङ्गमेन्दुर्मदयित्वा मधुरेण दर्शनेन।

---

चलेत्यादि। अथ पवनजागमने हनूमदागमने कपयो गिरेस्तस्यैव कलधौतसानव इव सौवर्णैकदेशा इव बभुः शोभन्ते स्म पिङ्गलकेशराणि पिङ्गलसटाः तानि हिरण्यलता इव सुवर्णलता इव ताश्चला येषां कपीनां नेत्रपङ्क्तयो मणिसंहतय इव ताः स्फुटा उज्ज्वला येषामिति एतदपि रूपकमेव किन्तु कलधौतत्वेन सानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तं कमलकं नाम॥ २६ ॥ ज० म०

चलेत्यादि। अथानन्तरं कपयोऽङ्गदादयः पवनजस्य हनूमत आगमने बभुः शोभन्ते स्म तस्यैव गिरेः कलधौतसानव इव स्वर्णसानव इव कलधौतं रूप्यहेम्नोरिति विश्वः। कीदृशाः पिङ्गलकेशराणि कपिलसटा एव हिरण्यलतास्ताश्चलाश्चञ्चला येषां नेत्रपङ्क्तय एव मणिसंहतयस्ताः स्फुटा उज्ज्वला येषाम्। इदमपि रूपकमेव केशराणां लतात्वेन नेत्राणां मणित्वेन च रूपणात् किन्तु कलधौतसानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तमिति॥ २६ ॥ भ०

कपीत्यादि। प्लवङ्गम इन्दुरिव प्लवङ्गमेन्दुः कपयस्तोयनिधय इव कपितोयनिधीन् मधुरेण सुखेन दर्शनेन मदयित्वा हर्षयित्वा मदी हर्षग्लपनयोरिति घटादित्वान्मित्त्वे ह्रस्वत्वं वचनानि अमृतमयदीधितय इव वचनामृतदीधितीर्वितन्वन् विस्तारयन् लोकदृष्टान्तसम्बोधकमाह्लादकं वचनमुदाहरन्नित्यर्थः आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तानेवं विधानकृत कृतवान्। एतद्रूपकं 'शेषार्थान्ववसितं रूपितादन्यो योऽर्थः आनन्दजातनेत्रवारीनिति स शेषः तेनान्ववसितं युक्तमवतंसक नाम। एकदेशस्यार्थस्य रूपितत्वात् तदेवान्यैः खण्डरूपकमित्युच्यते॥ २७ ॥ भ०

वचनामृतदीधितीर्वितन्वन्नकृतानन्दपरीतनेत्रवारीन् ॥२७॥
एतच्छेषार्थान्ववसितमवतंसकम् ।
परिखेदितविन्ध्यवीरुधः परिपीतामलनिर्झराम्भसः ।
दुधुवुर्मधुकाननं ततः कपिनागा मुदिताङ्गदाज्ञया ॥ २८ ॥
अर्द्धरूपकम् ।

---

कपीत्यादि । प्लवङ्गमो हनूमानेव इन्दुः कपीनेव समुद्रान् मधुरेण प्रेमदर्शनेन मर्दयित्वा हर्षयित्वा वचनान्येव अमृतदीधितीः सुधासम्बन्धिकिरणान् वितन्वन् युद्धवृत्तान्तबोधकमाह्लादकवचनमुदाहरन् आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तानेवंविधान् अकृत कृतवान् मदीहर्षग्लपनयोः घटादित्वात् ह्रस्वः एतच्छेषार्थान्ववसितमवतंसकमिति एतद्रूपकं ज्ञक्तादन्यः शेषः रूपकादन्यः इत्यर्थः रूपितार्थादन्यार्थं आनन्दपरीतनेत्रवारीनकृतेत्येवंरूपः तेनावशितं युक्तं अवतंसं नाम विसदृशस्यार्थस्योक्तत्वात् एतदेवान्यैः खण्डरूपकमित्युक्तम् ॥ २७ ॥ भ०

परिखेदितेत्यादि । तत उत्तरकाले कपयो नागा इव हस्तिन इव कपिनागाः मुदितस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्य क्रीडोद्यानं दुधुवुः कम्पितवन्तः मधून्युपभुज्य संभ्रममकुर्वन्नित्यर्थः परिखेदिताः परिमर्दिताः विन्ध्यवीरुधो विन्ध्यलता गुल्मा यैः परिपीतममलनिर्झराम्भो यैः । अर्द्धरूपकमिति पश्चिमार्द्धे कपिनागा इति रूपितम् ॥२८॥ ज० म०

परीत्यदि । ततोऽनन्तरं कपय एव नागा हस्तिनो मुदितस्य हृष्टस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्योद्यानं दुधुवुः कम्पितवन्तः मधुवनं भङ्क्त्वा भुक्तवन्तः इत्यर्थः कीदृशाः परिखेदिता मर्द्दिता विन्ध्यपर्व्वतस्य वीरुधो लता यैः ते तथा परिपीतं निर्मलं निर्झरजलं यैः नागाः काननं धुन्वन्त्येवेति रूपणमर्द्धरूपकमित्युक्तं कपिनागा इत्युत्तरार्द्धे रूपितं न तु पूर्व्वार्द्धे ॥ २८ ॥ भ०

विटपिमृगविषादध्वान्तनुद्वानरार्कः
प्रियवचनमयूखैर्बोधितार्थारविन्दः ।
उदयगिरिमिवाद्रिं संप्रमुच्याभ्यगात् खम्
नृपहृदयगुहास्थं घ्नन् प्रमोहान्धकारम् ॥ २९ ॥
एतदन्वर्थोपमायुक्तललामकम् ।

---

विटपीत्यादि । वानरार्कः वानरोऽर्क इव वानरार्कः उदयगिरिमिवाद्रिं पर्व्वतं महेन्द्रं सम्प्रमुच्य खमाकाशमभ्यगात् अभिगतवान् । विटपिमृगाणां यो विषाद आसीत् कथं सीतान्वेषणीयेति स ध्वान्तमिव तं नुदतीति क्विप् प्रियवचनानि मयूखा इव तैः करभूतैः बोधितमर्थारविन्दं येन अर्थः सीतोपलब्धिः सोऽरविन्दमिव नृपहृदयं गुहेव तत्र तिष्ठतीति नृपहृदयगुहास्थं प्रमोहो विषादोऽन्धकार इव तं घ्नन् हनिष्यन् वर्त्तमानसमीपत्वात् भविष्यति लट् । एतदिति रूपकं अन्वर्थयोपमया युक्तं ललाम नाम यत उदेत्यस्मादित्युदयः अकर्त्तरि च कारके सच् स च असौ गिरिश्चेत्यनुगतार्थता यत्रान्वर्थता नास्त्युपमायाः तदुपमायुक्तमेव रूपकं द्रष्टव्यम् ॥ २९ ॥ ज० म०

विटपीत्यादि । स वानररूपोऽर्क उदयाचलमिव अद्रिं महेन्द्राद्रिं संप्रमुच्य खमाकाशं अभ्यगात् आभिमुख्येन गतवान् कीदृशः विटपिमृगाणां वानराणां यो बिषादः सीतानुपलब्धिजनितः स एव ध्वान्तमन्धकारस्तं नुदति अपसारयतीति क्विप् प्रियवचनरूपैर्म्मयूखैर्ब्बोधितानि विकाशितानि अर्थरूपाणि सीतोपलब्धिरूपाणि पद्मानि येन नृपस्य रामस्य हृदयरूपायां गुहायां तिष्ठन्तं प्रमोहरूपमन्धकारं घ्नन् विनाशयिष्यन् वर्त्तमानसामीप्ये वर्त्तमानत्वोपचारात् शतृः एतदपि रूपक अन्वर्थोपमायुक्तं ललामकं नाम तथाहि उदेत्यस्मादित्युदयः अपादानेऽल् स चासौ गिरिश्चेति अनुगतार्थत्वमुदयगिरिशब्दस्य योगार्थस्यान्वयात् उदयगिरिमिवेत्युपमा दर्शिता विषादादीनां ध्वान्तत्वादिना रूपणम् ॥ २९ ॥ म०

रघुतनयमगात्तपोवनस्थम्
विधृतजटाजिनवल्कलं हनूमान् ।
परमिव पुरुषं नरेण युक्तम्
समशमवेशसमाधिनानुजेन ॥ ३० ॥
इवोपमा ।

---

उपमालङ्कारं दर्शयन्नाह ।

रघुतनयमित्यादि । हनूमान् रघुतनयमगात् प्राप्तवान् तपः प्रधानं वनं तपोवनं तत्र स्थितं विधृता जटा अजिनञ्चर्म्म वल्कलञ्च येन तं अनुजेन कनीयसा भ्रात्रा लक्ष्मणेन समास्तुल्याः शमा वेशाः समाधयश्च यस्य तेन युक्तं परमसुत्तमं पुरुषमिव, पुरुषोत्तममिव नरेण युक्तं वदरिकाश्रमे नरनारायणयोस्तपश्चर्य्यया स्थितत्वात् इवोपमेति इवशब्देनोपमार्थस्य गम्यमानत्वात् । उपमाया लक्षणं विरुद्धेनोपमानेन देशकालक्रियादिभिः । उपमेयस्य यत्साम्यं गुणमात्रेण सोपमेति अत्र विरुद्धदेशकालक्रियागुणः पुरुषोत्तम उपमानं तेन रामस्योपमेयस्य तपोवनस्थत्वेन विधृतजटाजिनवल्कलत्वेन नरानुकारिलक्ष्मणेनानुगतत्वेन च गुणमात्रेण साम्यमुपमानम् ॥ ३० ॥ ज० म०

रघ्वित्यादि । हनूमान् रघुतनयं रामं अगात् प्राप्तवान् कीदृशं तपः प्रधानं वनं तपोवनं तत्र स्थितं विधृतं जटामृगचर्मवल्कलञ्च येन समास्तुल्याः शमः शान्तिर्वेशो जटावल्कलादिधारणं समाधिर्ध्यानञ्च यस्य तादृशेन अनुजेन कनीयसा लक्ष्मणेन युक्तं परं नरेण मुनिनायुक्तं पुरुषमिव नारायणमिव नरनारायणयोर्व्वदरिकाश्रमे तपश्चर्य्यायां स्थितत्वात् । पुष्पिताग्राछन्दः लक्षणं यथा अयुजि न युगरेफतोयकारो युजि तु न जौजरगाश्च पुष्पिताग्रेति । इवोपमेति इवशब्देनोपमया गम्यमानत्वात् उपमालक्षणं यथा विरुद्धेनोपमानेन देशकालक्रियादिभिः । उपमेयस्य साम्यं यद्गुणमात्रेण सोपमेति अत्र विरुद्धदेशकालक्रियादिगुणयुक्तः पुरुषोत्तम उपमानं तेन रामस्य तपोवनस्थत्वेन विधृतजटत्वेन उपमे यस्य

करपुटनिहितं दधत् स रत्नं परिविरलाङ्गुलिनिर्गताल्पदीप्ति।
तनुकपिलघनस्थितं यथेन्दुं नृपमनमत्परिभुग्नजानुमूर्द्धा ॥३१॥
यथोपमा ।

रुचिरोन्नतरत्नगौरवः परिपूर्णास्तरश्मिमण्डलः ।

लब्धायानुचरत्वेन च गुणमात्रेण साम्यादुपमा इवशब्द उपमाद्योतकः तथा च दण्डी इववद्वायथाशब्दा ज्ञेयाः सादृश्यसूचका इति ॥ ३० ॥ भ०

यथेवशब्द उपमार्थसूचकस्तथान्योऽपीति दर्शयन्नाह

करपुटनिहितमित्यादि । करपुटे करयुग्मे निहितं न्यस्तं रत्नं सीताचूड़ामणिं परिविरलाङ्गुलिभ्यो निर्गता अल्पा दीप्तयो यस्य तद्रत्नं दधद्धारयन् स हनूमान् नृपं राममनमत् प्रणतवान् परिभुग्ने अवनते जानुनी मूर्द्धा च यस्य हनूमतः यथेन्दुं इन्दुमिव तनुः अच्छः कपिलश्च यो घनः मेघः तत्र स्थितमिन्दुमिव रत्नम् । यथोपमेति यथाशब्देनोपमार्थस्य गम्यमानत्वात् ॥ ३१ ॥ ज० म०

करेत्यादि । परिभुग्ने कुटिलीकृते जानुनी मस्तकञ्च यस्य तथाभूतः सन् स हनूमान् नृपं रामं अनमत् प्रणतवान् कीदृशः रत्नं सीताचूड़ामणिं दधत् धारयन् कीदृशं करपुटे निहितमर्पितं परितो विरलाभ्यो अङ्गुलिभ्यो निर्गता अल्पा दीप्तिर्यस्य स तथा अतएव तनुरल्पः कपिलो यो घनो मेघस्तत्र स्थितं इन्दुं यथा येन रूपेण दधाति तथा रत्नं दधदिति सम्बन्धः । यथोपमेति यथाशब्देनोपमानस्य गम्यमानत्वात् ॥ ३१ ॥ भ०

रुचिर इत्यादि । वधूशिरोमणिः सीताचूड़ामणिः उन्नतं महद्रत्नगौरवं महार्घ्यादिलक्ष्म यस्य रुचिरो दीप्तिमांश्चासौ उन्नतरत्नगौरवश्चेति सः परिपूर्णस्यास्तरश्मेश्चन्द्रमसो मण्डलमिव मण्डलं यस्य सः रामेण समदृश्यत सन्दृष्टः कर्मणि लङ् जीविताशया सह सार्द्धं तद्दर्शनतो जीवितोऽस्मीति तदाशया सहसा रुचिरा तुष्टिदा रुचिं राति ददातीति कृत्वा उन्नतरत्नगौरवादुन्नतं रत्नेष्विव गौरवं वहमानो यस्यामिति परिपूर्णमस्तसमरणं रश्मिमण्डलं यस्यामिति सहोपमेति सहशब्देन जीविताशया उपमाद्योतनात् ॥ ३२ ॥ ज० म०

समदृश्यत जीविताशया सह रामेण वधूशिरोमणिः ॥३२॥
सहोपमा ।

अवसन्नरुचिं वनागतं तमनाम्रष्टरजोविधूसरम् ।

---

रुचिर इत्यादि । रामेण बध्वाः सीतायाः शिरोमणिः समदृश्यत संदृष्टः कर्मणि घी जीवितोऽस्मीति या प्रत्याशा तया सह। सहशब्दोऽत्र साऽश्यार्थः उभयसाधर्म्यमाह रुचिरोन्नतरत्नगौरवः उन्नतं महद्रत्नगौरवं बहुमूल्यत्वादिलक्षणं गुरुत्वाख्यगुणविशेषो वा यस्य तथा ततो रुचिरः शोभायुक्तश्चासावुन्नतरत्नगौरवश्चेति कर्मधारयः जीविताशापि रुचिं तुष्टिं राति ददातीति रुचिरा उन्नतरत्नेष्विव गौरवं बहुमानो यस्यामिति भावः परिपूर्णस्यास्तरश्मेश्चन्द्रस्येव मण्डल वक्त्राकारत्व यस्य स तथा आशापक्षे परिपूर्णमस्तमिव रश्मिमण्डलं यस्यां जीविताशायां सत्यां शरीरस्य तेजस्वित्वसम्भवात् परिपूर्णमस्तेनामरणेन रश्मिमण्डलं यस्या-मिति केचित् । सहोपमेति सहशब्देन जीविताशासादृश्यसूचनात् चूड़ामणिदर्शनेन तस्य जीविताशा जातेति व्यङ्ग्यार्थः ॥ ३२ ॥ म०

अवसन्नरुचिमित्यादि । स शिरोमणिं आत्मवदात्मानमिव समप-श्यद्रामः तेन तुल्यमिति वतिः अवसन्नरुचिं मन्दप्रभं वेणीबन्धनमलिन-त्वात् इतरत्र सशोकत्वात् वनागतं अशोकवनिकाख्याद्वनादागतं इतरं पितुरादेशाद्वनमागतं सुप्तसुमेति सः अनाम्रष्ट अनपनीतं यद्रजः तेन विधूसरं उभयमपि अपेतमैथिलिं अपेता मैथिली येन यस्मा.द्वा दधतं गौर-वमात्रं गुरुत्वमेव न दीप्त्यादिकं इतरं माहात्म्यं दधतम् । तद्धितोप-मेति तद्धितप्रत्यया द्रष्टव्याः ॥ ३३ ॥ ज० म०

अवेत्यादि । रामस्तं शिरोमणिमात्मवदात्मानमिव समपश्यत् सदृष्टवान् उभयसाधर्म्यमाह अवसन्नरुचिं मन्दप्रभं वेणीबन्धेन मलितत्वात् असमार्जनाद्वा आत्मपक्षे सशोकत्वात् वनागतं अशोकवनिकायाः समागतं पक्षे पितुरादेशात् वनमायातं अनाम्रष्टरजोविधूसरं अनाम्रष्टं अनप-

समपश्यदपेतमैथिलिं दधतं गौरवमात्रमात्मवत् ॥ ३३ ॥

तद्धितोपमा।

सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमान्।
सलक्ष्मणो भूमिपतिस्तदानीं शाखामृगानीकपतिश्च मेने ॥ ३४॥

लुप्तोपमा।

---

नीतं यद्रजो भूमौ शयनाल्लग्नं तेन विधूसरं पाण्डुरं धूसरशब्दोदन्त्यमध्यः सहिषधूसरितः सरितस्तट इति प्रयोगात् अपेतमैथिलि अपेता मैथिली यस्मात् बहुप्रेयसीत्युदाहरणेन ह्रस्वः इत्यस्य प्रायिकत्वसूचनान्न कप्रत्ययः गवावादेरिति ह्रस्वः किंवा मैथिल्याः सकाशादपेतं भ्रष्टं अपेतस्य पूर्व-निपातोऽभिधानात् राजदन्तादित्वादिति परः। गौरवमात्रं केवलं गुरु-त्वाख्यगुणविशेषं दधतं धारयन्तं न दीपनादि आत्मपक्षे माहात्म्यं तद्धितोपमेति तद्धितसंज्ञकेन तुल्यास्य इति क्तवत्प्रत्ययेन सादृश्याभिधा-नात् एवं कल्पादयोऽपि सादृश्यसूचकाः स्मृते तद्धितस्य तत्संज्ञा ॥३३॥म०

सामर्थ्येत्यादि। सामर्थ्येन शक्त्या सम्पादितो निष्पादितो वाञ्छि-तोऽभिलषितोऽर्थो येन स हनूमान् कथञ्चिन्तामणिश्चिन्ता मणिरिव न स्यात् इति तदानीं मेने ज्ञातवान् सलक्ष्मणः सह लक्ष्मणेन भूमिपतीरामः शाखामृगानीकपतिश्च सुग्रीवः। लुप्तोपमेति चिन्तामणिरित्यत्रेव-शब्दार्थस्य गम्यमानत्वात् लुप्तोपमेति ॥ ३४ ॥ ज० म०

सामर्थ्येत्यादि। तदानीं तस्मिन् चूडामणिप्राप्तिसमये लक्ष्मण-सहितो भूमिपतीरामः शाखामृगानीकस्य कपिसैन्यस्य पतिः सुग्रीवश्च इति मेने ज्ञातवान् किमित्याह हनूमान् कथं चिन्तामणिरिव न स्यात् स्यादेव यतः सामर्थ्येन स्वशक्त्या सम्पादितो वाञ्छितार्थो येन लुप्तोपमेति इवशब्दस्य गम्यमानत्वादनुच्चारात् तथाच कण्ठाभरणे लोपे सामान्यधर्म्माणां द्योतकस्य च योपमा। प्रतीयमाने सादृश्ये द्वयोर्लुप्तेति तां विदुरिति ॥ ३४ ॥ भ०

युष्मानचेतन् क्षयवायुकल्पान् सीतास्फुलिङ्गं परिगृह्य जाल्मः।
लङ्कावनं सिंहसमोऽधिशेते मर्त्तुं द्विषन्नित्यवदद्धनूमान्॥ ३५॥

समोपमा।

अहृत धनेश्वरस्य युधि यः समेतमायोधनम्
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम्।

---

युष्मानित्यादि। युष्मान् रामादीन् क्षयवायुकल्पान् प्रलयकालमहावायुसदृशान् अचेतन् अजानन् चितीसंज्ञाने इति भौवादिकः द्विषन् दशाननः जाल्मः मूर्खः सीतास्फुलिङ्गं सीतामग्निकणमिव परिगृह्यादाय लङ्कां वनमिवाधिशेते मर्त्तुं मरिष्यामीति सिंहसम इत्यवदद्धनूमान्। समोपमेति समशब्देनोपमाया अभिधानात् अत्र निभसदृशादयोऽपि द्रष्टव्याः॥ ३५॥ ज० म०

युष्मानित्यादि। हनूमान् इति अवदत् किमित्याह सिंहसमः सिंह इव जाल्मोऽसमीक्ष्यकारी द्विषन् शत्रूरावणः सीतां स्फुलिङ्गमिवाग्निकणमिव परिगृह्य युष्मान् रामादीन् क्षयवायुकल्पान् प्रलयकालसम्बन्धिवायुसदृशान् अचेतन् अजानन् मर्त्तुं प्राणान् त्यक्तुं लङ्कां वनमिव अधिशेते अधिवसति सिंहोऽप्युग्रत्वादन्यमगणयित्वा वने वसतीति सादृश्यम्। समोपमेति समशब्देन उपमाभिधानात् एवं निभसदृशादयो द्रष्टव्याः॥ ३५॥ भ०

इदानीमलङ्कारान्तराण्याह

अहृतेत्यादि। यो द्विषन् युधि संग्रामे समेतमायः समेता प्राप्ता माया येनेति तृतीयार्थे बहुव्रीहिः मायावीत्यर्थः धनेश्वरस्य धनदस्य धनमहृत हृतवान् ह्रस्वादङ्गादिति सिचो लोपः तं विबुधैर्देवैः सह कृतोत्तमायोधनं कृतमहासंग्रामं निह्नुता अपलपिता ह्रीर्लज्जा येन विभवमदेन तेन निह्नुतह्रिया अतिमात्रं हृष्टं सम्पन्नकं युक्तं येन परस्त्रियमपहृत्यानीतवानसौ तं विलोक्य अहमितः प्राप्तः विभवमदो लज्जां त्याजयतीत्यमुमेवार्थं अनुस्मृतार्थान्तरमाह अथवेति अथवा शब्दे

विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकम्
व्यथयति सत्पथादधिगताथ वेह सम्पन्नकम् ॥ ३६ ॥

अर्थान्तरन्यासः।

---

निपातसमुदायः यस्मादर्थे वर्त्तते यस्मादिह लोके संपत् विभूतिरधिगता प्राप्ता सत्पथात् सन्मार्गात् कं न व्यथयति चलयति व्यथिरत्र चलने वर्त्तते। अर्थान्तरन्यास इति उक्तादर्थादन्यस्योपन्यासात् यथोक्तम्। उपन्यसनमर्थस्य प्रक्रान्तादपरस्य यत्। ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतौ यथेति।३६॥ ज० म०

अहृतेत्यादि। यो द्विषन् धनेश्वरस्य कुवेरस्य धनं अहृत हृतवान् हृगुडुर्मठीस्वनिमिति कित्वान्न गुणः ह्रस्वस्वादिति सिलोपः कीदृशः युधि संग्रामे समेता प्राप्ता माया येन सम्बद्धा माया यत्रेति वा त विलोक्य अहसित आगतः कीदृशं विबुधैर्देवैः सह कृतोत्तमायोधनं कृतमहायुद्धं निह्नुतह्रिया अपनीतलज्जेन विभवमदेन ऐश्वर्य्यमत्ततया अतिमात्रमतिशयेन सम्पन्नकं युक्तं विकारसङ्गेत्यादिना कुत्सायां कः परस्त्रियमपहृत्याप्यानयतीति निर्लज्जत्वं विभवमदो लज्जां त्याजयतीति अर्थान्तरन्यासमाह अथवा यस्मात् अधिगता प्राप्ता सम्पत् विभूतिरिह लोके कं जनं सत्पथात् सदाचारात् न व्यथयति न चालयति अपि तु सर्व्वमेव व्यथङ् दुःखे चाले भये अत्र चलनार्थः अथवेत्यव्ययं यस्मादर्थे। नन्दनं नाम छन्दः लक्षणं यथा नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनमिति अत्र तृतीयपादे नवमाक्षरस्य प्रह्वेति पिङ्गलसूत्रेण गुरुत्वविकल्पविधानात् लघुत्वं तथाच माघे प्राप्नुनाभिह्रदसज्जनमाशु इति। यदा तीव्रप्रयत्नेन संयोगादेव गौरवम्। न छन्दोभङ्गमप्याहुस्तदा दोषाय सूरय इति कण्ठाभरणं। केचित्तु संयोगे गुरुत्वात् छन्दोभङ्गः स्यादिति शङ्कया निह्नुतह्रियेत्यत्र निह्नुतभियेति पाठं कल्पयन्ति अर्थान्तरन्यास इति ज्ञेयः सोऽर्थान्तरन्यासो योऽन्यत् प्रस्तुत्य किञ्चन।

ऋद्धिमान् राक्षसो मूढश्चित्रं नासौ यदुद्धतः ।
को वा हेतुरनार्य्याणां धर्म्ये वर्त्मनि वर्त्तितुम् ॥ ३७ ॥

आक्षेपः ।

तस्याधिवासे तनुवृत्त कासौ दृष्टा मया रामपतिः प्रमन्युः ।

---

तत्साधनसमर्थस्य न्यासो भिन्नस्य वस्तुन इति उपन्यसन् समर्थस्य प्रक्रान्तादपरस्य यत् । ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथेत्यन्योऽपि ॥ ३६ ॥ भ०

ऋद्धिमानित्यादि । यदसावुद्धतो दुर्वृत्तः न तच्चित्रमाश्चर्यं यस्मादसौ ऋद्धिमान् राक्षसश्च उभयथा विमूढ इत्येतदुक्तमिति प्रतिषेधयन्नाह कोवेति । किमनेनोक्तेन यस्मादनार्य्याणां तद्विधानां धर्म्ये धर्म्मादनपेते वर्त्मनि मार्गे वर्त्तितुं को वा हेतुः किन्नाम कारणं नैवेत्यर्थः । आक्षेप इति प्रतिषेधो नाम यथोक्तं प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया । आक्षेप इति तं सन्तः शंसन्ति द्विविधो यथेति । अत्र पूर्व्वार्द्धेनोक्तो य इष्टोऽर्थः तस्य कोवेत्यादिना विशेषप्रतिपादनेच्छया प्रतिषेध इति स च उक्तवक्ष्यमाणविषयभेदाद्द्विविधः अयमुक्तविषयः ॥ ३७ ॥ ज० म०

ऋद्धिमानित्यादि । असौ रावणो यदुद्धतो दुर्वृत्तो भवति तच्चित्रं नाश्चर्यं यस्मादसौ ऋद्धिमान् सम्पत्तियुक्तो राक्षसश्च उभयथापि मूढो विचारशून्य एव एतदुक्तं प्रतिषेधयन्नाह कोवेति अथवा किमनेनोक्तेन यस्मात् अनार्य्याणां उद्धतानां तादृशानां धर्म्ये धर्म्मादनपेते वर्त्मनि सदाचारे वर्त्तितुं स्यातुं कोवा हेतुः न कोऽपीत्यर्थः अतएवासावुद्धतः किमृद्ध्यादिहेतुचिन्तयेति भावः । वाशब्द आक्षेपद्योतकः आक्षेपप्रतिषेध इति । निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मत इति अयमुक्ताक्षेपः पूर्व्वार्द्धेनोक्तो य इष्टस्तस्य कोवेत्यादिना विशेषाभिधानेच्छया प्रतिषेधात् ॥ ३७ ॥

तस्येत्यादि । तस्य रावणस्याधिवासे लङ्कायां असौ रामपतिः सीता मया दृष्टा रामः पतिर्यस्या इति विभाषा सपूर्व्वस्येति नकारा-

कार्य्यस्य सारोऽयमुदीरितो वः प्रोक्तेन शेषेण किमुद्धतेन॥२८

आक्षेपएव ।

समतां शशिलेखयोपयायादवदाता प्रतनुः क्षयेण सीता ।

---

भावपक्षे रूपं तनुः कृशाङ्गी वोतोगुणवचनादिति ङीषो विकल्पः उत्सुका सोत्कण्ठा प्रमन्युः प्रकृष्टशोका ऊङुतङ्त्यूङ् न भवति तत्वायोपधादिति वर्त्तते अयङ्कार्य्यस्यास्मदायत्तस्य सारः शरीर सीता-दर्शनं उदीरितः कथितः वो युष्मभ्यं शेषेणोद्धतेन अशोकवनिकाभङ्गादिना किं प्रोक्तेन न किञ्चिद् प्रयोजनं। स एवेत्ययमप्याक्षेप एव किन्तु वक्ष्यमाणविषयः अत्र पूर्व्वार्द्धेनोक्तो यो दृष्टोऽर्थः तस्य विशेषाभिधित्सया प्रोक्तेनेत्यादिना शेषार्थप्रतिषेधः ॥ २८ ॥ ज० म०

तस्येत्यादि। तस्य रावणस्य अधिवासे लङ्कायां रामपतिः सीता मया दृष्टा रामः पतिर्यस्या इति बहुव्रीहिः परमते बहुव्रीहौ पत्युरिकारस्य नकार ईप्प्रत्ययस्य विभाषितः तेन रामपत्नी रामपतिश्चेति पदद्वयं लभते बहुव्रीहौ रामपतिरित्यादि भवत्येव रामपत्नीत्यादौ तु नारीसखी-त्यादिना निपातितस्य पत्नीशब्दस्य ग्रहणं पत्नीशब्दो रूढो भार्य्यावाचकः तेन षष्ठीसमासः कामेकपत्नीं व्रतदुःखशीलामित्यादौ कर्म्मधारयश्च वाच्यः कीदृशी तनुः कृशाङ्गी गुणाद्वोत इति पक्षे ईप्प्रत्ययाभावः इत्सुका उत्-कण्ठावतो त्वयीत्यर्थात् त्वत्सङ्गमभिलषमाणेत्यर्थः केचिदाहुः तनुषा शरो-रेणाप्युत्सुका किं पुनर्म्मनसा तथाच त्स्यात्तनुस्तनुषा सार्द्धं धनुषा च धनुस्तथेति शब्दभेदः प्रमन्युः प्रकृष्टशोका अय कार्य्यस्य मद्विधेयस्य सार उत्कृष्टभागो वो युष्मभ्यमुदीरित उक्तः अशेषेणापरेण उद्धतेन उच्चा-वचेन प्रोक्तेन किं न किञ्चित् प्रयोजनं स एवेति आक्षेप एव किन्तु वक्ष्य-माणविषयक इति भेदः पूर्व्वार्द्धेनोक्तस्य दृष्टार्थस्य विशेषाभिधेच्छया प्रो-क्तेनेत्यादिना शेषार्थप्रतिषेधात् ॥ २८ ॥ स०

समतामित्यादि। सीता अवदाता शुद्धा प्रतनुः प्रकर्षेण तन्वी क्ष-येण दौर्बल्येन एतावता तुल्यधर्म्मत्वाच्छशिलेखया तुल्यतां समतामुपया-

यदि नाम कलङ्क इन्दुलेखामतिष्टत्तो लघयेन्न चापि भावी ३८
व्यतिरेकः ।
अपरीक्षितकारिणा गृहीतां त्वमनासेवितवृद्धपण्डितेन ।

---

यात् उपगच्छेत् यदि कलङ्को नामापरोऽतिवृत्तोऽतिक्रान्तः इन्दुलेखां न लघयेत् न न्यूनयेत् तथा भावी आगमी नालघयिष्यत्यदि न चैवं न त्वां चन्द्रलेखया न समेति भावः। व्यतिरेक इति अयं व्यतिरेको नामा अन्वयः पूर्व्वार्द्धेनोपमानोपमे ययोरर्थो दर्शितः तस्य पश्चादर्द्धेन भेद-दर्शनात्। यथोक्तं उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम्। व्यतिरेकं तमिच्छन्ति विशेषोत्पादनाद्यथेति ॥ ३८ ॥ ज० म०

समतामित्यादि। सीता शशिलेखया चन्द्रकलया समतां तुल्यतां उपयायात् प्राप्नुयात् कीदृशी अवदाता शुभ्रा चन्द्रलेखाप्यवदाता शुक्ला क्षयेण दौर्बल्येन प्रतनुः अतिकृशा शशिलेखापि क्षयेण रोगविशेषेण प्रतनुः यदि नाम निवृत्तोऽतीतो भावी भविष्यंश्च कलङ्कस्तामिन्दुलेखां न लघयेत् न तिशयेन न्यूनां कुर्य्यात् कलङ्कस्य भूतत्वाद्भावित्वाच्च सा चन्द्र-लेखयापि न समेति भावः। लङ्शब्दात् लेः तत्वाख्याने ञिरिति ञिः ओमश्च ञिदिति ञित्वात् टेर्लोपः नामेत्यव्ययं प्रकाशसम्भावनाक्रोधाभ्यु-पगमकुत्सनेषु व्यतिरेक इति उपमानाद्यदन्यस्य व्यतिरेकः स एव स इति अन्यस्य उपमेयस्य व्यतिरेक आधिक्यम् ॥ ३८ ॥ भ०

अपरीक्षितकारिणेत्यादि। अपरीक्षितकारिणा अविचारित-करणशीलेन अनासेवितवृद्धपण्डितेन अपर्य्युपासितज्ञानवृद्धसत्पथेन अविरोधितनिष्ठुरेणानपकृतोऽपि क्रूरः सन्नयः मनुः तेन गृहीतां साध्वीं पतिव्रतां दयितामिमां त्वामाहां त्वां रक्षितुमलं पर्य्याप्तं त्वं घटस्व यतस्व हे राजन्नित्यवददनूमान्। विभावनेति परीक्षा सेवा विरोधन-ञ्चेति तिस्रः क्रियाः तासां यः प्रतिषेधः नञा तेन अपरीक्षापूर्व्वकं यत्क-रणं यथा वृद्धसेवापूर्व्वकं यत्पण्डितत्वं यच्चाविरोधपूर्व्वकं निष्ठुरत्वं तस्य

अविवाधितनिष्ठुरेण साध्वीं दयितां त्रातुमलं घटस्व राजन्॥४०॥

विभावना ।

स च विह्वलसत्वसङ्कुलः परिशुष्यन्नभवन्महाहृदः ।

---

क्रियाफलस्य विभावनात् प्रकाशनात् । यथोक्तं क्रियायाः प्रतिषेधेन तत्फलस्य विभावनात् । ज्ञेया विभावनैवासौ सान्वर्थं कथ्यते यथेति ॥ ४० ॥ ज० म०

अपेत्यादि । हे राजन् ! दयितां सीतां प्रियां त्रातुं रक्षितुं त्वमलमत्यर्थं घटस्व चेष्टस्व यतः साध्वीं पतिव्रतां अपरीक्षितकारिणा अविचारितकरणशीलेन अनासेवितवृद्धपण्डितेन वृद्धमनुपास्यैव पण्डितेन पण्डितम्मन्येन अविवाधितेनानपकृतेनापि सता निष्ठुरेण क्रूरेण रावणेनेत्यर्थात् गृहीतां हृतवदनुमानिति सम्बन्धः । विभावनेति परीक्षावृद्धसेवाविधानैर्विनापि करणपाण्डित्यनैष्ठुर्याणां तत्फलानां स्वाभाविकत्वेन प्रकाशनात् । तथाच क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावनेति काव्यप्रकाशः । प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम् । यत्र स्वाभाविकत्व वा विभाव्य सा विभावनेति दण्डी ॥ ४० ॥ म०

स चेत्यादि । स च रामो महाहृदः महाहृदसमः सीताविरहात् विह्वलेनाकुलेन सत्वेन चेतसा संकुलो व्याप्तः परिशुष्यन् शोषमुपगच्छन् परितः समन्तात् परितापमूर्च्छितः शोकसन्तापेन मूर्च्छान्वितोऽभवत् भूतः अनन्तरं चाम्बु जलं सीतावार्त्ताश्रवणमीप्सितं अभिप्रेतं निरभ्रमाकस्मिकं पतितमित्येकोऽर्थः महाहृदः परिशुष्यन् विह्वलैः सत्त्वैर्मत्स्यादिभिः संकुलो व्याप्तः परितापमूर्च्छितः परितापेन मूर्च्छितः अर्कतापान्वितोऽभवत् अम्बु च निरभ्रं विना मेघेन पतितमिति द्वितीयः समासोक्तिः यथोक्तम् । यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः । सा समासोक्तिरुदिता संक्षिप्तार्थतया यथेति एवञ्च कृत्वा अयं श्लेषाद्भिद्यते श्लेषे हि द्वयोरपि भूयमाणत्वात् ॥ २१ ॥ ज० म०

स चेत्यादि । स च रामो महाहृद इव अभवत् अथ निरभ्रं मेघं

परितः परितापमूर्च्छितः पतितश्चाम्बु निरभ्रमीप्सितम् ॥४१॥
समासोक्तिः ।

अथ लक्ष्मणरूपतुल्यवेशं गमनादेशविनिर्गताग्रहस्तम् ।
कपयोऽनुययुः समेत्य रामं नतसुग्रीवगृहीतसादराज्ञम् ॥ ४२ ॥
अतिशयोक्तिः ।

---

विनापि आकस्मिकं ईप्सितं अभिलषित सीतावार्त्ताश्रवणस्वरूपमम्बु जलं पतितं प्राप्तं अभवच्च पतितश्चेति चकारद्वयं तुल्यकालतासूचनार्थं कीदृशः विह्वलेन विरहव्याकुलेन सत्वेन चेतसा संकुलो व्याप्तः परिशुष्यन् कार्श्य-मुपगच्छन् परितः समन्तात् परितापेन शोकसन्तापेन मूर्च्छितः मोहं प्राप्तः महाह्रदोऽपि परिशुष्यन् विह्वलैः सत्त्वैर्जन्तुभिर्मत्स्यादिभिः संकुलः परि-तापेन सूर्यातपेन मूर्च्छितो यदा भवति तदेप्सितमम्बु विना मेघेन पति-तम् । सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः । समासोक्तिरिति साक्षान्महाह्रद-मालोपादानेऽपि तत्तुल्यविशेषणतया रामस्य गम्यमानत्वात् संक्षेपेणा-न्यस्योक्तिरित्यर्थः । यदुक्तं यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः । सा समासोक्तिरुदिता संक्षेपार्थतया तथेति । अन्यत्रापि वस्तु किञ्चिद-भिप्रेत्य तद्वदन्यस्य वस्तुनः । उक्तिसंक्षिप्तरूपत्वात् समासोक्तिरिष्यते इति । अतएव श्लेषाद्भेदः तत्र द्वयोरपि श्रूयमाणत्वात् ॥ ४१ ॥ भ०

अथेत्यादि । अथ वार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा राम-मनुययुः अनुगतवन्तः लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य रामस्य गमनाय प्रयाणाय आदेशः तदर्थं विनिर्गतौ अग्रहस्तौ यस्य नतेन प्रणतेन सुग्री-वेण गृहीता प्रतिष्ठिता सादराज्ञा यस्य तं रामम् । अतिशयोक्तिरिति अतिशयाभिधानात् अत्र सुष्ठ्वपि नामासौ लक्ष्मणे च तुल्यरूपवेशः स्यात् न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकातिक्रान्तवचनमेतद्वचनं अत्रश्चास्य कश्चिद्विशेषोऽस्ति यथोक्तं निमित्ततो यत्र वचो लोकातिक्रान्तगोचरम् । मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथेति ॥ ४२ ॥ ज० म०

कपिपृष्ठगतौ ततो नरेन्द्रौ कपयश्च ज्वलिताग्निपिङ्गलाङ्गाः ।
मुमुचुः प्रययुर्द्रुतं समीयुर्वसुधां व्योम महीधरं महेन्द्रम् ॥४३॥
यथासंख्यम् ।

---

अथेत्यादि । सीतावार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामं अनुययुः अनुगतवन्तः कोदृशं लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य तं रामदुःखेन लक्ष्मणोऽधिकं दुःखितः सीतावार्त्ताश्रवणाच्च रामादप्यधिकं हृष्ट इति लक्ष्मणेन तुल्यतोक्ता । कपीनां गमनाय प्रस्थानाय आदेश आज्ञा तदर्थं विनिर्गतोऽग्रहस्तो यस्य तं हस्तशब्दस्यैकदेशवृत्तितया अग्रशब्देन कर्मधारयः अन्ये तु राजदन्तादौ पठन्ति प्रणतेन सुग्रीवेन गृहीता पादराज्ञा यस्य तम् । अतिशयोक्तिरिति अतिशयार्थप्रतिपादनात् अत्र हि आज्ञानन्तरमेव कपीनामनुगमनेनैव भक्त्यतिशयत्वं लक्ष्मणतुल्यताभिधानेन तद्गतहर्षशोकातिशयत्वञ्च तथाच विवक्षाया विशेषस्य लोकसीमातिवर्त्तिनी । असावतिशयोक्तिः स्यादलङ्कारोत्तमा च सा । सा तु प्रायो गुणानाञ्च क्रियाणाञ्चोपकल्प्यते नहि द्रव्यस्य जातेर्वा भवत्यतिशयः क्वचिदिति ॥ ४२ ॥ भ०

कपिपृष्ठगतावित्यादि । ततोऽनन्तरं नरेन्द्रौ रामलक्ष्मणौ कपयश्च सर्व एते मुमुचुः वसुधां त्यक्तवन्तः प्रययुर्व्योम आकाशं महेन्द्रं महीधरं समीयुः गतवन्तः लिटः कित्त्वे गुणाभावाद्धातोरियङ् नरेन्द्रौ किम्भूतौ कपिपृष्ठगतौ हनूमत्समारूढौ यथासंख्यमिति मुमुचुरित्यादिना क्रियाणां वसुधादीनाञ्च कर्मणामनुक्रमशो निर्देशात् । यथोक्तं भूयसामुपदिष्टानां क्रियाणामथ कर्मणाम् । क्रमशो योऽनुनिर्देशो यथासङ्ख्यं तदुच्यत इति ॥ ४३ ॥ ज० म०

कपीत्यादि । ततोऽनन्तरं कपिपृष्ठगतौ वानरपृष्ठस्थौ नरेन्द्रौ रामलक्ष्मणौ ज्वलदग्निवत् पिङ्गलशरीराः कपयश्च वसुधां पृथ्वीं मुमुचुः त्यक्तवन्तः व्योमाकाशं प्रययुः प्रयातवन्तः महेन्द्राख्यं पर्वतं द्रुत

स्थितमिव परिरक्षितुं समन्तादुदधिजलौघपरिप्लवाद्धरित्रीम् ।
गगनतलवसुन्धरान्तराले जलनिधिवेगसहं प्रसार्य्य देहम् ॥४४॥

उत्प्रेक्षा ।

---

समीयुः सङ्गतवन्तः । यथासंख्यमिति क्रियापदानां कर्मपदानाञ्च क्रमेणान्वयात् यदुक्तं काव्यप्रकाशे यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वय इति अन्यत्राप्युक्तं भूयसामुपदिष्टानामर्थानां समधर्म्मिणाम् । क्रमशो योऽर्थनिर्देशो यथासंख्यं तदुच्यत इति ॥ ४३ ॥

स्थितमित्यादि । उदधिजलौघात्समन्ततो यः परिप्लवो विनाशः तस्माद्धरित्रीं परिरक्षितुमिव गगनतलवसुन्धरयोरन्तराले देहं शरीरं जलनिधिवेगं सहत इति मूलविभुजादित्वात्कः प्रसार्य्य स्थितं महेन्द्रं समीयुः । उत्प्रेक्षेति यथोक्तं अविवक्षितसामान्या किञ्चिच्चोपमया सह । अतद्गुणक्रियारोपादुत्प्रेक्षातिशयान्वितेति अत्र महीधरसामान्यस्यापि विवक्षितत्वादविवक्षितं सामान्यत्र रक्षितुमिवेति किञ्चिदुपमया सह महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोग. गगनतलं वसुन्धरां व्याप्य स्थितमित्यतिशयान्विता ॥ ४४ ॥ ज० म०

स्थितमित्यादि । कीदृशं महेन्द्रं उदधेर्जलौघेन परिप्लवात् विनाशात् समन्तादाप्लवनाद्वा धरित्रीं पृथिवीं परिरक्षितुमिव समन्तात् त्रातुमिव गगनतलवसुन्धरयोराकाशपृथिव्योरन्तराले मध्ये जलनिधिवेगसहं देहं प्रसार्य्य विस्तार्य्य स्थितं सहेः पचादित्वादन् परिप्लुतो भावेऽल् परिप्लवामिति पाठे पचादित्वादन् चञ्चलां व्याकुलां वा परिप्लवसञ्चलः स्यादाकुलेऽपि परिप्लव इति विश्वः । उत्प्रेक्षेति अन्यथावस्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधा इति अत्र स्वाभाविका द्यावापृथिव्योरन्तराले स्थितिः पृथिवीरक्षणार्थतया सम्भाव्यते अन्यस्त्वाह अविवक्षितसामान्यात् किञ्चिच्चोपमया सह । अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्वितेति तत्र महीधर-

विषधरनिलये निविष्टमूलं शिखरशतैः परिमृष्टदेवलोकम्।
घनविपुलनितम्बपूरिताशं फलकुसुमाचितवृक्षरम्यकुञ्जम्॥४५॥
वार्त्ता।

---

सामान्या विवक्षितत्वादत्राविवक्षितसामान्यत्वं परिरच्छिन्नमिवेति प्रयोगात् किञ्चिन्नोपमया सह योगित्वं महेन्द्रगिरेरतद्गुणतया रचण-क्रियायोगः गगनतलमम्बुधरान्तरालं व्याप्य स्थितमित्यतिशयान्वितत्वं इवशब्दोऽप्युत्प्रेक्षाव्यञ्जकः॥ ४४॥ भ०

विषधरनिलय इत्यादि। विषधरनिलये पाताले निविष्टमूलं महेन्द्र शिखरशतैः करणभूतैः परिमृष्टः संस्पृष्टो देवलोको येन घनैर्निरन्तरै-र्विपुलैर्विस्तीर्णैर्नितम्बैर्मेखलाभागैः पूरिता व्याप्ता आशा दिशो येन फलकुसुमान्वितैर्वृक्षैः रम्यं कुञ्जं गह्वरं यस्मिन् वार्त्तेति तत्त्वार्थकथनात्सा द्विविधा विशिष्टा निर्विशिष्टा च तत्र या पूर्व्वा सा स्वभावोक्तिरुदिता यथेयमेव तथाचोक्तं स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते अर्थस्य तादवस्थ्यञ्च स्वभावोऽभिहितो यथेति निर्विशिष्टा वार्त्तानामालङ्कारः यथोक्तं गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः। इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षत इति॥ ४५॥ ज० म०

विषधरेत्यादि। पुनः कीदृशं महेन्द्रं विषधरनिलये पाताले निविष्टं मूलं यस्य तं शिखराणां शतैः करणभूतैः परिमृष्टः स्पृष्टो देव-लोकः स्वर्गो येन घनैर्निरन्तरालैर्विपुलैर्विशालैर्घनेन मेघेन विपुलैर्वा नितम्बैर्मध्यभागैः पूरिता व्याप्ता आशा दिशो येन फलेन पुष्पेण चाचि-तैर्व्याप्तैर्वृक्षैः रम्यं कुञ्जं लतादिपिहितस्थलं यत्र तं तथा। वार्त्तेति तत्त्वार्थकथनात् सा द्विविधा विशिष्टा निर्विशिष्टा च तत्र पूर्वा स्वभावो-क्तिरुच्यते यदुक्तं स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते। अर्थस्य तादव-स्थ्यञ्च स्वभाव इति कथ्यते इति निर्विशिष्टा तु सैव वार्त्तालङ्कारः यथोक्तं गतोऽयमस्तमादित्यो यान्ति वासाय पक्षिणः। इत्येवमादिकं काव्य वार्त्ता-मेतां प्रचक्षत इति प्रकृते तु स्वभावोक्तिरूपैव वार्त्ता बोध्या॥ ४५॥ म०

मधुकरविरुतैः प्रियाध्वनीनाम्
सरसिरुहैर्दयितास्यहास्यलक्ष्म्याः।
स्फुटमनुहरमाणमादधानम्
पुरुषपतेः सहसा परं प्रमोदम्॥ ४६॥
प्रेयः।

---

मधुकरविरुतैरित्यादि। प्रियाध्वनीनां सीतासम्बन्धिनां जल्पितानां मधुकरविरुतैः स्फुटं स्पष्टमनुहरमाणमनुकुर्व्वन्तं स दृश्यमित्यर्थात् दयितायाः सीतायाः यदास्यं हास्यञ्च तयोर्लक्ष्म्याः सरसिरुहैः सादृश्यमनुहरमाणं सन्तं महेन्द्रं तत्र पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्याः अथवा तत्यार्थैरिति षष्ठी अनुहरमाणशब्दस्य तुल्यार्थत्वात् सदृशीभवन्तमित्यर्थः पुरुषपतेः रामस्य सहसा तत्क्षणं आगतमात्रस्येत्यर्थः परमुत्कृष्टं प्रमोदम् दधानं जनयन्तं समीयुः। प्रेय इति प्रियतमवस्त्वभिधानात्॥ ४६॥ ज० म०

मधुकरेत्यादि। पुनः कीदृशं महेन्द्रं मधुकराणां भ्रमराणां विरुतैः शब्दैः प्रियायाः सीताया जल्पितानां स्फुटं व्यक्तं अनुहरमाणं सादृश्यं दर्शयन्तं धातोरनेकार्थत्वात् अनुहरमाणमनुकुर्व्वन्तमित्यन्ये सरसिरुहैः पद्मैर्दयितायाः सीतायाः आस्यस्य मुखस्य हास्यस्य च लक्ष्म्या अपि अनुहरमाणं पद्मविकाशस्यात हास्यसाम्येन पद्मैस्तदनुहरणमुक्तं अन्ये तु सरसिरुहपदेन कुमुदमप्युच्यते तस्यापि सरःसम्भूतत्वात् तेन पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्याश्चानुहरमाणमित्याहुः। अतएव पुरुषपते रामस्य सहसा तत्क्षणमागतमात्रस्यैव परमुत्कृष्टं प्रमोदमानन्दं दधानं कुर्व्वन्तं जनयन्तमित्यर्थः एतेन यात्रायां मङ्गलमपि सूचितं प्रेय इति प्रियतरवस्त्वभिधानात्॥ ४६॥ भ०

पद्धेत्यादि। दिवो नितम्बं मध्यभागं पद्धाः मणिरसनेव यस्य विपुलं विस्तीर्णं न विद्यते उत्तमोऽस्मादित्यनुत्तमं अतिशयवान् लभ्यः कान्त्या योगो येन च्युतो घनो वसनमिव यस्मात् शिखरैः करैरिव मद-

ग्रहमणिरसनं दिवो नितम्बम्
विपुलमनुत्तमलब्धकान्तियोगम् ।
च्युतघनवसनं मनोऽभिरामम्
शिखरकरैर्मदनादिव स्पृशन्तम् ॥ ४७ ॥

रसवत् ।

अचपलमगुरुम्भरासहिष्णुं जनमसमानमनूर्जितं विवर्ज्य ।
कृतवसतिमिवार्णवोपकण्ठे स्थिरमतुलोन्नतिमूढतुङ्गमेघम् ॥४८॥

ऊर्जस्वी ।

---

नादिव स्पृशन्तं महेन्द्रम् । रसवदिति दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसाभिधानात् तथाचोक्तं रसवद्दर्शितं स्पष्टं शृङ्गारादिरसं यथेति ॥ ४७ ॥ ज० म०

ग्रहेत्यादि । पुनः कीदृशं महेन्द्रं शिखरैरूपकरैर्मदनात् कामाद्धेतोरिव दिव आकाशस्य नितम्ब मध्यभागं स्पृशन्तं कीदृशं नितम्बं ग्रहमणिरसनं ग्रहाश्चन्द्रादयो मणिनिर्म्मिता रसना काञ्ची यत्र विपुलं विस्तीर्णं अनुत्तमलब्धकान्तियोगं न विद्यते उत्तमो यस्मात् लब्धः कान्तियोगो येन पश्चात् कर्म्मधारयः च्युतघनवसन च्युतो घनो मेघो वसनमिव यस्मात् एतेन प्रावृट्कालोऽपि सूचितः अतएव मनोऽभिरामं चित्तानन्दकरं अत्र दिवो नायिकासाम्यं महेन्द्रस्य नायकसाम्यं व्यङ्ग्यम् । रसवदिति दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसस्याभिधानात् । तथाच दण्डी रसवद्रसभावणमिति ॥ ४७ ॥ भ०

अचपलमित्यादि । जनं लोकं अचपलं अस्थिरं अगुरुं लघुं अतएव भरासहिष्णुं अनूर्जितं अनहङ्कारं विवर्ज्यैवासमानत्वात् अर्णवस्य समुद्रस्योपकण्ठं समीपे कृतवसतिं कृतावस्थान समीपः तदेवासमानत्वाद्दर्शयन्नाह स्थिरं अचल अतुलोन्नति अप्राधारणमहत्त्वमूढतुङ्गमेघं तद्धृतमहामेघं आश्रयणीयत्वात् ऊर्ज्जस्वीति साहङ्कारवस्त्वभिधानात् ॥ ४८ ॥ ज० म०

स्फटिकमणिमयैः सरत्नदीपैः प्रतरुणकिन्नरगीतनिस्वनैश्च ।
अमरपुरमतिं सुराङ्गनानां दधतमदुःखमनल्पकल्पवृक्षम् ॥ ४६॥
पर्य्यायोक्तम् ।

---

प्रचपलमित्यादि। पुनः कीदृशं महेन्द्रं जन लोकं विवर्ज्य त्यक्त्वा विजनत्वात् अर्णवस्य समुद्रस्य उपकण्ठे समीपे आत्मसदृशत्वात् कृता वसतिर्येन स्थिरमचलं अतुलोन्नतिं महोच्छ्रायं एतेन गुरुत्वमूर्जितत्वञ्च सूचितं जढतुङ्गमेघं धृतमहामेघं भारसहत्वात् जनवर्ज्जने हेतुमाह प्रचपलेति कीदृश जनं असमानं स्वस्यासदृशं असमानत्वं दर्शयन्नाह प्रचपल अस्थिरं अगुरुं लघुं अतएव भारासहनशीलं अनूर्जितं दर्पशून्य दुर्बलं वा जनस्यासदृशत्वात् त्यागः स्वसदृशस्यार्णवस्य समीपे वासश्च युक्तः। ऊर्जस्वीति साहङ्कारवस्त्वभिधानात् यदुक्तं ऊर्जस्वि-रूढाहङ्कारमिति ॥ ४८ ॥ भ०

स्फटिकमणिमयैरित्यादि। स्फटिकमणिमयैः रत्नदीपयुक्तैः प्रतरुणानां किन्नराणां गीतनिस्वनैश्च हेतुभूतैः अमरपुरमतिं स्वर्गबुद्धिं सुराङ्गनानां दधतं जनयन्तं अदुःखं न विद्यते दुःखमस्मिन्निति सुखहेतुमित्यर्थः बहुकल्पवृक्षं समीयुः। पर्य्यायोक्तिरिति अमरपुरमतिं दधतमित्यनेन पर्य्यायेण वचनगत्या तदेवामरपुरमिति प्रतिपादनात् तथाचोक्तं पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयत इति ॥ ४६ ॥ ज० म०

स्फटिकेत्यादि। पुनः कीदृश महेन्द्रं रत्नदीपसहितैः स्फटिकमणीनां मयैः प्रकृष्टतरुणानां किंपुरुषाणां गीतनादैश्च हेतुभिः सुराङ्गनानां देवस्त्रीणां अमरपुरमति स्वर्गबुद्धिं दधत जनयन्तं अदुःखं नास्ति दुःखं यत्र सुखहेतुमित्यर्थः अनल्पा बहवः कल्पवृक्षा यत्र तं एवम्भूतं महेन्द्रं समीयुरित्यन्वयः। पर्य्यायोक्तमिति अमरपुरमतिं दधतमिति पर्य्यायेण वचनभङ्ग्या तदेवामरपुरमिति प्रतिपादनात्। यदुक्तं अर्थमिष्टमनाख्याय तस्यैवार्थस्य सिद्धये। यत्प्रकारान्तराख्यानं पर्य्या-

अथ ददृशुरुदीर्णधूमधूम्राम्
दिशमुदधिव्यवधिं समेतसीताम्।
सहरघुतनयाः प्लवङ्गसेनाः
पवनसुताङ्गुलिदर्शितामुदक्षाः॥ ५०॥
समाहितम्।

---

योक्तं तदुच्यते इति अन्यत्रापि पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयत इति काव्यप्रकाशेऽपि पर्य्यायोक्तं विना वाच्यवाचकत्वेन वस्तु यदिति॥ ४९॥ भ०

अथेत्यादि। अथ प्राप्त्यनन्तरं प्लवङ्गसेना. सहरघुतनया दिशं ददृशु. उदधिव्यवधिं सजलधिव्यवधानां दक्षिणामित्यर्थः उपसर्गे घोः किः उदीर्णेन महता धूमेन धूम्रामस्पष्टां समेतसीतां सङ्गता सीतानयेति तृतीयार्थे बहुव्रीहिः पवनसुतस्याङ्गुल्या दर्शितां उदक्षाः ऊर्द्धीकृताक्षाः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् विश्लक्षणोऽङ्गेषु न भवति तस्यानित्यत्वात् तेन दंष्ट्रेत्युपपन्नं भवति समाहितमिति अनन्यमनस्कतया दिशोऽवलोकनात्॥ ५०॥ ज० म०

अथेत्यादि। महेन्द्रप्राप्त्यनन्तरं रघुतनयाभ्यां रामलक्ष्मणाभ्यां सहिता वानरसेनाः उदक्षा उन्नतनेत्राः सत्यः समुद्रव्यवधानां दक्षिणां दिशं ददृशुः कीदृशीं उदीर्णेन महता धूमेन धूम्रां कृष्णलोहितां कृशिगत्यां क्ते रूपं समेता सङ्गता सीता यां यत्र वा पवनसुतस्य हनूमतोऽङ्गुल्या दर्शितां निर्द्दिष्टां उदक्षा इति उन्नतमूर्द्धीकृतमक्षं चक्षुर्यासां इन्द्रियसामान्यवाचिनोऽप्यक्षशब्दस्य विशेषपरत्वान्नेत्रवाचकत्वं किंवा सक्थ्यक्ष्णः षः स्वाङ्गे इति षप्रत्ययान्तस्य उदक्षशब्दस्य स्वस्रादौ पाठस्तेन नमनसंख्यास्वस्रजादेरिति ईप्प्रत्ययनिषेधः नदादिपाठस्यानित्यत्वादिति कालापाः मालादित्वादिति वासवताः प्लवङ्गसैन्या इति पठन्त्यन्ये। समाहितमिति दक्षिणदिगवलोकनं स्वत एव जायमानं हन-

जलनिधिमगमन्महेन्द्रकुञ्जात्प्रचयतिरोहिततिग्मरश्मिभासः ।
सलिलसमुदयैर्महातरङ्गैर्भुवनभरक्षममप्यभिन्नवेलम् ॥ ५१ ॥

उदारम् ।

---

मदङ्गुलिदर्शितत्वेन सुकरत्वात् समाहितं यदुक्तं समाधिः सुकरं कार्य्यं कारणान्तरयोगत इति अन्यत्रापि किञ्चिदारभमाणस्य कार्य्यं दैववशात्मनः । तत्साधनसमापत्तिर्यदाऽऽस्तत्समाहितमिति जयमङ्गलायान्तु एकचित्ततया दिशोऽवलोकनात् समाहितमित्युक्तम् ॥ ५० ॥ भ०

जलनिधिमित्यादि । महेन्द्रकुञ्जात् जलनिधिमगमन् गतवत्यः प्लवङ्गसेनाः छादित्वात्तुरङ्गप्रचयेन उच्चतया तिरोहितास्तिग्मरश्मिभासो येन निकुञ्जेन तस्मान्निकुञ्जात् सलिलसमुदयैर्महातरङ्गैर्महोर्मिभिः भुवनस्य भरणे क्षममपि शक्तमपि भूभरण इति क्रैयादिकः तस्य क्षतोरपि रूपं अभिन्नवेलं अनतिक्रान्तमर्य्यादं जलनिधिं उदारमिति उदात्तमित्यर्थः महानुभावताप्रतिपादनात् यतो महातरङ्गैर्जलसमूहैर्भुवनभरक्षममपि अभिन्नवेलमिति द्विविधमुदारं महानुभावतया विविधरत्नयोगाच्चेति इयं महानुभावता दर्शिता ॥ ५ ॥ ज० म०

जलनिधिमित्यादि । सरघुतनयाः प्लवङ्गसेना महेन्द्रकुञ्जात् जलनिधिमगमन् औगमल्लगत्याम् छादित्वात् अङ्ग प्रचयेन समूहेन तिरोहिता आच्छादितास्तिग्मरश्मेः सूर्य्यस्य भासो दीप्तयो याभिस्ताः प्लवङ्गसेनानां विशेषणं प्रचयेन उच्चतया तिरोहितास्तिग्मरश्मिभासो येन तस्मादिति कुञ्जविशेषणं वा कीदृश जलनिधिं महान्तस्तरङ्गा ऊर्मयो येषु तैः सलिलसमुदयैर्जलसमूहैर्भुवनस्य पृथिव्या भरणे पूरणे क्षमं शक्तमपि अभिन्नवेलमनतिक्रान्तमर्य्यादम् । उदात्तमिति महानुभावताप्रतिपादनात् महानुभावत्वन्तु महातरङ्गजलसमूहैर्भुवनभरक्षमस्याप्यभिन्नवेलत्वात् तथाचोक्तं आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् । उदात्तं नाम तं प्राहुरलङ्कारं मनीषिण इति उदारमिति पाठेऽप्ययमेवार्थः

पृथुगुरुमणिशुक्तिगर्भभासा ग्लपितरसातलसंभृतान्धकारम्।
उपहतरविरश्मिवृत्तिमुच्चैः प्रलघुपरिप्लवमानवज्रजालैः॥ ५२॥
उदारमेव।

---

द्विविधमिदं महानुभावत्वात् नानारत्नयोगित्वाच्च आद्यमत्रोक्तम् ॥ ५१ ॥ भ०

द्वितीयमाह

पृथ्वित्यादि। पृथवो महान्तः गुरवश्च न परिच्छेद्याः मणयो मौक्तिका यासां शुक्तीनां तथाविधानां गर्भस्य भासा दीप्त्या ग्लपितं क्षयितं रसातले संभृतमुपचितमन्धकारं येन तं उच्चैरुपरि प्रलघूनामल्पानां परिप्लवमानानां वज्राणां यानि जालानि समूहाः तैरुपहता रविरश्मिवृत्तयो यस्मिन् सः तं जलनिधिमगमन् यद्वज्र वारिणि तरति तत्प्रशस्तमित्युक्तं एतदेवापरेऽन्येन वाक्यार्थेनान्यथा विदुः। नानारत्नवियुक्तं यत्तत्किलोदारमुच्यते इति ॥ ५२ ॥ ज० म०

द्वितीयं दर्शयति

पृथ्वित्यादि। कीदृशं जलनिधिं पृथवो महान्तो गुरवो गुरुत्वाख्यगुणविशेषयुक्ता ये मणयो मौक्तिकानि तेषां याः शुक्तयः तासां गर्भभासा अन्तर्लीनदीप्त्या ग्लापितं नाशितं रसातले पाताले सम्भृतमुपचितमन्धकारं येन तं मुक्तास्फोटः स्त्रियां शुक्तिरित्यमरः। उच्चैरुपरि प्रलघूनां लघुतमानामत एव परिप्लवमानानां तरतां वज्राणां जालैः समूहैरुपहता रविरश्मिवृत्तयो येन यत्र वा तं यद्वज्रं जले तरति तत्प्रशस्तं यदुक्तं रत्नपरीक्षायां गुरूणि सर्वरत्नानि वज्रमेकं परं लघु। भिद्यन्तेऽन्यानि वज्रेण तन्न केनापि भिद्यत इति। उदात्तमेवेति विविधरत्नर्द्धियुक्तत्वात् यदुक्तं पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम्। विवक्षितमिति व्यक्तमुदात्तं द्वयमप्यद इति अन्यत्रापि नानारत्नर्द्धियुक्तं यत्तत्रोदात्तं किलोच्यत इति ॥ ५२ ॥ भ०

समुपचितजलं विवर्द्धमानैरमलसरित्सलिलैर्विभावरीषु।
स्फुटमवगमयन्तमूढवारीन् शशधररत्नमयान्महेन्द्रसानून् ॥५२॥
उदारमेव।
भुवनभरसहानलङ्घ्यधाम्नः पुरुरुचिरत्नभृतो गुरूरुदेहान्।

---

समुपचितजलमित्यादि। विभावरीषु विवर्द्धमानैरमलैः सरित्सलिलैः समुपचितजलं उदधिं स्पष्टमवगमयन्तं बोधयन्तं किमित्याह महेन्द्रसानून् शशधररत्नमयान् चन्द्रकान्तस्वभावान् जढवारीन् अन्यथा कथं धीयते जलं यदि चन्द्रकान्तसानवो न स्युः उदारमेवेति रत्नयोगात् ॥ ५२ ॥ ज० भ०

समुपेत्यादि। कीदृशं जलनिधिं विभावरीषु रात्रिषु विवर्द्धमानैरमलसरित्सलिलैः निर्मलनदीजलैः समुपचितजलं अतएव महेन्द्रसानून् शशधररत्नमयान् प्रचुरचन्द्रकान्तमयान् तत्स्वरूपान् वा अवगमयन्तं बोधयन्तं जढवारीन् घृतजलान् यदि तत्र चन्द्रकान्तमयाः सानवो न स्युस्तदा कथमूढजलाः स्युः ततश्च कथं वा तत्समीपे नदीनां जलवृद्धिरिति तदनुमानमिति भावः। उदात्तमेवेति रत्नयोगात् उदात्तं वस्तुनः सम्पदिति काव्यप्रकाशः ॥ ५२ ॥ भ०

भुवनभरसहानित्यादि। गिरीन् भुवनभरसहान् अहींश्च तादृशानेव दधतं जलनिधिममन् गिरीनलङ्घ्यधाम्नः अहींश्चानभिभवनीयतेजसः गिरीन् पुरुरुचिरत्नभृतः अहींश्च महारुचिरत्नभृतः गिरीन् गुरूरुदेहान् अहींश्च महाकायान् अभावधुराः असपीडिताः निलीनाः कूर्म्मा नक्राश्च येषु तान् गिरीनहींश्चोढूढभुवो घृतवसुधान् गिरीनहींश्च नक्रव्यग्रशयानिति तुल्यं पूर्वस्यानुनासिकः श्लिष्टमिति। उपमानेनोपमेयत्वस्य साधनात् तथाचोक्तं विशेषणेन श्लिष्टम्। उपमानेन यत्तत्त्वमुपमेयस्य साध्यते। क्रियागुणाभ्यां नाम्ना च श्लिष्टं तदभिधीयत इति अत्रोपमानभूतैरहिभिरुपमेयभूतानां गिरीणां तत्स्य तादृप्यस्य भुवन-

श्रमविधुरविलीनकूर्म्मनक्रान् दधतमुदूढ भुवो गिरीनहींश्च ॥५४

श्लिष्टम्।

प्रदहन्मुरुरुमुक्तशीकरौघान्

विमलमणिद्युतिसंभृतेन्द्रचापान्।

---

भरादिताद्रूप्यक्रियया तद्गुणेन च साधनेन गिरिभिरहिभिश्च नाम्ना च शब्देन भुवने भरसहानित्यादिना साध्यमानत्वात् रूपकसपीदृशमेव किन्तु श्लिष्टस्य भेदेनोपमेययोर्युगपत्प्रयोगात् रूपके पुनरेकस्यैवोपमेय-पुरुषस्य व्याघ्र उपमानं तथाचोक्तं लक्षणं रूपकेऽपीदं विद्यते काममत्र तु। दृष्टः प्रयोगो युगपदुपमानोपमेययोरिति तदुक्तम्। लक्षणं श्लिष्टं सहोक्त्युपमाहेतुनिर्द्देशात्त्रिविधं यथोक्तं स्लेषादेवार्थवचसोर्यस्य च क्रियते भिदा। तत्सहोक्त्युपमा हेतुनिर्द्देशात्त्रिविधं यथेति तत्रेदं सहोक्तिश्लिष्ट-मुक्तं गिरीनहींश्चेति सहोक्त्या निर्द्देशात्॥ ५४ ॥ ज० म०

भुवनेत्यादि। पुनः कीदृश जलनिधिं गिरीन् पर्वतान् अहीन् सर्पांश्च दधतं पर्वतसर्पयोर्युगपद्विशेषणान्याह भुवनभरसहान् जगतां भारस्य सहान् दृढत्वात् बलवत्त्वाच्च सहेः पचादित्वादन् अलङ्घ्यधाम्नः अनभिगम्यस्थानान् अहिपक्षे अनभिभवनीयतेजसः पुरुरुचिरत्नभृतः प्रचुरदीप्तिमद्रत्नधारकान् रत्नोत्पत्तिस्थानत्वात् फणारत्नयोगाच्च गुरुरु-देहान् अलघुमहाशरीरान् श्रमविधुरविलीनकूर्मनक्रान् श्रमेण विधुरा विकलाः सन्तो विलीनाः संश्लिष्टाः कच्छपाः कुम्भीराश्च येषु उदूढभुवो धृ-तभूमीन् पर्वतोपरि वालुकासञ्चयेन भूम्युत्पत्तेः भूमिधारकस्य शेषनागस्य तत्र सत्वाच्च एवमेवम्भूतं जलनिधिमगमन्निति सम्बन्धः श्लिष्टमिति श्लिष्ट-मिष्टमनेकार्थमेकरूपान्वितं वचः। तदभिन्नपदं भिन्नपदप्रायमितिद्विधा-तदिहाभिन्नपदं दर्शितं पदभङ्गाभावात् तत्पुनस्त्रिविधं तथाचोक्तं स्लेषा-देवार्थवचसोर्यस्य च क्रियते भिदा। तत्सहोक्त्युपमा हेतुनिर्द्देशात्त्रिविधं यथेति। तदिदं सहोक्तिलक्षणं श्लिष्टमुक्तं गिरानहींश्चेति सहोक्त्या निर्द्देशात् अन्यद्वयं क्रमेणाग्रे उदाहरिष्यति॥ ५४ ॥ भ०

जलमुच इव धीरमन्द्रघोषान्
क्षितिपरितापहृतो महीतरङ्गान् ॥ ५५ ॥

श्लिष्टमेव ।

विद्रुममणिकृतभूषा मुक्ताफलनिकररञ्जितात्मानः ।
बभुरुदकनागरुग्णा वेलातटशिखरिणो यत्र ॥ ५६ ॥

हेतुश्लिष्टमेव ।

---

प्रददृशुरित्यादि । महातरङ्गान् जलमुच इव मेघानिव प्रददृशुः प्रदृष्टवन्तः उरवो महान्तो मुक्ताः प्रकीर्णाः शीकरौघा येषु अमलमणिद्युतय एव सन्ततानि इन्द्रचापानि येषु धीरमन्द्रघोषान् मधुरगम्भीरध्वनीन् क्षितिपरितापहृतः पृथिवीसन्तापहारिणः इदमपि यथानिर्दिष्टविशेषणात् श्लिष्टं जलमुच इवेत्युपमानिर्देशात् ॥ ५५ ॥ ज० म०

प्रददृशुरित्यादि । सहरघुतनयाः प्लवङ्गसेना जलमुच इव मेघानिव महतस्तरङ्गान् ऊर्मीन् प्रददृशुः मेघतरङ्गयोर्युगपद्विशेषणान्याह उर्विति उरवो महान्तो मुक्ताः कीर्णाः शीकरौघा येषु तान् निर्मलरत्नदीप्तय एव ताभिः करणभूताभिर्वा सम्भृतानि इन्द्रचापानि यत्र तदुक्तं अकाले शक्रचापानामुदयस्तु यतो भवेत् । असौ धन्यतरो ज्ञेयो बहुमूल्यो महामणिरिति मेघपक्षे अमलमणीनामिव द्युतिर्येषां तादृशानि उद्भृतेन्द्रचापानि यत्र धीरमन्द्रघोषान् मधुरगभीरध्वनीन् क्षितिपरितापहृतः पृथिवीसन्तापहारिणः । श्लिष्टमेवेति पूर्वोक्तलक्षणत्वात् किन्तु जलमुच इवेत्युपमानिर्देशादुपमाश्लिष्टमिदम् ॥ ५५ ॥ भ०

विद्रुमेत्यादि । वेलातटशिखरिणो यत्रेति जलनिधौ बभुः शोभन्ते स्म ते तमीयुरिति वक्ष्यमाणेन सम्बन्धः वेलातटाः शिखरिणश्चेति द्वन्द्वः शेषाणि विशेषणान्युभयत्र तुल्यानि इदमपि यथानिर्दिष्टमेव किन्तु हेतुश्लिष्टं हेतुद्वारेण विशेषणानां निर्देशात् विद्रुममणिकृतभूषत्वात् जलहस्तिभग्नत्वाच्च शुभुरिति ॥ ५६ ॥ ज० म०

भृतनिखिलरसातलः सरलः
शिखरिसमोर्म्मितिरोहितान्तरीक्षः ।
कुत इह परमार्थतो जलौघो
जलनिधिमीयुरतः समेत्य मायाम् ॥ ५७ ॥

अपह्नुतिः ।

---

विद्रुमेत्यादि । यत्र जलनिधौ वेलातटशिखरिणो बभुः शोभन्ते स्म तमीयुरित्यग्रिमश्लोकेनान्वयः वेलातटाश्च शिखरिणश्चेति द्वन्द्वः उभयं विशिनष्टि विद्रुमैः प्रवालैर्मणिभिश्च कृता भूषा येषु ते तथा मुक्तामणीनां उत्कृष्टमौक्तिकानां मुक्तानां मणीनाञ्च वा निकरेण समूहेन रञ्जिता आत्मानो देहाः प्रदेशा येषां उदकनागरुग्णा जलहस्तिभग्नाः श्लिष्टमेवेति पूर्वोक्तलक्षणसत्त्वात् किन्तु हेतुश्लिष्टमिदं युगपदुभयविशेषणानां हेतुत्वेनैव निर्देशात् प्रवालमणिकृतालङ्कारत्वात् मुक्तामणिदीप्तिरञ्जितरूपत्वात् उदकनागभग्नत्वाच्च बभुरित्यर्थः ॥ ५६ ॥ भ०

भृतनिखिलरसातल इत्यादि । एवं गुणविशिष्टो जलौघः कुत इह प्रदेशे परमार्थतः परमार्थेन विद्यते । किं तर्हि माया यतः पूरिताशेषपातालत्वात् सरलत्वात् शिखरसमैरूर्मिभिः पिहितान्तरीक्षत्वाच्च सराघवाः प्लवङ्गसेनाः समेत्य मायामिव जलधिमीयुः ज्ञातवत्यः सर्वे गत्यर्था ज्ञानार्था इति भज भरण इति भौवादिकः अपह्नुतिरिति मायामित्यन्तर्गतोपमारूपतया निर्देशात् विद्यमानार्थस्य चापह्नवात् तथाचोक्तं अपह्नुतिरितीष्टात्र किञ्चिदन्तर्गतोपमा । भूतार्थापह्नवादेषा क्रियतेऽस्याभिदा यथेति ॥ ५७ ॥ ज० म०

भृतेत्यादि । सहरघुतनयाः प्लवङ्गसेनाः समेत्य मिलित्वा जलनिधिं अतः कारणात् मायामिव ईयुर्ज्ञातवत्यः सर्वेषां गत्यर्थानां ज्ञानार्थत्वात् किं कारणं तदाह इह प्रदेशे जलौघः कुतः परमार्थतस्तत्त्वेन विद्यते कीदृशः भृतनिखिलरसातलः पूरिताशेषपातालः सरलः सहितः पर्वततुल्य-

शशिरहितमपि प्रभूतकान्तिम्
विबुधहृतश्रियमप्यनष्टशोभम्।
मथितमपि सुरैर्दिवं जलौघैः
समभिभवन्तमविच्युतप्रभावम्॥ ५८॥
विशेषोक्तिः।

---

तरङ्गैराच्छादिताकाशः जलस्यैतादृशत्वासम्भवादियं खलु मायेति भावः।
अपह्नुतिरिति जलनिधिमुपमेयमसत्यं कृत्वा मायामित्युपमानस्य सत्यतया व्यवस्थापितत्वात् तथाचोक्तं प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिरिति अन्यत्रापि अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवात् सेयं क्रियतेऽस्याभिदा यथेति॥ ५७॥ भ०

शशिरहितमित्यादि। शशिरहितमपि सुधाचन्द्ररहितमपि प्रभूतकान्तिं पद्मरागादिरत्नावभासितत्वात् विबुधहृतश्रियमपि अनष्टशोभं सर्वदा शोभास्पदत्वात् सुरैर्मथितमपि दिवमाकाशं जलौघैः समभिभवन्तं अत्युच्छ्रितत्वात् तदेवमविच्युतप्रभावं अखण्डिताभिमानमीयुः ज्ञातवत्यः विशेषोक्तिरिति शश्यादेरेकदेशस्य विगमेऽपि प्रभूतकान्त्या गुणान्तरेण स्तुतिविशेषस्य प्रतिपादनात् यथोक्तं एकदेशस्य विगमे या गुणान्तरसंस्तुतिः। विशेषप्रथनायासौ विशेषोक्तिर्मता यथेति॥ ५८॥ ज० म०

शशीत्यादि। कीदृशं जलनिधिमीयुः शशिरहितमपि चन्द्रेण विरहितमपि प्रभूतकान्तिं प्रचुरदीप्तिं नानारत्नोपशोभितत्वात् विबुधहृतश्रियमपि देवहृतलक्ष्मीकमपि अनष्टशोभं सकलशोभास्पदत्वात् सुरैर्मथितमपि जलौघैर्दिवमाकाशं सम्यगभिभवन्तं अत्युच्छ्रितत्वात् अतएव अविच्युतप्रभावं अखण्डितमहिमानं विशेषोक्तिरिति चन्द्रादेरेकदेशस्य वैकल्येऽपि तत्कार्यप्रभूतकान्त्यादिना गुणान्तरेण विशेषस्य प्रतिपादनात् तथाचोक्तं गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम्। विशेषदर्शनायैव सा विशेषोक्तिरिष्यते। अन्यत्रापि एकदेशस्य विगमे या गुणान्तरसंस्तुतिः। विशेषप्रथनायासौ विशेषोक्तिर्मता यथेति॥ ५८॥ भ०

क्षितिकुलगिरिशेषदिग्गजेन्द्रान्
सलिलगतामिव नावमुद्वहन्तम् ।
धृतविधुरधरं महावराहम्
गिरिगुरुपोत्रमपीहितैर्जयन्तम् ॥ ५८ ॥

व्याजस्तुतिः ।

---

क्षितीत्यादि । क्षितिं पृथिवीं कुलगिरीन् कुलपर्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादीन् सलिलगतामिव नावमुद्वहन्तं जलनिधिं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा विह्वला धरा मही येनेति गिरिगुरुपोत्रं गिरिवत् गुरु पोत्रं यस्य तमपीहितैश्चेष्टितैर्जयन्तं जलनिधिमीयुः । व्याजस्तुतिरिति क्षित्यादिधारणादधिकगुणस्य जलनिधेस्तोत्रव्यपदेशेन वराहेण तुल्यत्वात् तमपि महावराहं जयन्तमिति किञ्चिद्विधातुमिच्छया निन्दनात् तथाचोक्तं दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता । किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ यथेति ॥ ५८ ॥ ज० म०

क्षितीत्यादि । जलनिधिमीयुरिति सम्बन्धः कीदृशं क्षितिं कुलपर्वतान् शेषं नागराजं दिग्गजेन्द्रानैरावतादींश्च सलिलगतां नौकामिव उद्वहन्तं दधतं अतएव महावराहमपि ईहितैश्चेष्टितैर्जयन्तं कीदृशं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा प्रलये व्याकुला धरा पृथिवी येन गिरिवत् गुरु महत् पोत्रं मुखं यस्य समुद्रपक्षे पोत्रं तरङ्गः व्याजस्तुतिरिति जलनिधेः को महिमा यः सदा क्षित्यादिभारं सेवकवत् वहतीत्यपो निन्दां कृत्वा महावराहं जयन्तमिति प्रशंसनात् यद्वा भगवज्जयमप्यापाततो निन्दात्वेनोक्ता तत्साहश्यप्रदर्शनेन स्तुतिरुक्ता तथाचोक्तं यदि निन्दति वा स्तौति व्याजस्तुतिरसौ मता । दोषाभासा गुणा एव भजन्ते यत्र सन्निधिमिति अन्यैस्तु क्षित्यादिधारणादधिकगुणस्य जलनिधेः स्तोत्रव्यपदेशेन महावराहतुल्यत्वात् तमपि महावराहमीहितैर्जयन्तमिति किञ्चिद्विधित्सया निन्दनाद्व्याजस्तुतिरित्युक्तं तथाहि दूराधिकगुणस्तोत्र-

गिरिपरिगतचञ्चलापगान्तम्
जलनिवहं दधतं मनोऽभिरामम्।
गलितमिव भुवो विलोक्य रामम्
धरणिधरस्तनशुक्लपट्टचीनम् ॥ ६० ॥

उपमारूपकम् ।

अपरिमितमहाद्भुतैर्विचित्र-
स्सुरतमलिनः शुचिभिर्महानलङ्घ्यैः ।

---

व्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ मते-
ति ॥ ५९ ॥ भ०

गिरिपरीत्यादि। गिरिभिः परिगताः संसृष्टाः चञ्चला विलोला आपगान्ता नद्यन्ता यस्मिन् जलनिवहे तं जलनिवहं दधतं धारयन्तं समुद्रमीयुः कीदृशमिव जलनिवहं रामं भर्त्तारं विलोक्य हृष्टाया इत्यर्थ-प्राप्तं ततश्च पूर्वकाले क्त्वा भुवः पृथिव्या इव धरणिधरस्तनयोः शुक्लपट्टस्य चीनमिव गलितं उपमारूपकमिति तथोक्तं उपमानस्य तद्भावमुपमेयस्य रूपयन् । यो वदत्युपमाभेदमुपमारूपक यथेति ॥ ६० ॥ ज० म०

गिरिपरीत्यादि। कीदृशं जलनिधिं जलस्य निवहं समूहं दधतं धारयन्तं कीदृशं जलनिवहं गिरिभिः परिगताः संश्लिष्टाश्चञ्चला नद्यन्ता नद्यवयवा यत्र तं मनोऽभिरामं स्वपतिं विलोक्य हर्षवशात् जायारूपायाः भुवः पृथिव्या धरणिधरस्य पर्वतस्य स्तनरूपस्य गलितं स्रस्तं शुक्लवर्ण-पटाञ्चलमिव उपमारूपकमिति उपमासहितं रूपकमित्यर्थः। अत्र उपमानेन स्तनेन उपमेयस्य कस्यचिद्धरणीधरस्य स्तनत्वं रूपितं गलितं पट्टचीनमिवेत्युपमापि निर्दिष्टा तथाचोक्तं उपमानेन तद्भावमुपमेयस्य रूपयन् । यद्वदत्युपमानं तदुपमारूपकं यथेति अन्यत्राप्युक्तं दृष्टं साधर्म्यवै-धर्म्यदर्शनान्मुख्यगौणयोः। उपमाव्यतिरेकाख्यं रूपकद्वितयं यथेति ॥ ६०॥भ०

अपरिमितमहाद्भुतैरित्यादि। तरुस्तगपतिलब्धपर्वाञ्चितोर्न्द्रैः सु-

तरुमृगपतिलक्ष्मणक्षितीन्द्रैः
समधिगतो जलधिः परं बभासे ॥ ६१ ॥

तुल्ययोगिता।

न भवति महिमा विना विपत्ते-
रवगमयन्निव पश्यतः पयोधिः।

---

ग्रीवलक्ष्मणरामैः समधिगतः प्राप्तो जलधिः परं सुष्ठु बभासे शोभते स्म कीदृशैः कीदृशो इत्याह अपरिमितमहाद्भुतैर्विचित्रः नानाद्भुतः शुचिभिर्विमलैः च्युतमलिनो निर्म्मलोऽलङ्कैरनभिभवनीयैः महान् अनभिभवनीयः एवञ्च कृत्वा तेनापि ते समधिगताः परं बभासिरे इति तुल्ययोगितेति न्यूनानामपि तेषां सुग्रीवादीनां विशिष्टेन जलनिधिना महाद्भुतत्वादिगुणसाम्यविवक्षया तुल्यस्य कार्य्यस्य भासनलक्षणस्यानुष्ठानेन तुल्ययोगात् तथाचोक्तम्। न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया। तुल्यकार्य्यक्रियायोगादित्युक्ता तुल्ययोगितेति॥ ६१ ॥ ज० म०

अपरिमितेत्यादि। तरुमृगाणां वानराणां पत्या सुग्रीवेण लक्ष्मणेन क्षितीन्द्रेण रामेण च समधिगतः प्राप्तो जलधिः परमत्यर्थं बभासे शोभते स्म क्रमेण सुग्रीवादीनां समुद्रस्य च तुल्यानि विशेषणान्याह अपरिमितमहाश्चर्य्यैर्विचित्रः आश्चर्य्यान्वितः च्युतमलिनः शुचिभिर्विमलैः महान् अनभिभवनीयः अलङ्कैरनभिभवनीयैः एवञ्च सति तुल्यरूपत्वात्तेन समधिगतास्तेऽपि बभासिरे इत्यर्थाद्गम्यते तुल्ययोगितेति उपमानानामपि सुग्रीवादीनां विशिष्टेन जलधिना गुणसाम्यविवक्षया तुल्यकार्य्यस्य भासनलक्षणस्य योगात् तथाचोक्तं विवक्षितगुणोत्कर्षैर्यत्समीकृत्य कस्यचित्। कीर्त्तनं स्तुतिनिन्दार्थं सा स्मृता तुल्ययोगितेति अन्यत्राप्युक्तं न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया। तुल्यकार्य्यक्रियायोगादित्युक्ता तुल्ययोगितेति ॥ ६१ ॥ भ०

न भवतीत्यादि। महिमा महत्त्वं विना विपत्तेः विनाश विना न भवति पृथग्विनेत्यादिना पञ्चमी नाश्येव तन्महत्त्वं यस्य विनाशो नास्ती-

अविरतमभवत् क्षणे क्षणेऽसौ
शिखरिपृथुप्रथितप्रशान्तवीचिः॥ ६२॥
निदर्शनम्।
मृदुभिरपि बिभेद पुष्पबाणै-
र्जलशिशिरैरपि मारुतैर्ददाह।

---

स्त्वेवमवगमयन् बोधयन्निव पयोधिस्तान् पश्यतो रामादीन् अविरत-मविच्छेदेन शिखरिवत् पृथवः प्रथिताः प्रशान्ताश्च वीचयो यस्य स एवं क्षणे क्षणे अभवत् भूतवान् निदर्शनेति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्त-त्वभवनक्रियया महिमभवनस्य तदर्थस्य विपत्तिफलस्य उपादानात् न यथैववतिशब्दानां प्रयोगात् तथाचोक्तं क्रिययैव तदर्थस्य विशिष्टस्योपदर्श-नात्। इष्टा निदर्शना नाम यथेववतिभिर्विनेति॥ ६२॥ ज० म०

न भवतीत्यादि। विपत्तेर्विना विनाशं विना महिमा महत्त्वं न भवति अन्यारभ्येति विनायोगे पञ्चमी नास्त्येव तन्महत्त्वं यस्य विपत्ति-र्नास्तीति पश्यतो रामादीन् अवगमयन्निव बोधयन्निव असौ पयोधिर-विरतं अविच्छेदेन क्षणे क्षणे शिखरिपृथुप्रथितप्रशान्तवीचिरभवत् पर्व्वतवत् पृथवो महान्तः प्रथिताः प्रकाशिताः पश्चात् प्रशान्ताश्च वीचय-स्तरङ्गा यस्य स तथा महता विपत्तौ खेदो न कर्त्तव्य इति रामं प्रत्युप-दिष्टमिति पश्यत इत्यस्य भावः। निदर्शनमिति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्तिक्रियां दर्शयित्वा अन्यत्रापि महिम्नो विपत्तिफलस्यो-पादानात् तथाचोक्तं अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम्। सदसत्वा-निदर्श्येत यदि स्यात्तन्निदर्शनमिति अन्यत्राप्युक्तं क्रिययैव तदर्थस्य विशि-ष्टस्योपदर्शनात्। इष्टं निदर्शनं नाम यथेववतिभिर्विनेति कार्य्यः शब्दो यथा घट इत्यादिवत् यथाशब्दादिभिर्विनेदं निदर्शनमिति॥ ६२॥ भ०

समुद्रोपकण्ठे रामस्य मदनावस्थामाह

मृदुभिरित्यादि। मदनोऽनर्थपण्डितः निष्प्रयोजनकुशलः पुष्प-

रघुतनयमनर्थपण्डितोऽसौ
न च मदनः क्षतमाततान नार्च्चिः ॥ ६२ ॥

विरोधः।

अथ मृदुमलिनप्रभौ दिनान्ते
जलधिसमीपगतावतीतलोकौ।

---

वाणैरपि मृदुभिः रघुतनयं विभेद न चासौ क्षतं खण्डनमाततान जनितवान् जलशिशिरैर्मारुतैस्तमेव रघुतनयं ददाह न चासावर्च्चिर्ज्वालामाततान विरोध इति पुष्पवाणानां यन्मार्द्दवं मरुताञ्च जलसंसर्गाद्यच्छैत्यं तयोर्भेददाहलक्षणे क्रिये विरुद्धे तयोरभिधानात् तयोश्च क्रिययोर्वा विरोधिनी क्रिया क्षतार्च्चिषोरवतानालक्षणास्ताः कामोद्रेकप्रतिपादनाभिधानात् तथाचोक्तं गुणस्य च क्रियाया वा विरुद्धान्यक्रियाभिधा। या विशेषाभिधानाय विरोधन्तं विदुर्यथेति ॥ ६२ ॥

समुद्रान्तिके सीतास्मरणात् रामस्य कामावस्थामाह

मृदुभिरित्यादि। मदनो मृदुभिरपि पुष्पवाणैरघुतनयं विभेद न चासौ तावतापि क्षतं खण्डनं आततान कृतवान् सजलशीतलैरपि मारुतैस्तं ददाह न चासावर्च्चिराततान अतएवासौ अनर्थपण्डितः निष्प्रयोजने कर्म्मणि कुशलः विरोध इति पुष्पवाणानां यन्मार्द्दवं मारुतानाञ्च जलसंसर्गात् यच्छैत्यं तयोर्भेददाहलक्षणं क्रियाद्वयं विरुद्धमभिहितं तयोश्च क्रिययोर्व्विरुद्धं क्षतार्च्चिषोरकरणं तेन कामोत्कर्षरूपोविशेषः प्रतिपादितः अयञ्च विरोधो न वास्तवः भेददाहाभ्यां पीड़ामात्रस्य लक्षितत्वात् यथाचोक्तं विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्। विशेषसाधनायैव स विरोधः स्मृतो यथेति। अन्यत्राप्युक्तं गुणस्य च क्रियाया वा विरुद्धार्थक्रियाभिदा। या विशेषाभिधानाय विरोधं तं विदुर्यथेति ॥ ६२ ॥ भ०

अथेत्यादि। यथोक्तवस्त्वनन्तरं मृदुमलिनप्रभौ मृदुरप्रचण्डा मलिना प्रभा ययोः तौ दिनकरराघवनन्दनौ रघोरपत्यं राघवः दशरथ-

अनुकृतिमितरेतरस्य मूर्त्यो-
र्दिनकरराघवनन्दनावकार्ष्टाम् ॥ ६४ ॥
उपमेयोपमा ।
अपहरदिव सर्व्वतो विनोदान्
दयितगतं दधदेकधा समाधिम् ।

---

स्तन्नन्दनो रामः दिनान्ते अन्योन्यस्य दिवाकरो रामस्य रामोऽपि दिवाकरस्येति मूर्त्योर्द्वयोरनुकृतिमिवानुकारमिव यथोक्तधर्म्मतुल्यतया अकार्ष्टां कृतवन्तौ अतीतलोकौ त्यक्तलोकौ उपमेयोपमेति तयोः पर्य्यायेण उपमानोपमेयत्वात् तथाचोक्तं उपमानोपमेयत्वं यत्र पर्य्यायतो भवेत् । उपमेयोपमां धीरा ब्रुवते तां यथोदितामिति ॥ ६४ ॥ ज० म०

अथेत्यादि । अनन्तर दिनकरः सूर्य्यो राघवस्य दशरथस्य नन्दनो रामो दिनस्यान्ते सन्ध्याकाले अन्योन्यस्य मूर्त्त्योः शरीरयोरनुकृतिमनुकारं अकार्ष्टां कृतवन्तौ तुल्यधर्म्मत्वात् सूर्य्यो रामस्य मूर्त्तेरनुकृतिं रामोऽपि सूर्य्यस्य मूर्त्तेरनुकृतिं चकारेत्यर्थः द्वयोस्तुल्यतां तौ कीदृशौ मृदुरप्रचण्डा मलिना प्रभा ययोः सूर्य्यस्य दिनान्तवशात् रामस्य शोकाच्छय्यादिशयनाच्च समुद्रसमीपं गतौ त्यक्तलोकौ च । उपमेयोपमेति इतरेतरशब्देन समानधर्म्मत्वात् पर्य्यायेणोपमानोपमेयत्वकथनात् तथाचोक्तं उपमानोपमेयत्वं यत्र पर्य्यायतो भवेत् । उपमेयोपमां धीरा ब्रुवते तां यथोदितामिति ॥ ६४ ॥ भ०

अपहरदित्यादि । ततस्तूत्तरकालं दिवसे ये विनोदाः चेतसः सन्तापकाः तान् सर्वतः सर्व्वान् सर्व्वेण वा प्रकारेण अद्यादित्वात्तसिः अपहरदिव अपनयदिवान्धकार दयितगतं प्रियागतञ्च समाधिं चित्तैकाग्रतां एकधा एकप्रकारं दधत् धारयत् घनरुचि बहुलच्छायं ववृधे वर्द्धते स्म सह रघुनन्दनमन्मथोदयेन तदानीं तस्य कामोदयोऽपि ववृधे सहोक्तिरिति अन्धकारमन्मथाश्रितयोर्वर्द्धनक्रिययोस्तुल्यकालयोः ववृध इत्यनेन

घनरुचि ववृधे ततोऽन्धकारम्
सह रघुनन्दनमन्मथोदयेन ॥ ६५ ॥

सहोक्तिः ।

अधिजलधि तमः क्षिपन् हिमांशुः
परिददृशेऽथ दृशां कृतावकाशः ।

---

पदेन कथनात् तथाचोक्तं तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते वाक्येनैकेन कथ्येते सहोक्तिः सा मता यथेति ॥ ६५ ॥ ज० म०

अपहरदित्यादि। ततो दिनान्तादुत्तरकालं अन्धकारं रघुनन्दनस्य रामस्य कामोदयेन सह ववृधे तदानीमन्धकारो रामस्य कामोदयोऽपि प्रवृद्ध इत्यर्थः उभयविशेषणमाह सर्वतो विनोदान् अपहरदिव दिवसे ये विनोदाश्चित्तप्रसादकाः तान् सर्वान् सर्वप्रकारेण वा अपनयदिव पक्षे विभक्तिव्यत्ययः दयितगतं समाधिं चित्तैकाग्रतां एकधा एकप्रकारं दधत् जनयत् घनरुचि मेघवत् श्यामं निविड़च्छायं वा कामोदयपक्षे दयिताविषये निविड़ा श्रद्धा यस्मात् दयितगतमित्यत्र प्रमदवनमित्यादिवत् ह्रस्वः वस्तुतस्तु दयितशब्देन सामान्यविवक्षया भार्य्याप्युच्यते अन्धकारोऽस्त्रियां ध्वान्तमित्यमरः। सहोक्तिरिति अन्धकारकामोदयाश्रितयोर्वृद्धिक्रिययोस्तुल्यकालयोर्ववृधे इत्यनेनाभिधानात्। तथाचोक्तं तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते। पदेनैकेन कथ्येते सहोक्तिः सा मता यथेति ॥ ६५ ॥ भ०

अधिजलधीत्यादि। अथ हिमांशुरन्धकारवर्द्धनानन्तरं अधिजलधि जलधेरुपरि विभक्त्यर्थेऽव्ययीभावः तमः क्षिपन् अपनयन् परिददृशे दृष्टः दृशां चक्षुषां कृतावकाशः दत्तप्रसरः जगल्लोक प्रलीनं तिरोभूतं पुनर्विदधदिव सृजन्निव कस्मात्तेनैवं कृतमित्याह यस्माद्यो महान् स सर्व्वः परार्थ एव परप्रयोजन एव भवति परिदृष्टिरिति दृशां कृतावकाश इत्यनेन विशिष्टस्य वस्तुन आदानात् तमः क्षिपन्नित्यनेनास्य वस्तुनः

विदधदिव जगत्पुनः प्रलीनम्
भवति महान् हि परार्थ एव सर्वः ॥६६॥

परिवृत्तिः।

अशनिरयमसौ कुतो निरभ्रे
शितशरवर्षमसत्तदप्यशार्ङ्गम्।

---

अपोहात् भवतीत्यादिना अर्थान्तरन्यासात् तथाचोक्तं विशिष्टस्य यदादानं अन्यापोहेन वस्तुनः। अर्थान्तरन्यासवती परिवृत्तिरसौ यथेति ॥ ६६ ॥ ज० म०

अधीत्यादि। अथान्धकारहननान्तर हिमांशुश्चन्द्रो जनैः परिदृदृशे दृष्टः कीदृशः अधिजलधि समुद्रे तमोऽन्धकारं क्षिपन् नाशयन् अधिजलधीति सप्तम्यर्थेऽव्ययीभावः दृशां चक्षुषां कृतावकाशः दत्तावसरः प्रलीनं तिरोभूतं जगत् पुनर्विदधदिव सृजन्निव कुतस्तेनैवं कृतमित्याह हि यस्मात् सर्व एव महान् जनः परार्थ एव परप्रयोजन एव भवति परिवृत्तिरिति दृशां कृतावकाश इत्यनेन विशिष्टस्य वस्तुन आदानात् तमः क्षिपन् इत्यनेन च कस्यचिद्वस्तुनोऽपोहात् भवति हीत्यादिना अर्थान्तरन्यासात् तथाचोक्तं विशिष्टस्य यदादानमन्यापोहेन वस्तुनः। अर्थान्तरन्यासवती परिवृत्तिरसौ यथेति। विद्यासागरस्तु तम.सम्बन्धिनमवकाशं नेत्रेष्वाधाय तत्सम्बन्धिनः क्षेपणस्य तमसि विधानात् परिवृत्तिरियमित्याह तथाचोक्तं अर्थानां यो विनिमयः परिवृत्तिस्तु सा यथेति ॥ ६६ ॥

अशनिरित्यादि। असौ यश्चन्द्रः किमयमशनिर्वज्रं असौ कुतो निरभ्रे नभसि कुतः यतोऽसौ मेघादुत्पद्यत इति उत निशितानां शराणां वर्षं तदप्यशार्ङ्गमविद्यमानधनुः असदविद्यमानमित्ययं मदनवशः कामाभिभूतो मुग्धः च ॥ शशाङ्के शशाङ्कविषये रघुतनयोऽभूदित्यर्थात् द्रष्टव्यं न च चन्द्रं निश्चिकाय निश्चिनोति स्म विभाषा चेरिति कुल ससन्देह इति अशनिशरवर्षाभ्यां उपमेयस्य चन्द्रस्य तत्त्वं अशनिशरवर्षमिति प्रयोक्तु-

इति मदनवशो मुहुः शशाङ्के
रघुतनयो न च निश्चिकाय चन्द्रम् ॥६७॥

ससन्देहः ।

कुमुदवनचयेषु कीर्णरश्मिः
क्षततिमिरेषु च दिग्वधूमुखेषु ।

---

रभिधानात् कुतो निरभ्रे तदप्यशार्ङ्गमिति पुनरुपमानोपमेययोर्भेदाभि-धानात् न निश्चिकाय चन्द्रमिति स्तुत्यर्थं सन्देहवचोऽभिधानाच्च तथा-चोक्तं उपमानोपमेयस्य तत्त्वञ्च वदतः पुन. । ससन्देहवचः स्तुत्यै ससन्देहं विदुर्यथेति ॥ ६७ ॥ ज० म०

अशनिरित्यादि । रघुतनयो रामः कामवशः सन् चन्द्रं न च निश्चिकाय न निर्णीतवान् किन्तु मुहुः क्षणं इत्येवं शशङ्के वितर्कितवान् किमित्याह अयमशनिर्वज्रः असावशनिर्निरभ्रे नभसि कुतः यतो मेघा-देवाशनिरुत्पद्यते किमिदं निशितानां शराणां वर्षं तदपि कुतः यतस्तद-शार्ङ्गं अविद्यमानधनुरभूत् धनुषा विना न भवतीत्यर्थः शशाङ्क इति पाठे इत्येवं मदनवशश्चन्द्रविषयेऽभूत् न च चन्द्रं निश्चिकायेति योज्यम् । ससन्देह इति उपमेयस्य चन्द्रस्य उपमानाशनिशरवर्षरूपत्वमभिधाय कुत इत्यादिना पुनरुपमानोपमेययोर्भेदाभिधानात् तावतापि न च निश्चि-काय चन्द्रमिति ससन्देहवचोऽभिधानाच्च तथाचोक्तं उपमानेन यत्तत्त्वं भेदञ्च वदतः पुन. । ससन्देहवचःस्तुत्यै ससन्देहं विदुर्बुधा इति ॥६७॥भ०

कुमुदवनचयेष्वित्यादि । कुमुदवनानां चयेषु समूहेषु दिग्वधूमुखेषु वियति च क्षततिमिरेषु खण्डिततमःसु यतस्तेषु विकीर्णरश्मिः क्षिप्तम-यूख. विललास तद्वदिन्दुः शोभते स्म चन्द्रमसः सकाशात् अन्यो यद्वद्यथा न विलसति तथा विललास इदमुक्तं भवति इन्दुर्विललास चन्द्र इवेति अनन्वय इति तस्यादृशस्य साम्यस्याविवक्षातश्चन्द्रस्योपमानोपमेयत्वात् तथा-

वियति च विललास तद्वदिन्दु-
विलसति चन्द्रमसो न यद्वदन्यः ॥६८॥

अनन्वयः।

शरणमिव गतं तमो निकुञ्जे
विटपिनिराकृतचन्द्ररश्मिरातौ।

---

चोक्तं यत्र तेनैव तस्य स्यादुपमानोपमेयता। सादृश्यस्याविवक्षातस्तमि-त्याहुरनन्वयमिति॥ ६८ ॥ ज० म०

कुमुदेत्यादि। इन्दुस्तद्वदिन्दुवत् विललास शोभते स्म चन्द्रादन्यः कोऽपि यद्वत् इन्दुवन्न विलसति इन्दुः कीदृशः कुमुदवदनानां चयेषु समूहेषु दिग्वधूनां मुखेषु वियति आकाशे च क्षततिमिरेषु खण्डितान्धकारेषु कीर्णरश्मिः प्रसारितकिरणः केचित्तु इन्दुस्तद्वत्तथा विललास यद्वत् यथा चन्द्रमसोऽन्यो न विलसतीत्याहुः। एवं सति चन्द्रस्योपमानत्वमुपमेयत्वञ्च न स्यात्। अन्ये तु इन्दुर्यथा विललास तथा तदन्यो न विलसतीत्यर्थे चन्द्रस्योपमानत्वञ्चोक्तं स्यादित्याहुः। अनन्वय इति चन्द्रस्योपमानोपमेयत्वकथनेनान्यस्य तत्सदृशस्य निरासात् तथाचोक्तं रुद्रटे सा स्यादनन्वयाख्या यत्रैक्यं वस्त्वन्यदसदृशमिति। स्वस्य स्वयमेव भवेदुपमानञ्चोपमेयञ्च ॥ ६८ ॥ भ०

शरणमित्यादि। पृथुविषमशिलानां यान्यन्तरालानि तेषु संस्थं सन्तिष्ठमानं सत्तमः निकुञ्जे गहने विटपिभिर्निराकृताश्चन्द्रस्य रश्मय एवारातयो यस्मान्निकुञ्जात् तस्मिन् ससाद विलीनं शरणमिव यथा कश्चित् भीतो दुर्गे निलीयते सजलस्य घनस्येव द्युतिर्यस्य तमसः उत्प्रेक्षावयव इति भीतवत्ससादेति उपमासौ मलक्षणस्य श्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षायोगात् विटपिनिराकृतचन्द्ररश्मिरातावित रूपकार्थेन योगात् तथाचोक्तं श्लिष्टस्यार्थेन संयुक्तः किञ्चिदुत्प्रेक्षयान्वितः। रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथेति। विटपितिरस्कृत-

पृथुविषमशिलान्तरालसंस्थम्
सजलघनद्युति भीतवत्ससाद ॥ ६८ ॥
उत्प्रेक्षावयवः।
अथ नयनमनोहरोऽभिरामम्
स्मर इव चित्तभवोऽप्यवामशीलः।

---

चन्द्ररश्मियोग इति पाठान्तरं तत्र रूपकार्थो नास्तीति असंपूर्णलक्षणता ॥ ६८ ॥ ज० म०

शरणमित्यादि। सजलस्य मेघस्य इव द्युतिर्यस्य तत् तमोऽन्धकारं पृथुविषमशिलायामन्तराले स्थितं सत् निकुञ्जे शरणं गतमिव शरणापन्नमिव ससाद विलीनं भीतवत् यथा कश्चिद्भीतो दुर्गवनान्तरे विलीयते निकुञ्जे कीदृशे विटपिभिर्द्रुमैर्निराकृता चन्द्ररश्मिरूपा अरातयस्तमःशत्रवो यस्मात् उत्प्रेक्षावयव इति भीतवत् ससादेत्युपमाश्लेषरूपश्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षायायोगात् विटपिनिराकृतचन्द्ररश्म्यराताविति रूपकार्थेन योगाच्च तथाचोक्तं श्लिष्टस्यार्थेन संयुक्तः कश्चिच्चोत्प्रेक्षयान्वितः। रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथेति चन्द्ररश्मियोग इति पाठे रूपकार्थो नास्तीत्यसम्पूर्णलक्षणता॥६८॥ भ०

अथेत्यादि। अथ चन्द्रदर्शनानन्तरं रघुसुतं राममभिरामं कामाभिभूतत्वादाभिमुख्येन रम्यत इति अनुजः कनीयान् भ्राता वाचं वक्ष्यमाणं जगाद गदितवान् नयनमनोहरः प्रेक्षणीय इत्यर्थः इति तुल्ययोगिता न्यूनस्य लक्ष्मणस्याधिकेन रामेण सहाभिरमणीयगुणसाम्यविवक्षया अभिरमणतुल्यक्रियायोगात् स्मर इव चित्तभवोऽपि तस्य चेतसि सदा भवतीति श्लिष्टं तथाप्यवामशीलोऽप्रतिकूल इति विरोधः स्मरस्तु वामशीलः सजलघनस्तनयित्नुना शब्देन तुल्यो घोषो यस्य संसृष्टिरिति बह्वलङ्कारयोगात् यथाचोक्तं पराभिभूता संसृष्टिर्बह्वलङ्कारयोगतः। रचिता रत्नमालेव सा चैवं कथ्यते यथा॥ ७० ॥ ज० म०

रघुसुतमनुजो जगाद वाचम्
सजलघनस्तनयित्नुतुल्यघोषः ॥ ७० ॥

संसृष्टिः ।

पतिवधपरिलुप्तलोलकेशी-
र्नयनजलापहृताञ्जनौष्ठरागाः ।
कुरु रिपुवनिता जहीहि शोकम्
क्व च शरणं जगतां भवान् क्व मोहः ॥ ७१ ॥

आशीः ।

---

अथेत्यादि । चन्द्रोदयदर्शनानन्तरं रघुसुतं रामं अभिरामं सुन्दरं अनुजो लक्ष्मणो वाचं वक्ष्यमाणं जगाद कीदृशः स्मर इव काम इव नयनमनोहर. तदुभयानन्दकः चित्तभवः रामस्य चित्ते विद्यमानः अवामशीलः अनुकूलस्वभावः चित्तभवोहि कामोऽवामशीलो भवति तत्प्रथ-प्रवर्त्तकत्वात् अयन्तु न तथेत्यापाततो विरोधस्सूचनायापिशब्दः सजल-निविडमेघतुल्यशब्दः । संसृष्टिरिति नानालङ्कारसंसर्गात् तथाहि स्मर इवेत्युपमा नयनमनोहर इति तुल्ययोगिता चित्तभव इति श्लेषः अवामशील इति विरोधः सजलघनेत्यादिना पुनरुपमा । तथाचोक्तं संसृष्टिरिति विज्ञेया नानालङ्कारसङ्कर इति ॥ ७० ॥ भ०

पतीत्यादि । पतिवधेन परिलुप्ता भ्रष्टा लोलाः केशा यासां रिपु-वनितानां नयनजलेनाश्रुणा अपहृतमञ्जनमोष्ठरागश्च यासान्ताः मन्दोद-रीप्रभृतीः कुरु शोक जहीहीत्याशंसे किं क्व भवान् जगतां शरणमाश्रयः क्व च मोह इति आशीरिति इष्टस्याशंसनात् तथाचोक्तं आशीरिति च केषाञ्चिदलङ्कारतया मता । सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तद्यथेति ॥ ७१ ॥ ज० म०

पतीत्यादि । किं जगादेत्याह रिपोरावणस्य वनिताः स्त्रियः पतिवधात् परिलुप्ता भ्रष्टा लोलाश्चञ्चलाः केशा यासां नयनजलेना-

अधिगतमहिमा मनुष्यलोके
वत सुतरामवसीदति प्रमादी ।
गजपतिरुरुशैलशृङ्गवर्ष्मा
गुरुरवमज्जति पङ्कभाङ् न दारु ॥ ७ ॥
हेतुः ।

---

पहृतमज्ञनमोहरागस्य यासां तथाविधाः कुरु शोकं जहीहि त्यज इत्या-शंसे यतो जगतां शरणं रचिता भवान् क मोहश्च क वा असम्भावनायां कद्वयम् । आशीरिति इष्टार्थाशंसनात् तथाचोक्तं आशीर्नामाभिलषिते वस्तुन्य शसनं यथेति अन्यत्रापि आशीरिति च केषाञ्चिदलङ्कारतया मता । सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृश इति ॥ ७१ ॥ भ०

अधिगतमहिमेत्यादि । मनुष्यलोके योऽधिगतमहिमा प्राप्ताधि-पत्यः स प्रमादी शोकादिषु प्रमादवान् वत कष्टमवसीदति न कार्य्यस-मर्थो भवति कुत एतदित्याह गजपतिः उरुशैलशृङ्गवर्ष्मा महाशैलशृङ्ग-प्रमाणं वर्ष्म वपुर्यस्य सः पङ्कभाक् पङ्कम्भजतीति भजोण्विः पङ्कमवतीर्णः सन् अवमज्जति अवसीदति यस्मादसौ गुरुः न पुनर्दारु काष्ठं तस्मान्मुञ्च शोकं हेतुरिति गजपतेर्हेतुद्वारेण निर्देशात् कयमर्थान्तरो द्रष्टव्यः ॥ ७२ ॥ ज० म०

अधीत्यादि । अधिगतमहिमा प्राप्ताधिपत्योऽपि मनुष्यलोके प्र-मादी कार्य्येऽनवधानवान् सन् वत कष्टं सुतरां अवसीदति कार्य्यासमर्थो भवति कुत इत्याह उरुशैलशृङ्गवर्ष्मा महापर्व्वतशिखरप्रमाणशरीरो गजपतिः पङ्कभाक् पङ्कमवतीर्णः सन् अवमज्जति पङ्के प्रविशति यस्मा-दसौ गुरुः न तु दारु काष्ठं मज्जति लघुत्वात् तस्मान्महतां प्रमादो विना-शहेतुः न तु लघीयसां तत्कारणं शोकं संत्यजेति भावः । हेतुरिति गजपते हेतुद्वारेण निर्देशात् तथाचोक्तं हेतुमता सह हेतोरभिधानमभेदकृद्धेत । सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूतः ॥ ७२ ॥ भ०

बोद्धव्यं किमिव हि यत्त्वया न बुद्धम्
किं वा ते निमिषितमप्यबुद्धिपूर्व्वम् ।
लब्धात्मा तव सुकृतैरनिष्टशङ्की
स्नेहौघो घटयति मां तथापि वक्तुम् ॥ ७२ ॥

निपुणम् ।

---

बोद्धव्यमित्यादि । किमिव तद्बोद्धव्यं ज्ञातव्यमस्ति नैवेत्यर्थः यत्त्वया न बुद्धं बुद्धा विज्ञेयं तव किञ्चिच्चेष्टितमपि नोपेक्षापूर्वकं यतो निमिषितमप्यक्ष्णोर्निमीलनमपि अबुद्धिपूर्वकं नैवेत्यर्थः यद्येवं किमित्यस्माकमुपदिशसीत्याह लब्धात्मेति तथापि सुकृतैर्लब्धात्मा लब्धजन्मा स्नेहौघः स्नेहसमूहः अनिष्टशङ्की अनिष्टशङ्कनशीलः मां वक्तुं वदेति घटयति निपुणमिति अर्थावगाढत्वादस्य चोदात्तेऽन्तर्भावो द्रष्टव्यः भाविकत्वमित्यलङ्कार उक्तः तद्भिन्नविषयत्वात्पृथक् प्रदर्शयिष्यति ॥ ७२ ॥ ज० म०

बोद्धव्यमित्यादि । यत्त्वया न बुद्धं तद्बोद्धव्य किमिवास्ति अपि तु न किञ्चिदेव इवशब्दोऽसम्भावनायां तव निमिषितमपि चक्षुषोर्निमीलितमपि किम्वा अबुद्धिपूर्व्वकं नैवेत्यर्थः अतो न किञ्चिदपि चेष्टितं तवानवधानपूर्व्वकमिति भावः अतो यद्यपि भवतो नोपदेशो युक्तस्तथापि सुकृतैस्तव सुष्ठु कर्म्मभिरस्मत्पुण्यैर्वा लब्धात्मा प्राप्तस्वरूपो जातः स्नेहसमूहस्तवानिष्टशङ्काशीलः मां वक्तुं घटयति त्वामुपदेष्टुं मां प्रेरयति इत्यनुजो जगादेति पूर्वेणान्वयः निपुणमिति कनिष्ठस्य ज्येष्ठोपदेशानौचित्येऽपि नैपुण्येनोक्तत्वात् निपुणनामायमलङ्कार इति प्राञ्च इति विद्यासागरः । अस्य प्रेयस्यन्तर्भाव इति देवनाथः प्रेयः प्रियतराख्यानमिति तल्लक्षणात् उदात्तमध्येऽन्तर्भाव इति जयमङ्गला ॥ ७२ ॥ भ०

सौमित्रेरिति वचनं निशम्य रामो
जृम्भावान् भुजयुगलं विभज्य निद्रान्।
अध्यष्ठाच्छिशयिषया प्रवालतल्पम्
रक्षायै प्रतिदिशमादिशन् प्लवङ्गान्॥ ७४॥

---

सौमित्रेरित्यादि। इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामो जृम्भावान् जातजृम्भिकः जृम्भणं जृम्भा गुरोश्च हल इत्यकारः शप् निद्रान् निद्राङ्कुर्व्वन् द्राकुत्सितायां गतावित्यस्मादादादिकस्य निपूर्व्वस्य शतरि रूपं शिशयिषया शयितुमिच्छया भुजयुगलं विभज्य एकं शिरःस्थाने न्यस्य द्वितीयं शरीरस्योपरि प्रसार्य्येत्यर्थः विभुज्येति पाठान्तरं तत्र क्रोड़भागे वक्रीकृत्येत्यर्थः प्रवालतल्पं पल्लवशयनीयं अध्यष्टात् अधिष्ठितवान् गातिस्थेति सिचो लुक् प्राक्सितेत्यादिना षत्वं समुद्रदिष्टत्वया नियमपूर्व्वं सुष्वापेत्यर्थः रक्षायै रक्षानिमित्तं प्लवङ्गमानादिशन् नियोजयन् प्रतिदिश दिशि दिशि अव्ययीभावे शरत्प्रभृतिभ्य इति टच् तत्र दिक्शब्दस्य पठितत्वात्॥ ७४॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे काव्यालङ्कारदर्शनः प्रथमः परिच्छेदः सीताभिज्ञानदर्शनो नाम काव्यस्य दशमः सर्गः।

सौमित्रेरित्यादि। इत्येवं लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामः प्रतिदिशं दिशि दिशि रक्षणार्थं प्लवङ्गान् वानरान् आदिशन् जृम्भावान् सन् निद्रान् निद्राङ्कुर्व्वन् शिशयिषया शयितुमिच्छया प्रवालशय्यामध्यष्टात् अधिष्ठितवान् भुजयुगलं विभुज्य भुग्नं कृत्वा एकं शिरःस्थाने निवेश्य अपरञ्चोरःस्थाने शिरस उपरि वानिवेश्येत्यर्थः विभुज्येति पाठे, क्रोड़ोपरिवक्रीकृत्येत्यर्थः निद्रामिति निपूर्व्वात् द्रा कुत्सने इत्यस्मात् शतृः अध्यष्ठादिति अधिपूर्व्वतिष्ठतेश्च्रांसिः भूस्थेत्यादिना सेर्लुक् गोक इत्यादिना षत्वं कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं प्रतिदिशमिति वीप्सायामव्ययीभावः शरद्विपाडय इत्यादिना अप्रत्ययः॥ ७४॥ भ०

इति भट्टिकाव्ये प्रसन्नकाण्डे काव्यालङ्कारो नाम
दशमः सर्गः ।

---

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनविर-
चितायां मुग्धबोधिन्यां भट्टिटीकायां प्रसन्नकाण्डे काव्या-
लङ्कारदर्शनं नाम प्रथमः परिच्छेदः काव्यस्य सीता-
भिज्ञानदर्शनं नाम दशमः सर्गः ।

---

## एकादशः सर्गः ।

अथास्तमासेदुषि मन्दकान्तौ पुण्यक्षयेणेव निधौ कलानाम् ।
समाललम्बे रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैर्विषादः ॥ १ ॥

---

माधुर्य्यमपि काव्यस्य गुण उक्तः तथाचोक्तं श्राव्य नातिसमस्तार्थं काव्ये मधुरमिष्यत इति तत्प्रदर्शनार्थं लङ्का गतप्रभातवर्णनमधिकृत्याह

अथेत्यादि। अथानन्तरं कलानां निधौ चन्द्रमसि अस्त पर्व्वतमासेदुषि गतवति यथा कस्मिंश्चित् पुण्यक्षयेणावसानमासेदुषि भाषायां सदवसेति लिटः क्वसुरादेशः मन्दकान्ताविल्यस्तगमने पूर्व्वलिङ्गं दर्शयति रिपुकल्पैः पद्मैः प्रहासः विकाशः मित्रकल्पैः कुमुदैर्विषादः सङ्कोचः समाललम्बे समालम्बितः ॥ १ ॥ ज० म०

अथेत्यादि। अथ गुणाः प्रदर्श्यन्ते यतः अलङ्कृतमपि श्राव्यं न काव्यं गुणवर्ज्जितम्। गुणयोगस्ततो मुख्यो गुणालङ्कारयोगयोः। वामनादिभिर्दश गुणा मन्यन्ते ते तु श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधय इति। अन्ये तु और्ज्जित्यमर्थसौख्यञ्च गाम्भीर्य्यमर्थविस्तरः। सङ्क्षेपः समितत्वञ्च भाविकत्वं गतिस्तथा। रतिव्यक्तिस्तथा प्रौढिः प्रेयानथ सुशब्दता इत्येतानप्यधिकान् गुणानाहुः। काव्यप्रकाशकृता तु माधुर्य्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दर्शितेत्युक्तं तन्मते माधुर्य्यप्रकाशक एवायं सर्ग आरभ्यते तथाचोक्तं कण्ठाभरणे शृङ्गार एव मधुरः स च प्रह्लादनो रसः। तन्नायं काव्यमाश्रित्य माधुर्य्यं प्रति तिष्ठतीति अत्र सर्गे प्रसादगुणोऽपि द्रष्टव्यः तत्र लङ्कागतप्रभात-

दूरं समारुह्य दिवः पतन्तं भृगोरिवेन्दुं विहितोपकारम् ।
बद्धानुरागोऽनुपपात तूर्णं तारागणः संभृतशुभ्रकीर्त्तिः ॥ २ ॥

---

वर्णनं प्रस्तूयते । अथानन्तरं यथा पुण्यक्षयेण कश्चिदस्तं याति तथा कलानां निधौ चन्द्रेमन्दकान्तौ मन्दप्रभे अस्तं पर्व्वतमासेदुषि प्राप्ते सति रिपुकल्पैः पद्मैः प्रहासो विकाश. पक्षे प्रकृष्टहासः मित्रकल्पैः कुमुदैर्विषादः सङ्कोचः पक्षे विषण्णता समालम्बे अथास्तमासेदुषीति श्लेषोऽत्र शब्दगुणः तथाचोक्तं गुणः सुश्लिष्टपदता श्लेष इत्युपदिश्यते । इति प्रसादोऽप्यत्रास्ति प्रसिद्धार्थपदत्वं यत् प्रसादोऽसौ निगद्यत इति लक्षणं पद्मैः प्रहास इत्यत्र माधुर्य्यं गुणो या पृथक्पदता काव्ये तन्मा-धुर्य्यमुदाहृतमिति न्यायात् आसेदुषीत्यत्र सुशब्दतापि व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्देति वचनात् पद्मैः प्रहास इत्यत्र समाधिरप्यस्तिः समाधिः सोऽन्यवर्गाणां यदन्यत्रापि रोपणम् । प्रहासश्चेतनाधर्म्मः स चा-न्यत्राधिरोपित इति एवमन्यत्रापि गुणनिरूपणं कर्त्तव्यम् ॥ १ ॥ म०

दूरमित्यादि । दूरमाकाशस्य भागमारुह्य पश्चात्तत एवाकाशात् भृगोरिव प्रपातादिव पतन्तमिन्दुं तारापतिमनु पश्चात् तारागणः विहितोपकार तदुदयेन तारागणाप्यायनान्नचेद्बद्धानुरागः अस्तगमन-काले अनुगतरक्तभावः संभृता विपुलीकृता शुभ्रा निर्मला कीर्त्तिर्येन स तारागणः पपात यथा कस्मिंश्चित्स्वामिनि भृगोः पतति पश्चात्-स्वामिभक्त्या भृत्यलोको बद्धानुरागः संभृतशुभ्रकीर्तिः पतति तद्वदिति ॥ २ ॥ ज० म०

दूरमित्यादि । दिव आकाशस्य दूरं भागमारुह्य पश्चात्तत एव स्वकाशात् भृगोः प्रपाताख्यपर्व्वतोच्चभागादिव पतन्तमधस्ताद्गच्छन्तमिन्दुं विहितोपकारं तदुदये तारागणस्याप्यायनात्तारापतित्व च तारागण-स्तूर्णमनुपपात अनुगजाम तमनु लक्षीकृत्य पपातेति वा कीदृशः बद्धानुरागः अस्तगमनकाले रक्तत्वात् सम्भृता उपचिता शुभ्रा निर्मला कीर्त्तिर्येन अन्योऽपि भार्य्यागणोऽनुरक्तः सन् पतिमनुगच्छन् निर्म्मल-

क्व ते कटाक्षाः क्व विलासवन्ति प्रोक्तानि वा तानि ममेति मत्वा।
लङ्काङ्गनानामवबोधकाले तुलामनारुह्य गतोऽस्तमिन्दुः ॥ ३ ॥

---

कीर्त्तिर्भवति अत्रोदारत्वमर्थगुणः आशयस्य य उत्कृष्टस्तदुदारत्वमिष्यत इति लक्षणात् समत्वगुणोऽप्यत्र चन्द्रस्यास्तगमने ताराणामप्यस्तम्भवात् तथाचोक्तं अवैषम्यं क्रमतया समत्वमभिधीयत इति प्रसादोऽप्यर्थगुणोऽत्र लोकप्रसिद्धार्थत्वात् तदुक्तं यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयत इति ॥ २ ॥ भ०

क्व त इत्यादि। ये कटाक्षाः सविलासास्तिर्य्यगदृष्टयः यानि च प्रोक्तानि जल्पितानि विलासवन्ति तदुभयं क्व मम विद्यते लङ्काङ्गनानान्तु मुखेन्दवः सकटाक्षाः सविलासाः जल्पिताश्च अतो यावन्न विबुध्यन्ते तावदपक्रमणं युक्तमिति मत्वा निरूप्य तुलामनारुह्य समानतामलब्ध्वा निःसाशयो वा भूत्वा तत्प्रबोधकाले लङ्काङ्गनानामेवं गतोऽस्तमिन्दुः ॥ ३ ॥ ज० म०

क्व ते इत्यादि। मम ते प्रसिद्धाः विलासवन्तः कटाक्षाः क्व तानि वा विलासवन्ति प्रकृष्टजल्पितानि क्व न सन्त्येवेत्यर्थः लङ्कास्त्रीणान्तु लङ्कामुखेन्दुषु तदुभयमप्यस्ति अतएव यावत्तदुदयो न भवति तावदपक्रमणं युक्तमिति मत्वा तुलां तत्साम्यं अनारुह्य अप्राप्य लङ्कास्त्रीणां प्रबोधसमये जागरणकाले इन्दुरस्तंगतः विलासवन्तीति पुनपुंसकविशेषणत्वेऽपि सामान्यत्वान्नपुंसकत्वं नपुंसकानपुंसकयोर्नपुंसकमेवेति श्रौपतिसूत्रेण वा नपुंसकत्वं तात्कालिकविशेषस्तु विलासोऽङ्गक्रियोक्तिषु। प्रसिद्धानुभूतार्थविषयतच्छब्दो यच्छब्दं नापेक्षत इति काव्यप्रकाशः अत्रौर्जित्यं गुणः और्जित्यं गाढबन्धनेति तल्लक्षणात् माधुर्य्यमप्यत्र पूर्व्ववत् सुकुमारतापि अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यत इति न्यायात् उदात्ततापि विलासवन्तीति श्लाघ्यविशेषणात् तदुक्तं श्लाघ्यैर्विशेषणैर्योगो यस्तु साद्याद्युदात्ततेति गाम्भीर्य्यमप्यर्थगुणोऽत्र विलासादीनां शास्त्रादेव ज्ञानात्। तथाचोक्तं शास्त्रार्थं सव्यपेक्षत्व गाम्भीर्य्यमभिधीयत इति ॥ ३ ॥ भ०

मानेन तल्पेष्वयथासुखीना मिथ्याप्रसुप्तैर्गमितत्रियामाः ।
स्त्रीभिर्निशातिक्रमविह्वलाभिर्दृष्टेऽपि दोषे पतयोऽनुनीताः ॥४॥
ईर्ष्याविरुग्णाः स्थिरबद्धमूला निरस्तनिःशेषशुभप्रताना: ।

---

मानेनेत्यादि। पतयस्तल्पेषु शयनीयेषु मानेनायथासुखीनाः पराङ्मुखाः यथासुखसंमुखस्य दर्शनं सुखः पराङ्मुखत्वात् प्रतिबिम्बाश्रयवस्त्वेषु योषितां प्रतिबिम्बमिव मनो न प्रसादीभवतीत्येवं मिथ्याप्रसुप्तैरलीकनिद्राभिः गमितत्रियामाः प्रेरितप्रथमादिप्रहराः दृष्टेऽपि दोषे गोत्रस्खलितादौ स्त्रीभिरनुनीता यतोनिशातिक्रमात्पर्य्यवसानात् विह्वला विह्वलास्ताः ॥ ४ ॥ ज० म०

मानेनेत्यादि। स्त्रीभिर्दृष्टेऽपि दोषे गोत्रस्खलनादौ पत्यनुनयेन स्वस्या मनस्वित्वादिदोषे ज्ञातेऽपि वा पतयोऽनुनीताः अनुनयकरणे हेतुमाह कीदृशीभिः निशाया अतिक्रमात् पर्य्यवसानात् विह्वलाभिः कीदृशाः पतयः चाटूक्तिपादपतनेनापि प्रियामप्रसन्नां बुद्ध्वा मानेन तल्पेषु शय्यासु अयथासुखीनाः पराङ्मुखाः किमियं करिष्यतीति ज्ञातुं मिथ्याप्रसुप्तैरलीकनिद्राभिर्गमितरात्रयः अतिवाहितप्रहरत्रया इत्यन्ये अयथासुखीना इति सुखस्यानतिक्रमः प्रियाभिमुखस्थितत्वरूपो यथासुखं ततः स्वार्थे ईनः ततो नञ्समासः विद्यासागरस्तु यथासुख सम्मुखं दृश्यत अस्मिन्निति ईनः पश्चान्नञ्सम्बन्धः यथा शब्दोऽभिमुखे वर्त्तते अव्ययानामनेकार्थत्वादित्याह स्वमतेऽपि तथा विकारसङ्घेत्यादावादिशब्दात् अन्ये तु यथासुखमिति सादृश्यनिपातनाच्चिन्त्यमित्याहुः अत्र कान्तिरर्थगुण दोषे दृष्टेऽपि पत्यनुनयात् तथाचोक्तं कान्तिदीप्तरसत्वं स्यादिति समाधि रप्यत्रार्थगुणः मिथ्याप्रसुप्तत्वात् व्याजावलम्बनं यत्तु स समाधिरिति स्मृत इति ॥ ४ ॥ भ०

ईर्ष्याविरुग्णा इत्यादि। प्रियाणां प्रेमद्रुमाः प्रेमाणि द्रुमा इव स्थिरं निश्चलं बद्धमूलं उत्पत्तिकारणं येषां ते ईर्ष्याविरुग्णाः अत...

आप्यायिता नेत्रजलप्रसेकैः प्रेमद्रुमाः संरुरुहुः प्रियाणाम् ॥ ५॥
ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसोऽवितृष्णः ।
स्मरस्य सन्तं पुनरुक्तभावं नावर्त्तमानस्य विवेद लोकः॥ ६ ॥

---

निरस्ताः निःशेषाः शुभा एव हसितजल्पितादयः प्रताना शाखा येषां ते प्रसादनानन्तरं नेत्रजलप्रसेकैराप्यायिता. संरुरुहुः पुनर्नवीभूताः स्थिरबद्धमूलत्वात् ॥ ५ ॥ ज० म०

ईर्ष्येत्यादि । प्रियाणां प्रेयसां प्रेयसीनां वा एकशेषादुभयेषां प्रेमाणि द्रुमा इव संरुरुहुः पुनः पल्लविताः यतो नेत्रजलप्रसेकैः आप्यायिताः प्रीणिताः स्थिरबद्धमूलाः स्थिरं निश्चलं बद्धं सम्बद्धं मूलमुत्पत्तिकारणं येषां कीदृशाः पूर्वमीर्ष्यया परोत्कर्षाक्षमया विरुग्णाः भग्ना अतएव निरस्ता निःशेषाः शुभा एव हसितजल्पितादय एव प्रतानाः शाखास्तेषां विस्तारो वा येषां अन्येऽपि स्थिरबद्धमूला दृक्षा भग्ना अपि हतप्रताना अपि जलसेकैराप्यायिताः सन्तः संरोहन्तीति भावः । प्रौढिरत्रार्थगुणः विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता प्रेम्णो द्रुमत्वनिर्वाहात् ॥ ५ ॥ म०

तत इत्यादि । प्रेमद्रुमरोहणानन्तरं लोकः समाशङ्कितविप्रयोगो विप्रयोगोऽस्माकमासन्नवर्त्तीति पुनर्नवीभूतरसः अभिनवीभूतसुरतेच्छः स्मरस्य कामस्य आवर्त्तमानस्य पुनःपुनः प्रवर्त्तनात् अवितृष्णः साभिलाषः सन्तमपि विद्यमानमपि पुनरुक्तभावं पौनःपुन्यं न विवेद आशङ्कितप्रयोगत्वादपूर्व्वमिव ज्ञातवानित्यर्थः ॥ ६ ॥ ज० म०

तत इत्यादि । प्रेमसंरोहाद्धेतोरनन्तरं वा आवर्त्तमानस्य पुनःपुनः प्रवर्त्तमानस्य स्मरस्य कन्दर्पस्य पुनरुक्तभावं पौनःपुन्यं सन्तं विद्यमानमपि लोको न विवेद न ज्ञातवान् यतो रात्रिगमनेनाशङ्कितविरहः अतएव पुनर्नवीभूतसुरतेच्छः अतएवावितृष्णः तृष्णाविगमरहितः पुनस्तृष्णोदयात् अधितृष्ण इति पाठे अधिकतृष्ण इत्यर्थः अत्रापि कान्तिगुणो दीप्तरसत्वात् प्रेयोऽप्यस्ति प्रेयस्त्वर्थेष्वभीष्टता अभीष्टस्य कामस्य प्रतिपादनात् ॥६॥ म०

वृत्तौ प्रकाशं हृदये कृतायां सुखेन सर्व्वेन्द्रियसम्भवेन ।
सङ्कोचमेवासहमानमस्यादशक्तवद्वञ्चितमानि चक्षुः ॥ ७ ॥

---

वृत्ताविल्यादि। सुरतकाले श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां इन्द्रियाणां शब्दस्पर्शरूपरसगन्धग्रहणात् सर्व्वेन्द्रियसम्भवं सुखं अथवा सर्वमिन्द्रिय यत्रेति सर्वेन्द्रियः कायः तत्सम्भवं सुखं सर्वेन्द्रियसम्भवं सुखं तथा ह्यालिङ्गनचुम्बनदर्शनच्छेदनेषु पुरुषोपसृष्टेषु तत्र प्रयुज्यमाने काये सुखमुत्पद्यते तेन सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ कृतायां चक्षुर्वञ्चितमिवात्मानं मन्यमानं आत्ममान खस्येति णिनिः सङ्कोचमेव निमीलनमेवास्यात् अनुष्टितवत् असहमानमिति सर्वेन्द्रियसम्भवस्य सुखस्य हृदये वृत्ति सोढुमपारयदित्यर्थः अशक्तवत् यथा कश्चिदसमर्थोऽन्यसम्भवां सम्पदं सोढुमसहमानः सङ्कोचमनुतिष्ठति ॥ ७ ॥ ज० म०

वृत्ताविल्यादि। सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ स्थितौ कृतायां सत्यां चक्षुः कर्तृ सङ्कोचं निमीलनमपि असहमानमेवास्यात् कुचसङ्कोचे इत्यस्माद्दञ् यतो वञ्चितमानि सङ्कोचे सति चणमपि रूपादर्शनेनात्मानं वञ्चितमिव मन्यते अशक्तवत् यथा असमर्थं चक्षुर्निष्पन्दं भवति तथा प्रियाङ्के निष्पन्दमित्यर्थः यद्वा सुखस्य हृदि वृत्तौ सत्यां हृदयाप्रवेशेन वञ्चितमिवात्मानं मस्या चक्षुः सङ्कोचं मुद्रितमेवास्यात् असहमानं हृदयस्य सुखं सोढुमसमर्थमिव अशक्तवत् यथा कश्चिदसमर्थोऽन्यसम्पदं असहमानः सङ्कोचित एव तद्वत् यद्वा अशक्तवत् यथा असमर्थं चक्षुरुन्मीलनाक्षमं सत् मुद्रितमेव तिष्ठति तद्वत् सुरतान्ते नेत्रनिमीलनस्योत्प्रेचेयं कुचकौटिल्ये खेलने इत्यस्मात् पचादित्वादनि कुटादित्वाद्गुणाभावः सुखेन कीदृशेन सर्वेन्द्रियसम्भवेन रतिकाले स्वस्वविषयसम्बन्धैः सर्वैरिन्द्रियैरुत्पादितेन यद्वा सर्वाणि इन्द्रियाणि यस्य स सर्वेन्द्रियः कायः तेनोत्पादितेन प्रौढिरत्र गुणः विशिष्टा भणितिर्या स्यात् प्रौढिं तां कवयो विदुः। उचितनिमीलनस्यासहनजन्यत्वात् पूर्ववन्माधुर्य्यमपि शब्दगुणोऽत्र पृथक्पदत्वात् ॥ ७ ॥ म०

पीने भटस्योरसि वीक्ष्य भुग्नांस्तनुत्वचः पाणिरुहान् सुमध्या।
इच्छाविभङ्गाकुलमानसत्वाद्भर्त्रे नखेभ्यश्च चिरं जुजूरे॥ ८॥
स्रस्ताङ्गचेष्टो विनिमीलिताक्षः स्वेदाम्बुरोमोद्गमगम्यजीवः।
अशेषनष्टप्रतिभापटुत्वो गाढोपगूढो दयितैर्जनोऽभूत्॥ ९॥

---

पीने इत्यादि। काचित् सुमध्या सुनध्यमा नखैः व्यापद्यमाना अहमप्यस्य क्षतं विधास्यामीति भटस्योरसि पीने कठिने भुग्नान् कुञ्चितान् भग्नानिति पाठान्तरं पाणिरुहान्नखान् वीक्ष्य भर्त्रे नखेभ्यश्च चिर जुजूरे क्रुध्यति स्म कथमस्य वक्षः कठिन मम च नखास्तनुत्वचो न कठिना इति पूरी जूरी हिंसावयोहान्योरित्यस्यात्मनेपदिनो रूपं क्रुधद्रुहेत्यादिना सम्प्रदानसञ्ज्ञा कस्माज्जुजूर इत्याह इच्छाविभङ्गाकुलमानसत्वात् चिकीर्षिताकरणेनाकुलचित्तत्वात्॥ ८॥ ज० म०

पीने इत्यादि। कापि सुमध्या दयितेन नखैः खण्ड्यमाना अहमप्यस्य क्षतं विधास्यामीति मत्वा भटस्य योधस्य पीने कठिने उरसि दत्तान् पाणिरुहान् नखान् मृदुत्वक्त्वात् भग्नान् कुण्ठितान् भुग्नानिति पाठे कुटिलान् वीक्ष्य दृष्ट्वा चिकीर्षाविभङ्गेन व्याकुलचित्ततया भर्त्रे नखेभ्यश्च चिरं चिरकालं व्याप्य जुजूरे क्रुध्यति स्म ज्जूरोयीक्ष्यानौ वधे अनेकार्थत्वात् कोपेऽपि यस्मै दित्सेत्यादिना सम्प्रदानत्वं शास्त्रव्यपेक्षत्वं गाम्भीर्यमत्र गुणः कामशास्त्रे मानावसाने स्थानविशेषे नखक्षतदानस्योक्तत्वात्॥ ८॥ भ०

स्रस्ताङ्गचेष्ट इत्यादि। दयितैर्गाढोपगूढः आलिङ्गितः सन् स्त्रीजनः अशेषनष्टप्रतिभापटुत्वोऽभूत् अशेष नष्टं प्रतिभाया बुद्धेः पटुत्वं यस्येति एवञ्च कृत्वा स्रस्ताङ्गचेष्टोऽपगतकायव्यापारः विनिमीलिताक्षः सुखानुभवान्निमीलितलोचनः मृतस्तर्हीत्याह स्वेदाम्बुरोमोद्गमगम्यजीवः स्वेदाम्बुरोमोद्गमाभ्यां लिङ्गाभ्यां गम्यमानसत्त्वः॥ ९॥ ज० म०

स्रस्तेत्यादि। स्त्रीजनो दयितैर्गाढालिङ्गितः सन् अशेषनष्टप्रति-

तमः प्रसुप्तं मरणं सुखं नु मूर्च्छा नु माया नु मनोभवस्य ।
किं तत्कथं वेत्युपलब्धसंज्ञा विकल्पयन्तोऽपि न संप्रतीयुः ॥१० ॥
वक्षस्तनाभ्यां मुखमाननेन गात्राणि गात्रैर्घटयन्नमन्दम् ।

---

भापटुत्वोऽभूत् अशेषं समस्तमेव नष्टं प्रतिभायाः बुद्धेः पटुत्वं यस्य अतएव स्रस्ताङ्गचेष्टः अपहृतदेहव्यापारः सुखानुभवात् विनिमीलितलोचनः स्वेदजलरोमाञ्चाभ्यां गम्यमानजीवः जनशब्दोऽत्र स्त्रीजातिवाचकः तेन दयितैरित्यत्र बहुत्वमदुष्टं गाढालिङ्गनकारित्वेन गौरवे बहुत्वं वा कान्तिरत्र गुणो दीप्तरसत्वात् ॥ ९ ॥ भ०

तम इत्यादि। कामुका अपि सुरतावस्थाया उत्तरकालं उपलब्धसंज्ञा विकल्पयन्ति तमो नु किमन्धकारं प्रसुप्तं नु किं प्रकर्षेण सुप्तं मरणं नु मरणावस्था नु सुखन्नु मूर्च्छा नु मनोभवस्य वा मायेति किं तद्भवति कथं वा केन प्रकारेण तत्स्यात् इत्येवं विकल्पयन्तोऽपि न सम्प्रतीयुः न परमार्थं ज्ञातवन्त इत्यर्थः ॥ १० ॥ ज० म०

तम इत्यादि। कामुका अपि सुरतावस्थाया उत्तरकालमुपलब्धचैतन्याः सन्तो विकल्पयन्तीत्याह किं तमः प्रागन्धकारं दृष्टं वस्त्वन्तरानुपलम्भात् प्रसुप्तं वा प्रसुप्तिरेवात्र स्वप्नोऽपि न दृश्यते मरणं वा अचेष्टत्वात् सुखं वा अनुभूयमानत्वात् मूर्च्छा मोहो वा कृत्यस्याप्यस्मरणान्मनोभवस्य कामस्य माया वा किन्तदभवत् केन प्रकारेण वेति एवं विकल्पयन्तोऽपि न सम्प्रतीयुः परमार्थं न निश्चितवन्तः पूर्व्ववदत्र माधुर्य्यं गुणः ॥ १० ॥ भ०

वक्ष इत्यादि। वक्षोमुखगात्राणि स्वानि स्तनादिभिः स्त्रीसम्बन्धिभिर्घटयन् संश्लेषयन् अमन्दं दृढं उभयोर्हृत्स्वादचिक्कणत् स्मरातुरो लोको नैव तुतोष तुष्टिं न जगाम यतः पर्य्याप्तता प्रेम्णि कुतो विदग्धा नैव तस्याविदग्धत्वात् ॥ ११ ॥ ज० म०

वक्ष इत्यादि। स्मरातुरो लोकः कामार्त्तो जनः स्वकीयं हृदयादि स्त्रीस्तनादिना अमन्दं दृढं घटयन् संश्लेषयन् नैव तुतोष न तृप्तिं जगाम

स्मरातुरो नैव तुतोष लोकः पर्य्याप्तता प्रेम्णि कुतो विरुद्धा॥११
स्रस्ताङ्गयष्टिः परिरभ्यमाणा संदृश्यमानाप्युपसंहृताक्षी ।
अनूढमाना शयने नवोढा परोपकारैकरसैव तस्थौ ॥ १२ ॥
आलिङ्गितायाः सहसा त्रपावांस्त्रासाभिलाषानुगतो रतादौ ।

---

कुत इत्याह प्रेम्णि पर्य्याप्तता इच्छाविच्छेदः कुतो भवेत् यतः सा विरुद्धा कान्तिरन्नापि गुणः ॥ ११ ॥ भ०

स्रस्ताङ्गयष्टिरित्यादि । काचिन्नवोढा परिरभ्यमाणा पत्या आलिङ्ग्यमाना स्रस्ताङ्गयष्टिः न प्रतीपमालिङ्गति संदृश्यमानापि सुखसुन्नमय्य उपसंहृताक्षी निमीलितलोचना न प्रतीपं पश्यति मान नैवाचरतीति अगूढमानापि असंहृतमानापि एवं विधापि सती परोपकारैकरसैव तस्थौ भर्तुरुपकारैकाभिप्रायैव अवस्थिता नात्मोपकाराय ॥ १२ ॥ ज० म०

स्रस्ताङ्गयष्टिरित्यादि । काचिन्नवोढा शयने शय्यायां परोपकारैकरसा पत्युपकारमात्राभिप्रायैव तस्थौ न तु स्वोपकाराय यतः परिरभ्यमाणा दयितेनालिङ्ग्यमाना स्रस्ताङ्गयष्टिर्न प्रत्यालिङ्गनं करोति नापि प्रतीपा सुखसुन्नमय्य संदृश्यमानापि उपसंहृताक्षी निमीलितनेत्रा न पश्यति मानेनैवं करोतीति चेदाह अनूढमाना लज्जयैव अधृतमाना तथा करोतीत्यर्थः । पूर्व्ववन्माधुर्य्यादिगुणोऽत्र बोध्यः एवमग्रेऽपि ॥ १२ ॥ भ०

आलिङ्गिताया इत्यादि । कस्याश्चिद्वध्वा रतात्प्राक् रमणेन सहसा तत्क्षणं आलिङ्गितायास्त्रपावान्मदनो बभूव रतादौ रतारम्भे त्रासाभिलाषाभ्यामनुगतो बभूव विश्वासितायाः शनैर्विश्वासं कारितायाः विमर्द्दरम्यो बभूव त्रासाभावात् ॥ १३ ॥ ज० म०

आलिङ्गिताया इत्यादि । रतादौ रतात्प्राक् रमणेन कान्तेन सहसा अकस्मादालिङ्गितायाः कस्याश्चिद्वध्वा मदनस्त्रपावान् लज्जानुवा

विश्वासितायाः रमणेन बद्धा विमर्दरम्यो मदनो बभूव ॥ १३ ॥
सामोन्मुखेनाच्छुरिता प्रियेण दत्तेऽथ काचित्पुलकेन भेदे ।
अन्तःप्रकोपापगमाद्विलोला वशीकृता केवलविक्रमेण ॥ १४ ॥
गुरुर्दधाना परुषत्वमन्या कान्तापि कान्तेन्दुकराभिमृष्टा ।

---

त्व सेनाभिलाषेण चानुगतश्च बभूव किंवा आलिङ्गनेन सहसा त्वपायात् रतादौ सुरतारम्भे त्रासाभिलाषाभ्यामनुगतः पश्चात् शनैःशनैर्विश्वासितायाः विश्वासं प्रापितायाः तस्या एव मदनो विमर्देन रम्यो बभूव त्रासाभावात् ॥ १३ ॥ भ०

सामोन्मुखेनेत्यादि। अथ काचित्कोपात्मानवती प्रियेण सामोन्मुखेन सामपरेण प्रसादयता आच्छुरिताख्येन नखकर्मणा संस्पृष्टा सती पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तः प्रकोपस्यापगमात् विलोला विलोलबुद्धिः केवलविक्रमेण हठाद्ग्रहणेनैव वशीकृतोपभुक्तेत्यर्थः ॥ १४ ॥ ज० म०

सामोन्मुखेनेत्यादि। काचिन्मानिनी सामोन्मुखेन प्रसादनोद्यतेन प्रियेणाच्छुरिता आच्छुरिताख्येन नखकर्मणा स्पृष्टा अथानन्तरं पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तःप्रकोपस्यापगमात् विलोला चञ्चलबुद्धिः सा सुरते साभिलाषा वा केवलविक्रमेण हठादुपग्रहणमात्रेण वशीकृता उपभुक्ता भावं ज्ञात्वा प्रसादनान्तरमकृतप्रसादनान्तरेण प्रियेण यद्गण्डस्थलान्तरे अङ्गुष्ठाग्रनखेन ताड्यते तदाच्छुरितमुच्यते ॥ १४ ॥ भ०

गुरुरित्यादि। अन्यापि काचित् स्त्री कान्ता कमनीयरूपा गुरुः धीरा वोतोगुणवचनादिति वा ङीप् न भवति दधाना पुरुषत्वं नैष्ठुर्य्यं कान्तेन भर्त्रा इन्दुनेव कराभिमृष्टा सती प्रह्लादिता सुखिता क्षोभात् चेतसोविकारात् तूर्णं स्रवत्स्वेदजला बभूव चन्द्रस्पृष्टेव चन्द्रमणिरिव सा गरीयसी कान्ता परुषत्वं काठिन्यं दधाना इन्दुना कराभिमृष्टा प्रह्लादिता सुखितेव क्षोभात्स्वप्रकृतिविकारात् स्रवज्जला भवति ॥ १५ ॥ ज० म०

प्रह्लादिता चन्द्रशिलेव तूर्णं क्षोभात् स्रवत्स्वेदजला बभूव ॥१५॥
शशाङ्कनाथापगमेन धूम्रां मूर्च्छापरीतामिव निर्विवेकाम्।
ततः सखीव प्रथितानुरागा प्राबोधयत् द्यां मधुरारुणश्रीः ॥१६॥

---

गुरुरित्यादि। अन्या कान्ता परुषत्वं नैष्ठुर्यं दधानापि कान्तेनेन्दुनेव कान्तस्य चन्द्रस्य वा करेण हस्तेन किरणेन चाभिमृष्टा सती ततः प्रह्लादिता आनन्दिता च सती क्षोभाच्चेतसो विकारात् तूर्णं स्रवत् स्वेदजला बभूव चन्द्रशिलेव चन्द्रकान्तमणिरिव कीदृशी गुरुर्गौरवान्विता चन्द्रशिलापि हि गुरुत्वाख्यगुणयुक्ता कान्ता मनोहरा परुषत्वं काठिन्य दधानापि कान्तेन कमनीयेन इन्दुना कराभिमृष्टा प्रह्लादिता प्रकाशिता च सती क्षोभात् स्वप्रकृतिविपर्य्ययात् स्रवज्जला भवति गुरुरिति गुणाद्धोत इति पक्षे ईप्प्रत्ययाभावः ॥ १५ ॥ भ०

शशाङ्केत्यादि। ततोऽनन्तरं यथा काचित् स्त्री नाथस्य भर्त्तुरपगमेन वियोगेन धूम्रा मलिना मूर्च्छापरीता निश्चेतना अतएव निर्विवेका विवेकशून्या सती सख्या प्रकाशितस्नेहया प्रबोध्यते तद्वदाकाशं शशाङ्कनाथस्यापगमेन अस्तगमनेन धूम्रां धूसरतां गतां निर्विवेकां अविद्यमानविशेषां अरुणश्रीः आदित्यलक्ष्मीरिति मधुराभिनवा प्रथितानुरागा प्राबोधयत्प्रकाशितवती ॥ १६ ॥ ज० म०

शशाङ्केत्यादि। ततोऽनन्तरं अरुणस्य सूर्य्यस्य तस्य रथेर्वा श्रीर्द्यामाकाशं प्राबोधयत् प्रकाशितवती सखीव यथा सखी काञ्चित् स्त्रियं प्रबोधयति कीदृशीं द्यां नाथस्य चन्द्रस्यापगमेन धूम्रां धूसरां स्त्री च नाथस्य भर्त्तुरपगमनेन विरहेण धूम्रा मलिना भवति मूर्च्छापरीतामिव अचेतनामिव सापि स्त्री मोहपरिगता भवति निर्विवेकां न विद्यते विवेको यत्र तादृशीं सापि स्त्री सदसद्विवेकशून्या सख्या प्रबोध्यते अरुणश्रीः कीदृशी प्रथितानुरागा प्रकाशितरक्तभावा मधुरा प्रिया अभिनवत्वात् सखी च प्रकाशितस्नेहा मधुरा प्रियभाषिणी च भवति॥ १६ ॥ भ०

अवीततृष्णोऽथ परस्परेण क्षणादिवायातनिशावसानः।
दुःखेन लोकः परवानिवागात्समुत्सुकः स्वप्ननिकेतनेभ्यः ॥१७
अर्द्धोत्थितालिङ्गितसन्निमग्नो रुद्धः पुनर्यान् गमनेऽनभीप्सुः।
व्याजेन निर्याय पुनर्निवृत्तस्त्यक्तान्यकार्य्यः स्थित एव कश्चित् १८

---

अवीत्यादि। अथानन्तरं लोकः परस्परेणान्योन्येन दयितो दयितया दयितापि दयितेन अवीततृष्णः अनपगतसम्भोगाभिलाषः अतएव क्षणादिव द्रुतमिवायातं निशावसानं यस्य समुत्सुकः उत्कण्ठितः परवानिव पराधीन इव स्वप्ननिकेतनेभ्यः वासगृहेभ्यो दुःखेन अगात् निर्गतवान् ॥ १७ ॥ ज० म०

अवीतेत्यादि। अथानन्तरं लोकः समुत्सुकः समुत्कण्ठितोऽपि परवान् पराधीन इव कार्य्यगौरवात् स्वप्ननिकेतनेभ्यः शयनगृहेभ्यो दुःखेनागात् निर्गतवान् यतः परस्परेण अन्योन्येन दयितो दयितया दयिता दयितेन अवीततृष्णः अविगतसम्भोगाभिलाषः अतएव क्षणादिव द्रुतमिवागतं निशावसानं यस्य स तथासुखेन कालबहुत्वाज्ञानात् ॥१७॥ म०

अर्द्धोत्थितेत्यादि। शयनात् अर्द्धमुत्थितं यस्येत्यर्द्धोत्थितः आहिताग्न्यादिषु द्रष्टव्य शयनस्य वा अर्द्धादुत्थित इति येऽव्य स चालिङ्गितो दयितया सन्निमग्नः शयने सुप्तः पुनर्यान्निर्गच्छन् रुद्धो विधृतः गमने अनभीप्सुरपि निर्य्याय निमित्तव्याजेन पुनर्निवृत्तः प्रविष्टस्त्यक्तान्यकार्य्यः स्थित एव कश्चित्कामी ॥ १८ ॥ ज० म०

अर्द्धोत्थितेत्यादि। कश्चित् कामुकः शयनादर्द्धोत्थितो दयितया आलिङ्गितः सन् पुनः सन्निमग्नः सुप्तः पुनरपि यान् गन्तुमुद्यतः सन् दयितया रुद्धो वारितः अतएव गमनेऽनभीप्सुरिच्छारहितोऽपि गुर्व्वादिभयान्निर्याय निर्गत्य व्याजेन रोगादिच्छलेन पुनर्निवृत्तः सन् कार्य्यान्तरं त्यक्त्वा स्थित एव शयनगृह इत्यर्थात् अर्द्धोत्थित इति शयनादर्द्धमुत्थितं यस्येत्याहिताग्न्यादित्वात् क्तान्तस्य विभाषया परनिपात इति परः स्मरते नियमानिर्देशादविरोध एव यद्वा अर्द्धेनोत्थित इति विग्रहः।

तालेन सम्पादितसाम्यशोभं शुभावधानं स्वरबद्धरागम्।
पदैर्गतार्थं नृपमन्दिरेषु प्रातर्जगुर्मङ्गलवत्तरुण्यः॥ १९॥
दुरुत्तरे पङ्क इवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः।

---

शयनस्थाद्वृद्धिस्थित इति वा अर्द्धोत्थितः सन् आलिङ्गितः सन् सन्निमग्न इति क्रमसमास.॥ १८॥ भ०

तालेनेत्यादि। नृपमन्दिरेषु रावणादिराजवेश्मसु प्रभातकाले तरुण्यो मङ्गलवत् मङ्गलोपेतं जगुः गायन्ति स्म तालेन क्रियाकालमानेन सम्पादिता साम्यशोभा यत्र गायनक्रियायां शुभावधानं शोभनमवधानं चित्तैकाग्रता यत्र स्वरबद्धरागं षड्जादिभिः स्वरैर्बद्धो ग्रामरागो यत्र पदैः सुप्तिङन्तैर्गतार्थं परिच्छिन्नार्थं निरर्थकपदरहितमित्यर्थः अनेन स्वरगतं पदगतं लयगतमवधानगतमिति चतुर्विधं गीतमाख्यातम्॥ १९॥ ज० म०

तालेनेत्यादि। नृपमन्दिरेषु राजगृहेषु प्रातः प्रभातसमये तरुण्यो मङ्गलयुक्तं यथा स्यात्तथा जगुर्गायन्ति स्म तालेन चञ्चत्पुटादिना सम्पादिता साम्यस्य लयस्य शोभा यत्र गानक्रियायां तालः कालक्रियामानं लयः साम्यमथास्त्रियामित्यमरः साम्यं नृत्यगीतवाद्यानां समत्वमित्यर्थः शुभं शोभनमवधानं चित्तैकाग्रता यत्र स्वरैः षड्जादिभिर्बद्धोऽनुगतो रागो यत्र पदैर्विभक्त्यन्तैर्गतः परिच्छिन्नोऽर्थो यत्र निरर्थकरहितमित्यर्थः तेन स्वरगतं लयगतं पदगतमवधानगतञ्चेति चतुर्विधं गीतमुक्तं नृपशब्दो राजनि रूढो रावणादिष्वपि प्रवर्त्तते॥ १९॥ भ०

दुरुत्तर इत्यादि। अन्धकारे पङ्क इव दुरुत्तरे दुःखेनोत्तीर्य्यत इति मग्नं प्रविष्टं जगद्यतः प्रनष्टमूर्त्तिप्रविभागं प्रनष्टः स्थावरजङ्गममूर्त्तीनां प्रविभागो यस्मिन् तद्विवस्वानुद्यन् उद्गच्छन् सन्ततरश्मिरज्जुः प्रवितता रश्मयो मयूखा एव रज्जवो येन सः प्रत्युज्जहारेव उद्धृतवानिव तत इत्यन्धकारात्॥ २०॥ ज० म०

प्रनष्टमूर्त्तिप्रविभागमुद्यन् प्रत्युज्जहारेव ततो विवस्वान् ॥ २० ॥
पीतौष्ठरागाणि हृताञ्जनानि भास्वन्ति लोलैरलकैर्मुखानि ।
प्रातः कृतार्थानि यथा विरेजुस्तथान पूर्व्वेद्युरलङ्कृतानि ॥ २१ ॥

---

दुरुत्तर इत्यादि । विवस्वान् सूर्य्य उद्यन् उद्गच्छन् दुःखेनोत्तरितुं शक्यो पङ्के इवान्धकारे मग्नं जगत् ततोऽन्धकारात् प्रत्युज्जहारेव उद्धृतवानिव कीदृशो विवस्वान् सन्तता विस्तृता रश्मयो रज्जव इव येन तादृशः अन्योऽपि मग्नं वस्तु रज्जुभिरुद्धरति जगत् कीदृशं प्रनष्टोऽदृश्यः स्थावरजङ्गममूर्त्तीनां प्रविभागो यत्र तादृशमन्धकारमग्नत्व तु दुरुत्तर इति दुःखेनोत्तीर्य्यते यदिति ईषद्दुःसोरिति कर्म्मणि खल् उद्यन्निति इनः शतरि यिणोऽव्ययाविति यत्वम् ॥ २० ॥ म०

पीतौष्ठरागाणीत्यादि । मुखानि वधूनामित्यर्थात् यथा प्रातः प्रभाते विरेजुः तथा पूर्वेद्युः पूर्वस्मिन्नहनि अलङ्कृतानि न रेजुः तेषामकृतार्थत्वात् तानि पुनः कृतार्थानि कृतकार्य्याणि यतो दयितैः पीतोष्ठरागाणि ओष्ठचुम्बनात् हृताञ्जनानि चक्षुषोरपि चुम्बनात् अपगतकज्जलानि लोलैराकुलैरलकैः कचग्रहाकर्षणात् भास्वन्ति दीप्तिमन्ति ॥ २१ ॥ ज० म०

पीतौष्ठेत्यादि । मुखानि वधूनामित्यर्थात् प्रातःकाले यथा विरेजुः शुशुभिरे न तथा पूर्व्वेद्युः पूर्वस्मिन् दिवसे अलङ्कृतानि कृतसाधनान्यपि विरेजुः अकृतार्थत्वेन तादृगुल्लासाभावात् प्रातस्तु कृतकार्य्याण्येव यतो दयितैः पीतौष्ठरागाणि ओष्ठचुम्बनात् पीत ओष्ठरागो यत्र हृताञ्जनानि आनन्दाश्रुपतनाच्चक्षुषोश्चुम्बनाद्वा अपगतकज्जलानि कामशास्त्रे नेत्रचुम्बनमभिहितं तथा हि नयनयुगकपोलं दन्तवासो मुखान्तः स्तनजघनललाटं चुम्बनस्थानमाहुरिति लोलैः करेण कचाकर्षणात् चञ्चलैः अलकैश्चूर्णकुन्तलैर्भास्वन्ति शोभमानानि ॥ २१ ॥ भ०

प्रजागराताम्रविलोचनान्ता निरञ्जनालक्तकपत्त्रलेखाः ।
तुल्या इवासन् परिखेदतन्व्यो वासच्युताः सेवितमन्मथाभिः ॥ २२ ॥
आवद्धनेत्राञ्जनपङ्कलेखस्ताम्बूलरागं वहुलं दधानः ।

---

प्रजागरा इत्यादि। भर्तृभिः सहैकत्र यच्छयनं स वासः तस्मा-च्च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिः अनुष्ठितसुरताभिः तुल्या इवासन् यतः प्रजागराताम्रविलोचनान्ताः दयितागमनप्रतीक्षणाद्यः प्रजागरस्तेन ताम्रनेत्रपर्यन्ताः नायात इति गृहीतप्रसाधनतया निर-ञ्जनालक्तकपत्त्रलेखाः यदि वा अन्यत्र शयित इति रोदनात् निरञ्जनाः चित्तोन्माथादितस्ततः पादविक्षेपात् विगतालक्तकाः शयने प्रतिक्षण-मुद्वर्त्तनपरिवर्त्तनात्कपोलादिभ्यो निष्पत्त्रलेखा इति खेदाच्च तन्व्यः कृशाङ्ग्यः ॥ २२ ॥ ज॰ म॰

प्रजागरा इत्यादि। कान्तैः सहैकत्र शयनं वासस्तस्माच्च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिरनुष्ठित सुरताभिस्तुल्या इव आसन् कीदृश्यः दयितस्यागमनप्रतीक्षणाद्यः प्रजागरस्तेनाताम्रौ विलोचनान्तौ यासां उपभुक्तानामपि सुरतासक्तत्वादेव प्रजागरः निरञ्जना निरलक्ता निष्पत्त्रलेखाश्च विरहेण प्रसाधनाभावात् किंवा रोदनान्निरञ्जनाः चित्तोन्मादादितस्ततः पादविक्षेपेण निरलक्तकाः शयने मुहुः परिवर्त्तना-न्निष्पत्त्रलेखाः उपभुक्ता अपि चुम्बनादानन्दाश्रुपाताद्वा निरञ्जना विप-रीतसुरतान्निरलक्तकाः चुम्बनताडनाभ्यां कपोलयोस्तनयोश्च निष्पत्त्रा-वलीका भवन्ति परिखेदात् विरहदुःखात् पक्षे सुरतामर्द्दात् कृशाङ्ग्यः जागर्त्तेर्घञि अनि वा जाग्रोऽविचिणल्ङित्सु गुणे जागरः सेसक्तात्स्त्रोरि-रिति अप्रत्यये स्त्रीत्वप्रसङ्गात् किंवा अप्रत्ययेऽभिधानं नियामकमित्युक्तेः स्त्रीत्वाविवक्षा केचित्तु अप्रत्ययान्तस्य स्त्रीत्वात् प्रजागराताम्रविलो-चनान्ता इति समस्तपदं पठन्ति तन्निरर्थकं जागर्या जागरा द्वयोरित्य-मरवचनात् ॥ २२ ॥ भ॰

आबद्धेत्यादि। कासाञ्चिदङ्गनानां पतिभिः सहोषितानामप्यधरः

चकार कान्तोऽप्यधरोऽङ्गनानां सहोषितानां पतिभिर्लघुत्वम्॥२३
चक्षूंषि कान्तान्यपि साञ्जनानि ताम्बूलरक्तञ्च सरागमोष्ठम्।
कुर्व्वन् सवासञ्च सुगन्धि वक्त्रं चक्रे जनः केवलपक्षपातम्॥२४॥
क्षतैरसञ्चेतितदन्तलब्धैः सम्भोगकालेऽवगतैः प्रभाते।

---

लघुत्व दौर्भाग्य चकार सूचितवानित्यर्थः यतस्ता ईर्ष्यितसुरतामप्राप्ता रुदितास्ततस्तबद्धो लग्नो नेत्राञ्जनपङ्कलेशो यस्य सोऽधरो दयितैरपीतत्वाच्च बहुल ताम्बूलरागं दधानः कान्तोऽपि लघुत्वं चकार॥ २३ ॥ ज० म०

आबद्धेत्यादि। कासांश्चिदङ्गनानां पतिभिः सहोषितानां स्वभावतः कान्तोऽपि अधरो लघुत्वं चकार दौर्भाग्यं सूचितवानित्यर्थः अनुपभुक्तत्वात् अधर. कीदृश. रोदनादाबद्धो लग्नो नेत्राञ्जनपङ्कस्य लेशोऽल्पभागो यत्र तादृशः दयितैरपीतत्वाद्बहुलं प्रचुरं ताम्बूलरागं दधानः॥ २३ ॥ भ०

चक्षूंषीत्यादि। कान्तान्यपि शोभनान्यपि चक्षुंषि विकचोत्पलद्युतित्वात् साञ्जनानि कुर्व्वन् स्त्रीजनः प्रातर्गृह्यमाणप्रसाधनत्वात् सरागं चोष्ठं स्वभावतो बिम्बफलाकारत्वात् ताम्बूलरक्तं कुर्व्वन् स्वभावतश्च सुगन्धि वक्त्रं सवासं सुखं वासयुक्तं कुर्व्वन् केवलपक्षपातं ममत्वं चक्रे अञ्जनादीनां निरर्थकत्वात्॥ २४ ॥ ज० म०

चक्षूंषीत्यादि। स्त्रीजनः स्वभावतः कान्तान्यपि नेत्राणि अञ्जनयुक्तानि कुर्व्वन् स्वभावतः सरागमोष्ठं ताम्बूलरक्तं कुर्व्वन् स्वभावतः सुगन्धि वक्त्रं सवासं कर्पूरादिसुखवासयुक्तं कुर्व्वन् केवलं पक्षपातं प्रसादनस्नेहञ्चक्रे अञ्जनादीनां निरर्थकत्वात्॥ २४ ॥ भ०

क्षतैरित्यादि। अस्या मया दत्तं अस्य च मयेति सम्भोगकाले रागान्धतया असञ्चेतितान्यज्ञातानि दन्तेभ्यो लब्धानि यानि क्षतानि चितसंचेतन इति स्वार्थिकण्यन्तस्य रूपं प्रभातकाले अवगतैर्दृष्टैः वियोगवाह्योऽपि सुप्तोऽपि कामिजनः अतिरागात् अतिस्नेहात् अन्योन्य कृतं अन्योन्येन कृतं व्यलीक अपराधं अशंकत विकल्पितवान् लङि रूपं

अशङ्कतान्योन्यकृतं व्यलीकं वियोगबाह्योऽपि जनोऽतिरागात् २५
नेत्रेषुभिः संयुतपक्ष्मपत्रैः कर्णान्तकृष्टैरुरुकेशशूलाः ।
स्तनोरुचक्रास्ततकर्णपाशाः स्त्रीयोधमुख्या जयिनो विचेरुः ॥२६
पयोधरांश्चन्दनपङ्कदिग्धान् वासांसि चाम्लिष्टसृजानि दृष्ट्वा ।

---

किमस्यान्यया कृताशया दत्तमिति योषिदशंकत पुरुषोऽपि किमन्येन धूर्तेनास्या इति ॥ २५ ॥ ज० म०

चतैरित्यादि । वियोगबाह्योऽपि विरहेणायुक्तोऽपि जनोऽतिरागादतिस्नेहात् चतैरन्योन्येन कृतं व्यलीकमपराधमशङ्कत शङ्कितवान् द्यां रूपं किमस्यान्यया कान्तया दत्तं चतमिति योषिदशङ्कत पुरुषोऽपि किमस्या अन्येन प्रच्छन्नकामुकेन दत्तं चतमिति शङ्कते स्म कुत इत्याह कोदृशैः चतैः सम्भोगकाले रागान्धतया असञ्चेतितानि अज्ञातानि दन्तैश्यो लब्धानि यानि तैः चित्तसंज्ञाने प्रभातकालेऽवगतैर्ज्ञातैर्दर्शनात् ॥ २५ ॥भ०

नेत्रेषुभिरित्यादि । नेत्राणि इषव इव तैः संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि येषां तैः कर्णान्तकृष्टैः कर्णान्तविश्रान्तैः उपलक्षिताः स्त्रियो योधमुख्या इव उरुकेशशूला उरवो महान्तः केशाः शूला इव येषां स्तनोरुचक्राः स्तनाः उरूणि चक्राणीव येषां ततकर्णपाशा तताः कर्णाः पाशाः इव येषां ते जयिनो लब्धविजया विचेरुः भ्रान्ताः ॥२६॥ज०म०

नेत्रेषुभिरित्यादि । स्त्रियो योधमुख्या इव योद्धृश्रेष्ठा इव विचेरुर्भ्रमन्ति स्म संयुतानि सयुक्तानि पक्ष्माण्येव पत्राणि पक्षा यत्र तैः कर्णान्तकृष्टैः कटाक्षदशायां कर्णान्तप्रेरितैर्नेत्रैरिषुभिरिव उपलक्षिता उरवो महान्तः केशाः शूलानीव येषां श्यामत्वात् दीर्घत्वात्कामपीडाकारित्वाच्च स्तना महाचक्राणीव येषां विशालपारिमाण्डल्यात् तताः कर्णाः पाशा इव येषां कामुकमानबन्धनयोग्यत्वात् अतएव जयिनः पुञ्जयशीलाः ॥ २६ ॥ भ०

पयोधरानित्यादि । चन्दनपङ्कदिग्धान् आप्लुतचन्दनत्वात् वस्त्राणि च अस्पष्टसृजानि अनपनीतगुह्यभावानि स्त्रीणां दृष्ट्वा प्रभाते तत्सपत्न्यो

स्त्रीणां सपत्न्यो जहृषुः प्रभाते मन्दायमानानुशयैर्मनोभिः॥२७॥
स्मरातुरे चेतसि लब्धजन्मा रराज लोलोऽपि गुणापहार्य्यः ।
कुतूहलान्नेत्रगवाक्षसंस्थः पश्यन्निवान्योन्यमुखानि रागः ॥२८॥

---

मनोभि. न व.ह्यं जहृषु हृष्टाः अप्राप्तसुरतत्वान्मन्दायमानानुशयैः आभिः सह शयिता इति तासु ये अनुशयाः अत्यान्तयो जाताः ते मन्दायमानाः शनैः शनैस्तनूभवन्तो येषु मनःसु तैरित्यर्थः ॥ २७ ॥ ज० म०

पयोधरानित्यादि । स्त्रीणां चन्दनपङ्कैर्दिग्धान् लिप्तान् पयोधरान् स्तनान् दृष्ट्वा अम्लिष्टस्रजानि अनपनीतशुक्लशुद्धभावानि वासांसि च वस्त्राणि च दृष्ट्वा प्रभाते तासां सपत्न्यो मनोभि करणभूतैः तैरुपलक्षिता वा जहृषुः हृष्टा कीदृशैः मन्दायमानोऽनुशयः क्रोधो यत्र पूर्वं भर्त्रा सह सपत्नीनामेकत्रवासात् क्रोध उत्पन्नः पश्चात्तासां सम्भोगाभावज्ञानात् क्रोधस्य मन्दायमानत्वं हर्षश्च जातः सम्भोगे हि मर्दनात् चन्दनच्युतिर्वस्त्रमालिन्यञ्च स्यात् ॥ २७ ॥ म०

स्मरातुर इत्यादि । दम्पत्योः प्रातरन्योन्यस्य मुख पश्यतोः चक्षुषोरागोवर्ण्यते स्मरातुरे कामातुरे चेतसि लब्धजन्मा लब्धोदयः रागो रक्तभावः नेत्रगवाक्षसंस्थः नेत्रयोर्गवाक्षयोरिव स्थित. कुतूहलात् कौतुकात् अन्योन्यस्य मुखानि पश्यन्निव कीदृशं कामिन्यामुखं कामुकस्य मुखं वेति गुणापहार्य्यः तत्प्रतिपक्षेण शुक्लगुणेन अपनेयः अतएव लोलोऽपि अचिरस्थाय्यपि रराज ॥ २८ ॥ ज० म०

स्मरातुर इत्यादि । दम्पत्योः प्रातरन्योन्यमुखं पश्यतोर्नेत्ररक्तिमा उत्प्रेक्ष्यते रागो रक्तभावो नेत्रयोर्गवाक्षयोरिव स्थितः सन् कुतूहलादन्योन्यमुखानि पश्यन्निव कीदृश कामिन्याः कामुकस्य वा मुखमिति विलोकयन्निव रराज शोभतेस्म कीदृशः स्मरातुरे चेतसि लब्धजन्मा लब्धोदयः गुणेन तत्प्रतिपक्षेण शुक्लरूपेणापहार्य्योऽपनेयः अतएप लोलश्चञ्चलः अचिरस्थाय्यपि रराजेत्युत्कर्षः किं वा रागोऽनुरागः गुणापहार्य्यो मुखसौन्दर्य्येण वशीकृतः ॥ २८ ॥ म०

गतेऽतिभूमिं प्रणये प्रयुक्ता न बुद्धिपूर्व्वं परिलुप्तसंज्ञः।
आत्मानुभूतानपि नोपचारान्स्मरातुरः संस्मरति स्म लोकः॥२९॥
वस्त्रैरनत्युल्वणरम्यवर्णैर्विलेपनैः सौरभलक्षणीयैः।
आस्यैश्च लोकः परितोषकान्तैरसूचयल्लब्धपदं रहस्यम्॥ ३०॥

---

गत इत्यादि। प्रणये विस्रम्भे अतिभूमिं गते प्रकृष्टावस्थां प्राप्ते सति ये अबुद्धिपूर्वं अनिरूप्य स्वयं प्रयुक्ताः उपचारान् नखदन्तक्षतादयः तानात्मानुभूतानपि प्रातर्न स्मरति स्म कामिलोकः इदमिदं मया प्रयुक्तमिति यतः सुरतावस्थायां स्मरातुरतया विलुप्तसंज्ञो मूढ इति॥२९॥ज०म०

गते इत्यादि। प्रणये प्रेम्णि अतिभूमिं प्रकृष्टावस्थां गते सति अबुद्धिपूर्वमविचार्य्य सुरतकाले स्वयं प्रयुक्तान् कृतानपि उपचारान् नखदन्तक्षतादीनात्मानुभूतानपि तदानीं स्मरातुरत्वेन परिलुप्तसंज्ञत्वात् लोकः प्रभाते न स्मरति स्म प्रणय. प्रेम्णि विस्रम्भे याच्ञा.प्रसरयोरपीति रुद्र.॥ २९ ॥ भ०

वस्त्रैरित्यादि। वस्त्रैः विलेपनैः सौरभलक्षणीयैः सुरभितया परिच्छेद्यैः आस्यैश्च व्यपगताधररागैः परितोषकान्तैर्लिङ्गभूतैः रहसि भवं सुरतं लब्धपदं प्राप्तचिह्नं लोकः प्रकाशयति स्म॥ ३०॥ ज० म०

वस्त्रैरित्यादि। लोको वस्त्रादिचिह्नैरहस्यं रहसि भवं सुरतमसूचयत् प्रकाशितवान् कीदृशं लब्धपदं प्राप्तचिह्नं कामिषु प्राप्तावसरं वा वस्त्रैः कीदृशैरनत्युल्वणरम्यवर्णैः परिस्फुटितत्वादनुद्भटरमणीयवर्णैः अनतिविशदरम्यवर्णैर्वा अल्पक्लिष्टैरित्यर्थः उल्वणं विशदं स्फुटमिति कोषः विलेपनैः कीदृशैः सौरभलक्षणीयैः सौरभेण शरीरगतसुरभित्वमात्रेण लक्षणीयैरनुमेयैः आस्यैः कीदृशैः परितोषकान्तैरधररागपत्रावल्यादिलोपेऽपि परितोषेण कृतार्थताजनितानन्देन कमनीयैः॥ ३०॥ भ०

प्रातस्तरामित्यादि। गुरुजनो नखदशनक्षतं मा द्राक्षीदिति अवानः प्रातस्तरां प्रत्यूषसि चन्दनलिप्तगात्रा हस्तैरधरान् प्रच्छाद्य वद-

प्रातस्तरां चन्दनलिप्तगात्राः प्रच्छाद्य हस्तैरधरान् वदन्तः ।
शाम्यन्निमेषाः सुतरां युवानः प्रकाशयन्ति स्म निगूहनीयम् ॥ ३१ ॥
जितेऽपि लोके मधुरेण वामे ! किमुद्यतं भ्रूधनुरप्रसह्यम् ।
हन्तुं क्षमो वा वद लोचनेषुर्दिग्धो विषेणेव किमञ्जनेन ॥ ३२ ॥

---

न्तोऽपि शाम्यन्निमेषा अनिमिषितनेत्रा गूहनीयं सुतरां प्रकाशयन्ति स्म नूनमेते सत्कृता- येन एवमाचरन्तीति ॥ ३१ ॥ ज० म०

प्रातस्तरामित्यादि । महति प्रातःकाले नखक्षतादिसङ्गोपनार्थं चन्दनेन लिप्तगात्रा अपि दन्तक्षतसङ्गोपनार्थं गुरुसमीपे हस्तैरधरं प्रच्छाद्य वदन्तोऽपि जागरणजनितनिद्राव्यपगमार्थं शाम्यन्निमेषा निमेषं वारयन्तोऽपि युवानः निगूहनीयं सङ्गोपनीयं सुरतं सुतरामतिशयेन प्रकाशयन्ति स्म सङ्गोपनेनैव नखक्षताद्यनुमानात् यद्वा शाम्यन्निमेषाः सन्तः प्रकाशयन्ति निमेषाणां भावत्वागदर्शनात् सौक्ष्म्यमत्र गुणः तत्सौक्ष्म्य- मुच्यते यत्र सूक्ष्मार्थस्यापि दर्शनम् । अत्र सुरतस्य सङ्कुप्तया सूक्ष्मत्वम् ॥ ३१ ॥ भ०

जित इत्यादि । हे वामे ! प्रतिकूलवर्त्तिनि मधुरेणाविकृतेन साम्ना लोके अस्मद्विधे जितेऽपि वशीकृतेऽपि भ्रूधनुरप्रसह्यं प्रसोढुमशक्यं उद्यतं उत्क्षिप्तं अथवा विलोचनेषुर्नेत्रशरः स्वत एव हन्तुं क्षमः ततः किमञ्जने- नेव विषेण दिग्धो विषलिप्त इति वद कथय ॥ ३२ ॥ ज० म०

जित इत्यादि । युवान इत्यूचुरित्यग्रिमश्लोकेनान्वयः हे वामे ! प्रतिकूलवर्त्तिनि लोके चाऽस्मद्विधे मधुरेण माधुर्य्यगुणेन स्वभावसिद्धोपायेन प्रियवचनेन वा जितेऽपि पराभूतेऽपि वशीकृतेऽपि सोढुमशक्यं भ्रूरूपधनुः किमर्थमुद्यतमुत्क्षिप्तं अयञ्च लोचनरूपशरः स्वयमेवास्मान् हन्तुं क्षमः समर्थः तत्किं विषेणेवाञ्जनेन वा दिग्धो लिप्तः तत्त्वं वद वतेति पाठे खेदे स्वभावैरेव कार्य्यस्य सिद्धौ किमधिककल्पनया भाविकत्वमत्र गुणः अहं त्वदायत्त एवेत्यभिप्रायप्रकाशात् साभिप्रायोक्तिविन्यासो भाविकत्वं प्रच- क्षते इति ॥ ३२ ॥ भ०

दन्तच्छदे प्रज्ज्वलिताग्निकल्पे ताम्बूलरागस्तृणभारतुल्यः ।
न्यस्तः किमित्यूचुरुपेतभावा गोष्ठीषु नारीस्तरुणीर्युवानः ॥२३॥

युग्मकम् ।

सुखावगाह्यानि युतानि लक्ष्म्या शुचीनि सन्तापहराण्युरूणि
प्रबुद्धनारीमुखपङ्कजानि प्रातः सरांसीव गृहाणि रेजुः ॥२४॥

---

दन्तच्छद इत्यादि । प्रज्ज्वलिताग्निकल्पे स्वभावलोहितत्वात् दन्तच्छदे ओष्ठे ताम्बूलरागः किमिति न्यस्तः तृणभारतुल्यः निष्प्रयोजनत्वात् इत्येवमूचुर्युवानः प्रातरित्यर्थात् उपेतभावाः जातानुरागाः गोष्ठीषु स्थिता नारीस्तरुणीरिति ॥ २३ ॥ ज० म०

दन्तेत्यादि । दन्तच्छदे ओष्ठे ताम्बूलरागः किमर्थं न्यस्तः कीदृशे प्रज्ज्वलितवह्निसदृशे स्वभावतो लोहितत्वादत्युद्दाहकत्वाच्च कीदृशः तृणभारसमो निष्प्रयोजनत्वादत्युद्दीपकत्वाच्च वह्नौ तृणप्रक्षेपो ह्यत्युद्दीपको भवति इत्येव युवानस्तरुणा उपेतभावा उपगतरागाः सन्तस्तरुणी नारी गोष्ठीषु स्त्रीसभासु स्थिता ऊचुः ॥ २३ ॥ भ०

सुखावगाह्यानीत्यादि । प्रातः प्रभाते गृहाणि सरांसीव रेजुः सुखावगाह्यानि निरुपद्रवत्वात् सुखेनावगाह्यन्ते युतानि लक्ष्म्या देवतारूपया शुचीनि पवित्राणि सन्तापहराणि घर्म्मादिक्लेशापहारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पङ्कजानि यत्रेति ॥ २४ ॥ ज० म०

सुखेत्यादि । प्रातः प्रभातकाले गृहाणि सरांसीव रेजुः शोभन्ते स्म कीदृशानि सुखहेतुरवगाहो यत्र तानि लक्ष्म्या सम्पत्त्या शोभया वा युतानि शुचीनि पवित्राणि सन्तापहराणि घर्म्मादिक्लेशापहारीणि उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पद्मे तानीव पङ्कजानि येषु ॥ २४ ॥ भ०

संमृष्टसिक्तार्च्चितचारुपुष्पैरामोदवद्द्रव्यसुगन्धभागैः ।
लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवैरपि नन्दनस्य ॥३५॥
अक्ष्णोः पतन्नीलसरोजलोभाद्भृङ्गः करेणाल्पधिया निरस्तः ।

---

संमृष्टेत्यादि। देवैः सेव्यस्यापि नन्दनस्य लक्ष्मीर्भवनैः प्रातर्विजिग्ये विजिता आदौ संमृष्टरजांसि अपनीतरजांसि पश्चात्सिक्तानि पूर्व्वापरकालसमासः अर्च्चितानि पूजितानि प्रशस्तानि चारूणि शोभनानि पुष्पाणि येषु भवनेषु संमृष्टसिक्तानि च तानि अर्च्चितचारुपुष्पाणि चेति विशेषणसमासः आमोदवन्ति यानि द्रव्याणि चन्दनादीनि तैः सुगन्धभाग एकदेशो येषां तैः गन्धस्येतदेकान्तग्रहणादित्वं न भवति सभृङ्गैरामोदभृततत्वात् ॥ ३५ ॥ ज० म०

संमृष्टेत्यादि। देवैरिन्द्रादिभिरपि सेव्यस्य नन्दनवनस्य लक्ष्मीः सम्पत्तिः शोभा वा भवनैर्गृहैः प्रातर्विजिग्ये जिता कर्म्मणि ठी कीदृशैः पूर्व्वं संमृष्टानि अपनीतरजांसि पश्चात् सिक्तानि संमृष्टसिक्तानि पूर्व्वकालस्यापरकालेनेति कर्म्मधारय इति परः स्वमते एकार्थतस्यैव अर्च्चितानि पूजितानि चारूणि शोभमानानि पुष्पाणि येषु तानि पश्चात् संमृष्टसिक्तानि अर्च्चितचारुपुष्पाणि चेति पुनः कर्म्मधारयः आमोदवद्भिर्द्रव्यैश्चन्दनादिभिः सुगन्धा भागा एकदेशा येषां सूत्सुरभिपूतेरित्यादौ गन्धशब्दो गुणवाचीति टीकाकृद्वचनादभिधानाद्वा इप्रत्ययाभावः भृङ्गैरामोदानुसारित्वाद्भ्रमरैः सह वर्त्तमानानि नन्दनस्यैवं भवति उदात्तता गुणोऽसंमृष्टसिक्तेत्यादिभिर्विशेषणैर्योगात् उक्तैर्विशेषणैर्योगो यस्तु सास्यादुदात्तता ॥ ३५ ॥ भ०

अक्ष्णोरित्यादि। नीलसरोजलोभात् नीलकमलमेतदित्यक्ष्णोः पतन्निलीयमानो भृङ्गः अल्पधिया अल्पबुद्ध्या कयाचित् करेण निरस्तः क्षिप्तः सन् ताम्राम्बुरुहाभिसन्धिः रक्तपद्ममेतदित्यभिसन्धिरभिप्रायो यस्य भृङ्गस्य स धृष्णुः प्रगल्भः पाणितलेऽपि ददंश दष्टवान् तामित्यर्थात् ॥ ३६ ॥ ज० म०

ददंश तान्माम्बुरुहाभिसन्धिस्तृष्णातुरः पाणितलेऽपि धृष्णुः ॥३६
विलोलतां चक्षुषि हस्तवेपथुं भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम्।
विभूषणानां क्वणितञ्च षट्पदो गुरुर्यथा नृत्यविधौ समादधे ३७
अथानुकूलान् कुलधर्मसम्पदो विधाय वेशान् सुदिवः पुरीजन।

---

अक्ष्णोरित्यादि। नीलसरोजमेतदिति मत्वा तल्लोभात् चक्षुषोः पतन् भृङ्गः कयाचिदल्पधिया मुग्धया करेण निरस्तः सन् पाणितलेऽपि तां ददंश दष्टवान् यतः करं दृष्ट्वा रक्तपद्ममित्यभिसन्धिरभिप्रायो यस्य कीदृशः तृष्णातुरः तृष्णाव्यग्रः धृष्णुः प्रगल्भः सौकुमार्य्यमत्र गुणः अक्ष्णोः करस्य चोत्पलत्वेन निरूपणात् अनिष्ठुरत्वं यत् प्राक्तं सौकुमार्य्यं तदुच्यते॥ ३६॥ भ०

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्यो नृत्यकर्म्मणि कस्याश्चिच्चक्षुषि विलोलतां चलतां हस्तवेपथुं हस्तकम्पं भ्रुवोर्विभङ्गं नतोन्नतिं स्तनयुग्मवल्गितं प्रचलितं भूषणानां क्वणितं शिञ्जितं जनयति तद्दृष्ट्वा षट्पदोऽपि तत्समादधे विहितवान्॥ ३७॥ ज० म०

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्यो नृत्यकर्म्मणि शिक्षायां कस्याश्चिच्चक्षुषि विलोलतां चाञ्चल्यं हस्तयोर्वेपथुं कम्पं भ्रुवोर्विभङ्गमन्यथाकरणं स्तनयुगलस्य वल्गितं चलनं विभूषणानामलङ्काराणां क्वणितं शिञ्जितं समादधे जनयति तथा षट्पदोऽपि समादधे कृतवान् भ्रमरबाधया काचिन्नृत्यमिव चकारेत्यर्थः प्रौढिरत्र गुणश्चक्षुर्विलोलताप्रभृतिभिर्नृत्यस्य निर्वाहात् विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता।३७॥म०॥

अथानुकूलानित्यादि। अथानन्तरं पुरीजनो लङ्कानिवासिजनः प्रतिदिनमवाप्तकल्याणत्वात् सुदिवः सुप्रातेत्यादिना समासान्तनिपातन यथास्वं कुलधर्म्मस्य पुरस्य या सम्पद्विभूतिः तस्या अनुकूलान् वेशान्नेपथ्यानि विधाय कृत्वा शतमन्युविद्विषो रावणस्य प्रबोधकाले राजनिकेतनं प्रत्यभिलक्ष्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपाभ्यां समर्थाभ्यामिति तङ्॥ ३८॥

प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राजनिकेतनं प्रति ॥३८॥
शैलेन्द्रशृङ्गेभ्य इव प्रवृत्ता वेगाज्जलौघाः पुरमन्दिरेभ्यः ।
आपूर्य्य रथ्याः सरितो जनौघा राजाङ्गनाम्भोधिमपूरयन्त ॥३९॥
प्रबोधकालात् त्रिदशेन्द्रशत्रोः प्रागूर्द्धशोषं परिशुष्यमाणाः ।

---

अथेत्यादि। अनन्तरं पुरीजनो लङ्कानिवासिनो वेशान् विधाय कृत्वा शतमन्युविद्विष इन्द्रशत्रो रावणस्य प्रबोधकाले निद्राभङ्गसमये राजगृहं प्रति लक्ष्यीकृत्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपादारम्भे इति म कीदृशान् कुलधर्म्मस्य कुलाचारस्य या सम्पद्विभूतिस्तस्या अनुकूलान् सदृशान् कुलोचितानित्यर्थः कीदृशः सुदिवः प्रतिदिनं प्राप्तकल्याणत्वात् शोभनं दिवा यस्य दिवाशब्द सप्तम्यन्ताव्यय इति ये वदन्ति तन्मते शोभनं दिवा दिवसे कर्म्म यस्येति विग्रहः राजादित्वात् सुदिवो निपातित इति कालापाः स्वादिभ्यो दिवादेरिति सूत्रेण डप्रत्ययमाह क्रमदीश्वरः रूमते स्वार्थे ष्णः तस्यात्वविवक्षया वृद्धेरभाव.॥ ३८॥ भ०

शैलेन्द्रशृङ्गेभ्य इत्यादि। यथा जलानां पूराः शैलेन्द्रशृङ्गात् प्रवर्त्तन्ते तद्वत्पुरमन्दिरेभ्यः प्रवृत्ताः जनौघा रथ्या. सरित इवापूर्य्य राजाङ्गनमम्भोधिमिवापूरयन्त पूरितवन्तः॥ ३९ ॥ ज० म०

शैलेन्द्रेत्यादि। यथा जलानां वारीणामोघाः पूराः प्रवाहाः शैलेन्द्रशृङ्गेभ्यः प्रवृत्ताः सरितो नदीरापूर्य्य वेगात् सागरं पूरयन्ति तथा जनौघाः लोकसमूहाः पुरमन्दिरेभ्यो लङ्कागृहेभ्यः प्रवृत्ता रथ्याः प्रतोलीरापूर्य्य वेगात् राजाङ्गनं राज्ञो रावणस्य चत्वरमपूरयन्त तवर्गपञ्चमोपान्तमङ्गनमिति विश्वः पृषोदरादित्वात् णत्वमिति पाणिनीयाः रूमते सनीषादित्वाद्विभाषया णत्वम्॥ ३९ ॥ भ०

प्रबोधकालादित्यादि। त्रिदशेन्द्रशत्रो रावणस्य प्रबोधकालात्प्राक् पूर्व्वं ऊर्द्धशोषं परिशुष्यमाणाः राजाङ्गने ऊर्द्धीकृता एव प्रबोधकाले शोषं नीयमाना इति अन्तर्भावितण्यर्थो द्रष्टव्यः एवञ्च कृत्वा कर्म्मण्यात्म-

हीना महान्तश्च समत्वमीयुर्द्वास्थैरवज्ञापरुषाक्षिदृष्टाः ॥ ४० ॥
गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाग्राङ्गुलिसंगृहीतैः ।
रक्षांस्यनायासहतैरुपास्थुः कपोललीनालिकुलैर्गजेन्द्रैः ॥४१॥

---

नेपदं अन्ये परिशोष्यमाणा इति णिचं पठन्ति ऊर्द्ध्वशुषीति णमुल् हीनाः महान्तश्च सेवकाः समत्वं तुल्यत्वमीयुः द्वास्थैर्दौवारिकैः द्वारि तिष्ठन्तीति सुपिस्थ इति क. खरवसानयोर्विसर्जनीय इति विसर्जनीयस्य सः अवज्ञया अनादरेण परुषमस्निग्धं यदक्षि तेनाक्ष्णा दृष्टाः ॥४०॥ ज० म०

प्रबोधेत्यादि। त्रिदशेन्द्रशत्रो रावणस्य प्रबोधकालात् निद्राभङ्ग-समयात् प्राक् पूर्व्वं हीना महान्तश्च जनाः समत्वं तुल्यतां ईयुः प्राप्ताः दौवारिकैः सर्व्वेषां प्रवेशनिषेधात् कीदृशा ऊर्द्ध्वशोषं परिशुष्यमाणाः ऊर्द्ध्वशोषमिति यदुक्तं तद्विशेषेण मुखादिशोषणं सूचनार्थं ऊर्द्ध्वात् शुषिपूरेः स्वार्थे क्त्वा णमिति परः किमयं करिष्यतीति त्रासात् शुष्कास्य-कण्ठतालुका आसन्नित्यर्थः द्वास्थैः दौवारिकैरवज्ञया अनादरेण यत्परुषं रूक्षमपि चक्षुस्तेन दृष्टा द्वारि तिष्ठतीति द्वास्थः ह्नजनादिति डः सनोशादित्वाद्विभाषया विसर्गलोपः कादियुक्तशषसेलुग्वेति क्रमदीश्वर-सूत्रम् ॥ ४० ॥ भ०

गुरूरुचञ्चदित्यादि। गुरवोऽलघवः उरवो महान्तः चञ्चन्तश्चलन्तः कराः कर्णौ जिह्वाश्च येषां गजेन्द्राणां तैरवज्ञया अग्राङ्गुलिसङ्गृहीतैः पदाङ्गुष्ठाग्रेण यन्त्रस्थाने परिगृहीतैः अङ्गुलेरग्रमिति राजदन्तादित्वात् पूर्व्वनिपातः अनायासहतैः शनैः शनैः प्रचोदितैः मत्तत्वात् कपोललीना-लिकुलैः रक्षांसि उपास्थुः सेवामकार्षुः ॥ ४१ ॥ ज० म०

गुर्व्वित्यादि। कतिचिद्रक्षांसि राक्षसा गजेन्द्रैरुपास्थुः मत्तहस्तिनो गृहीत्वा रावणं सेवितवन्तः कीदृशैर्गुरवोऽलघवः उरवो महापरिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाः जिह्वाश्च येषां तैः अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रं अग्राङ्गुलिरिति

निकृत्तमत्तद्विपकुम्भमांसैः संपृक्तमुक्तैर्हरयोऽग्रपादैः।
आनिन्यिरे श्रेणीकृतास्तथान्यैः परस्परं वालधिसन्निबद्धाः ॥४२॥
उपेक्षिता देवगणैस्त्रसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः।

---

राजदन्तादिरिति परः स्मृते एकदेशेऽपि समुदायोपचारात् कर्म्म-धारयः अग्रे अग्रतः स्थाने अङ्गुल्या पादाङ्गुष्ठेन संगृहीतैरिति केचित् अनायासेन हृतैः शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमर-कुलानि येषां तैः ॥ ४१ ॥ भ०

निकृत्तेत्यादि। अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे आनीताः निकृतानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकु-म्भमुक्ताफलैः उपलक्षिताः श्रेणीकृता अश्रेणयः श्रेणयः कृताः श्रेण्यादय इति सः परस्परं वालधिसंनिबद्धाः अन्योन्यस्य पुच्छेन यताः ॥४२॥ ज०म०

निकृत्तेत्यादि। अन्यै राजसैर्हरयः सिंहा आनिन्यिरे आनीताः तथा पूर्व्वापेक्षया अग्रपादैः पादाग्रैरुपलक्षिताः कीदृशैः निकृत्तानि छिन्नानि मत्तद्विपानां कुम्भमांसानि यैः संपृक्ताः संयुक्ताः गजकुम्भस्थमुक्ता यत्र कीदृशाः श्रेणीकृता अश्रेणयः श्रेणयः कृता अभिधानं नियामकमि-त्युक्तेः च्व्यर्थे श्रेण्यादेः कृतादिना समासः इति बोध्यं परस्परमन्योन्यस्य पुच्छेन बद्धाः षष्ठ्या अमादेशो लोकोपचारादिति विद्यासागरः क्रिया-विशेषणमिति केचित् स्मृते मनीषादित्वात् ॥ ४२ ॥ भ०

उपेक्षितेत्यादि। सुरद्रुमाणां पारिजातानां सजालाः कलिका-सहिताः पुष्पस्तवकाः वीतभयैर्निशाचरैर्निकृत्ताः छिन्नाः वीतदयैरिति पाठान्तरं तत्र किमेतैः स्थितैरिति निर्द्दयैः सजाला एव छिन्नाः छिद्य-मानाश्च देवगणैस्त्रसद्भिरुपेक्षिताः वाभ्रायेत्यादिना विकल्पेन श्यन् तस्मिन्राजाङ्गने प्रकीर्णा अदृश्यन्त सेवकजनेन ॥ ४३ ॥ ज० म०

उपेक्षितेत्यादि। तस्मिन् राजाङ्गने सुरद्रुमाणां पारिजातादीनां प्रकीर्णा विक्षिप्ताः जालेन कलिकया सहिताः पुष्पस्तवका अदृश्यन्त दृष्टाः

तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तवकाः प्रकीर्णाः ॥४३॥
निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताशेषगुणोऽतिमोहात् ।
पापाशयानभ्युदयार्थमार्चीत् प्राग्ब्रह्मरक्षःप्रवरान् दशास्यः ॥४४
मायाविभिस्त्रासकरैर्जनानामाप्तैरुपादानपरैरुपेतः ।

---

सेवकैरित्यर्थात् कीदृशाः त्रसद्भिस्त्रासं गच्छद्भिर्देवगणैरुपेक्षिताः भ्रसत्नमे-त्यादिना त्रसेर्विकल्पेन श्यन् विहित इति पक्षे शप् वीतभयैर्विगतत्रासै-र्निशाचरैर्निकृत्ताः छिन्नाः वीतदयैरिति पाठे किमेतैः स्थितैरिति निर्दयैः जालं गवाक्षे आनाये कोरके दम्भभेदयोरिति विश्वः ॥ ४३ ॥ भ०

निराकरिष्णुरित्यादि । दशास्यो विबुद्धः सन् अतिमोहादत्यन्ता-ज्ञानात् निराकरिष्णुर्निराकरणशीलः द्विजवरानित्यर्थात् द्विजकुञ्जराणां प्रशस्तद्विजानां अभ्युदयहेतूनां सम्बन्धिनोऽशेषाः गुणाः तृणीकृता येन स तृणीकृताशेषगुणः प्राक् पूर्वं सभाप्रवेशात् पापाशयान् पापचित्तवृत्तीन् ब्रह्मरक्षःप्रवरान् अभ्युदयार्थमार्चीत् ॥ ४४ ॥ ज० म०

निराकरिष्णुरित्यादि । दशास्यो रावणः प्रबुद्धः सन् सभाप्रवेशा-त्प्राक् पूर्वं पापाशयान् पापचित्तवृत्तीन् ब्रह्मराक्षसश्रेष्ठान् ज्ञातीनभ्यु-दयार्थम् आर्चीत् पूजितवान् कीदृशः अतिमोहात् अत्यज्ञानात् द्विजकुञ्ज-राणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठान्निराकृत्य ब्रह्मराक्षसान् पूजितवानिति मोहः दृषेकृतीत्यादिना उदन्तकृद्योगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृता अवधीरिताः सकला गुणा येनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात् ॥ ४४ ॥ भ०

मायाविभिरित्यादि । आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः प-रेषां त्रासकरैः जनानामविरौद्रत्वात् उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविशत् प्रविष्टः शलदृशुपधातिटः क्सः कीदृशं राक्षसैश्चरणभागेन परिक्षोभितभूमि-भागम् ॥ ४५ ॥ ज० म०

सतां विघातैकरसैरविक्षत् सदः परिक्षोभितभूमिभागम् ॥ ४५ ॥

विष्टतनिशितशस्त्रैस्तद्युतं यातुधानै-

रुरुजठरमुखीभिः संकुलं राक्षसीभिः।

श्वगणिशतविकीर्णं वागुरावन् मृगीभि-

र्वनमिव सभयाभिर्देववन्दीभिरासीत् ॥ ४६ ॥

---

मायाविभिरित्यादि। दशास्यः सदः सभामविक्षत् प्रविष्टवान् दृशषोऽनिमिति सक् कीदृशः आप्तैरात्मीयैराक्षसैरुपेतः उपगतः सन् कीदृशैर्मायाविभिर्वञ्चकैर्जनानां त्रासकरैः अतिरौद्रत्वात् उपादानपरैः स्वात्मार्थसम्पादनपरैः सतां साधूनां विघातमात्रेच्छुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चलितो भूमिभागो यत्र ॥ ४५ ॥ भ०

विष्टतेत्यादि। तत्सदो यातुधानैः विष्टतनिशितशस्त्रैः गृहीतशस्त्रैर्युतं युक्तमासीत् तथा राक्षसीभिः उरुजठरमुखीभिः सङ्कुलं व्याप्तं यथा वनं वागुरावत् सवागुरं श्वगणिकशतकीर्णं आखेटकशतच्छन्नं मृगीभिः सभयाभिः श्वगणिकेभ्यो जातभयाभिः व्याप्तमासीत् श्वगणा विद्यन्ते येषामिति श्वगणिका अत इति ठक् ॥ ४६ ॥ ज० म०

विष्टतेत्यादि। तत्सदो वनमिवासीत् कीदृशं सदः विष्टततीक्ष्णशस्त्रैर्यातुधानैराक्षसैर्युक्तं तथा राक्षसीभिः सङ्कुलं व्याप्तं कीदृशीभिः उरु महत् जठरमुदरं मुखञ्च यासां ताभिः तदा देववन्दीभिर्हठात् हृतदेवस्त्रीभिः संकुलमिति सम्बन्धः श्वगणिशतविकीर्णमाखेटकशतच्छन्नं वागुरावागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः संकुलं सभयाभिर्भययुक्ताभिरिति मृगीणां देववन्दीनाञ्च विशेषणं तत्सदोऽपि कुक्कुरधारिभिर्युक्तं तथा रज्जुबद्धमृगीभिर्युक्तं वनमपि राक्षसैः राक्षसीभिश्च युक्तं शुनां गणो विद्यते येषां ते श्वगणिन आखेटिका ॥ ४६ ॥ भ०

जलद इत्यादि। प्राज्यानां प्रभूतानां रत्नानां मणीनां प्रभाभिः तडित्वानिव जलदः प्रोन्नतात्मा सर्वेषामुपरि स्थितत्वात् प्रतिककुभं दिशि

जलद इव तडित्वान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन्निस्वनं धीरमन्द्रम्।
शिखरमिव सुमेरोरासनं हैममुच्चै-
र्विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत्॥ ४७॥

इति भट्टिकाव्ये एकादशः सर्गः।

---

दिशि धीरमन्द्रं मन्द्रगम्भीरं निस्वनं उदस्यन्निक्षिपन् सुमेरोः शिखरमिव हैममासनमुच्चैरुच्चं विविधमणिविचित्रं नानारूपैर्मणिभिर्विचित्रं नानावर्णकमध्यतिष्ठत् समारोहति स्म॥ ४७॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रसन्नकाण्डे माधुर्यप्रदर्शनो नाम द्वितीयोऽध्यायः।

काव्यस्य प्रभातवर्णनो नामैकादशः सर्गः।

जलद इत्यादि। स रावणः सुमेरोः शिखरमिवोच्चैरुच्चं हैमं हिरण्मयमासनमध्यतिष्ठत् किं कुर्वन् विद्युद्युक्तो मेघ इव प्रतिककुभं दिशि दिशि धीरमन्द्रं गभीरतारं निस्वनं ध्वनिमुदस्यन् क्षिपन् प्रोन्नतः सर्वेषामुपरि स्थितः उन्नताकारो वा प्राज्यानां प्रभूतानां रत्नानां प्रभाभिरुपलक्षितः प्राज्यरत्नप्रभाभिः करणभूताभिस्तडित्वान् जलद इव इति वा आसनं कीदृशं विविधैर्नानावर्णैर्मणिभिर्विचित्रं सुमेरुशिखरमप्येवं प्रोन्नतमिति पाठे उच्चैरिति रावणविशेषणं प्रतिककुभमिति ह्यपनदीति मध्ये अप्रत्ययः तडित्वानिति तद्वत्साहित्यमात्रमत्र विवक्षितमुपमेये प्राज्यरत्नप्रभासाहित्यादतो नात्र पौनरुक्त्यम्॥ ४७॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लोकात्मजश्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रसन्नकाण्डे गुणदर्शनं नाम द्वितीयः परिच्छेदः।

काव्यस्य प्रभातवर्णनं नामैकादशः सर्गः।

---

# द्वादशः सर्गः ।

ततो विनिद्रं कृतदेवतार्च्चं दृष्ट्यैव चित्तप्रशमं किरन्तम् ।
आविष्कृताङ्गप्रतिकर्म्मरम्यं विभीषणं वाचमुवाच माता ॥ १ ॥

---

भाविकत्वमलङ्कारः प्रबन्धं विषय उक्तः नैकदेशिकं तस्य चित्रादयो-ऽर्थाः प्रवृत्तिहेतवः तथाचोक्तम्

भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्रार्थाभूतभाविनः ॥
चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता ।
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते ॥

इति तत्सर्वं मन्त्रनिर्णयप्रबन्धे द्रष्टव्यमिति दर्शयन्नाह

तत इत्यादि । ततः प्रभातकालानन्तरं विभीषणं विनिद्रं प्रबुद्धं कृतदेवतार्च्चं कृतेष्टदेवतापूजनं दृष्ट्यैव स्निग्धया कायव्यापारेण चित्त-प्रशमं किरन्तं प्रकाशयन्तं आविष्कृतं प्रदर्शितं यदङ्गस्य प्रतिकर्म प्रसाधनं तेन रम्यं माता नैकषी नाम वाचं वक्ष्यमाणामुवाच ॥ १ ॥ ज० म०

भाविकनामा गुणः प्रबन्धविषय एव नतु श्लेषादिवदेकदेशविषयोऽपि तदुक्तं दण्डिना

तं भाविकमिति प्राहुः प्रबन्धविषयं गुणम् ।
भावः कवेरभिप्राय काव्येष्वासोद्ध्यवस्थित. ॥
परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।
विशेषणानां व्यर्थानामक्रियास्थानवर्णना ॥
व्यक्तिरुक्तिक्रमवशाद्गम्भीरस्यापि वस्तुनः
भावयितुमिदं सर्वमिति तं भाविक विदु. ॥

प्रबाधमानस्य जगन्ति धीमंस्त्व सोदरस्यातिमदोद्धतस्य ।
आनन्दनो नाकसदां प्रशान्तिं तूर्णं विषस्यामृतवत् कुरुष्व ॥ २ ॥

---

इति कण्ठाभरणे तु भावतो वाक्प्रवृत्तिर्या भाविकं तदुदाहृतमिति शब्दगुणः ।

साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते इत्यर्थगुणः इति अन्यत्रापि

भाविकत्वमलङ्कारप्रबन्धविषयो गुणः ।
प्रत्यक्षा इव दृश्यन्ते पदार्था भूतभाविनः ॥
चित्रोदात्ताद्भुतार्थत्व कथाया अतिशीलता ।
शब्दानां कौशलञ्चापि तस्य हेतुः प्रचक्षते ॥

इति स एवाधुना प्रदर्श्यते

तत इत्यादि । ततः प्रातःकालादनन्तरं माता नैकषी वक्ष्यमाणां वाचं विभीषण उवाच कथितवती कीदृशं विगतनिद्रं विहितदेवार्चनं दृष्टिमात्रेण चित्तस्थितां प्रशान्तिं किरन्तं प्रकाशयन्तं शान्तमूर्त्तित्वात् आविष्कृतेन प्रकाशितेनाङ्गप्रतिकर्मणा शरीरस्य धनेन रम्यमेतेन सर्वतो-ज्ज्वल्यमुक्तं सेतुकखपफेवेति अस्य वाशब्दस्य व्यवस्थावाचित्वादत्र नित्य वेः सकारः तस्य निष्पतन्त्य इति वत् मूर्द्धन्यत्व दुर्निरा विर्वहिःप्रादुश्चतुरां षः कखपफे इति परस्त्वत्र उवाचेत्यादिप्रयोगे वाचमित्यादिप्रयोगो व्यर्थ-त्वेऽपि न दुष्यति यदुक्तं कण्ठाभरणे

यदप्रयोजकं यच्च गतार्थं व्यर्थमेव वा ।
तस्यापि क्वापि निर्दोष. प्रयोगो दृश्यते यथेति ॥ १ ॥ भ०

प्रबाधमानस्येत्यादि । हे धीमन् ! त्वं नाकसदां देवानां आनन्दनः प्रमोदयिता सन् सोदरस्य भ्रातुर्दशाननस्य गर्भावस्थायां समानमुदर यस्येति योगविभागात्सभावः अतिबलोद्धतस्य महता सामर्थ्येन दृप्तस्य जगन्ति लोकं प्रबाधमानस्य पीडयतः प्रशान्तिं प्रशमनं तूर्णं कुरुष्व अमृतवत् यथा अमृत देवानामानन्दनं विषस्य कालकूटनाम्नः सोदरस्य एतस्मिन् समुद्रो-दरे स्थितत्वात् जगन्ति प्रबाधमानस्य प्रशान्तिं कृतवदिति ॥ २ ॥ ज० म०

कुर्य्यास्तथा येन जहाति सीतां विषादनीहारपरीतमूर्त्तिम् ।
स्थितां क्षितौ शान्तशिखाप्रतानां तारामिव त्रासकरीं जनस्य॥ ३
यावन्न संत्रासितदेवसङ्घः पिण्डो विषस्येश हरेण भीष्मः ।

---

किमुवाचेत्याह

प्रबाधमानस्येत्यादि । हे धीमन् ! प्रशस्तबुद्धियुक्त ! त्वं अमृतवदमृतमिव विषस्य कालकूटस्य इव सोदरस्य रावणस्य प्रशान्तिं तूर्णं शीघ्रं कुरुष्व कीदृशस्य सोदरस्य जगन्ति लोकत्रयं प्रबाधमानस्य पीडयतः अतिबलेन महासामर्थ्येन उद्धतस्य तीव्रस्य विषमपि मथनकाले जगन्ति प्रबाधमानं स्वोजसा उद्धतञ्च कीदृश. नाकसदां देवानामानन्दनः प्रमोदयिता अमृतमपि देवानामानन्दकं एकस्मिन् समुद्रोदरे स्थितत्वात् विषामृतयोरपि सोदरत्वं समानमुदरं यस्येति सोदरः समानार्थस्य सहशब्दस्य सहःसोवेत्यनेन पक्षे सादेश. एवं यत्र भ्राता सहोदर इत्यपि स्यात् रूपनामगोत्रेत्यादौ उदर्य्यशब्देनोदरशब्दोऽपि गृह्यत इति केचित् समानस्य सभावो लोकोपचारादित्यन्ये ॥ २ ॥ म०

कुर्य्या इत्यादि । तथाप्रकारमनुतिष्ठेस्त्वं येन सीतां जहाति विषादनीहारपरीतमूर्त्तिं विषादो नीहार इव तेन परिगतदेहां क्षितौ स्थितां निमग्नां शान्तशिखाप्रतानां अनुज्ज्वलवेणीवल्लीं जनस्य त्रासकरीं भयहेतुभूतां हेतौ टः तारामिव यथा काचित्तारा क्षितौ स्थिता पतिता नीहारपरीतमूर्त्तिः शान्तशिखाप्रताना ध्वस्तरश्मिजाला लोकत्रासकरी तद्वत्तामिति ॥ ३ ॥ ज० म०

कुर्य्या इत्यादि । त्वं तथा तं प्रकारं कुर्य्याः यथा येन प्रकारेण स सीतां जहाति त्यजति जनस्य त्रासकरीं त्रासहेतुमुत्पाततारामिव प्रकरणात् राक्षसस्य त्रासं करिष्यतीति भावः विषादो नीहार इव तेन परिगतमूर्त्तिं क्षितौ स्थितां भूमिशयनात् नक्षत्रस्यापि भूमौ पाते उत्पातः सिद्धः यद्वा तारा पक्षे क्षितौ क्षयनिमित्तं स्थितामित्यर्थः शान्तशिखाप्रतानां ध्वस्तकेशप्रतानां केशोल्लुञ्चनात् तारापक्षे ध्वस्तकिरणजालाम् ॥३॥ म०

यावदित्यादि । यथा सन्त्रासितदेवसङ्घः विषस्य कालकूटस्य पिण्डो

संग्रस्यतेऽसौ पुरुषाधिपेन द्रुतं कुलानन्द ! यतस्व तावत् ॥४॥
हता जनस्थानसदो निकायाः क्षता जितोत्खातभटद्रुमा पूः ।
सरांसि दग्धानि विधेयमस्मिन् यद्बन्धुना तद्घटयस्व तस्मिन् ॥५

---

भीष्मोऽतिरौद्रो हरेण संग्रस्तः पीतः तद्वद्यावदसौ रावणः पुरुषाधिपेन रामेण न संग्रस्यते न विनश्यते तावत् हे कुलानन्द कुलानि आनन्दयतीति कर्मण्यण् द्रुतं यतस्व सीतात्याजनायां यत्नं कुरु ॥ ४ ॥ ज० म०

यावदित्यादि । हे कुलानन्द ! यावत्पुरुषाधिपेन रामेणासौ रावणो न संग्रस्यते न हन्यते यथा हरेण महादेवेन विषस्य कालकूटस्य पिण्डो ग्रस्तः तावत्त्वं द्रुतं यतस्व यत्नं कुरु सीतात्यजनायेत्यर्थात् कीदृशो रावणो विषपिण्डश्च सन्त्रासितो देवगणो येन स तथा भीष्मो भयजनकः अतिरौद्र इत्यर्थः कुलमानन्दयतीति कुलानन्दः ढातृषश्चिति षण् कुलस्यानन्दो यस्मादिति वा ॥ ४ ॥ भ०

हता इत्यादि । जनस्थानसदो दण्डकारण्यवासिनः निकायाः खरदूषणादीनां सङ्घा हताः सङ्घेचानौत्तराधर्य्ये इति चिनोतेः घञ् ककारश्चादेशः पूश्च लङ्का जितभटा उत्खातद्रुमा क्षता सरांसि गृहाणि दग्धानि इति सर्व्वमेतत्त्वया ज्ञातमेव अनेन प्रकारेण अस्माकमपि विनाशः स्यात् तदेतस्मिन्वस्तुनि यद्बन्धुना विधेयं अनुष्ठेयं तद्विधातुं घटयस्व यतस्व तस्मिन्वस्तुनि ॥ ५ ॥ ज० म०

हता इत्यादि । जनस्थानसदो दण्डकारण्यवासिनो निकायाः खरदूषणादीनां समूहाः हता मारिताः सदेधावोदेत्यादिना निपूर्व्वचिञोघञि समूहार्थे निकायो निपातितः पूर्लङ्का जितभटा उन्मूलितवृक्षा च क्षता सरांसि गृहाणि दग्धानि एवमपरस्यापि विनाशः स्यात् तस्मादेतस्मिन् वस्तुनि बन्धुना यद्विधेयं विधातुं योग्यं तत् घटयस्व रक्ष तस्मिन् वस्तुनि रावणविषये वा ॥ ५ ॥ भ०

चिकीर्षिते पूर्व्वतरं स तस्मिन् क्षेमङ्करेऽर्थे मुहुरीर्य्यमाणः।
मात्रातिमात्रं शुभयैव बुद्ध्या चिरं सुधीरभ्यधिकं समाधात् ॥६॥
दौवारिकाभ्याहृतशक्रदूतं सोपायनोपस्थितलोकपालम्।
साशङ्कभीष्माप्रविशन्निशाटं द्वारं ययौ रावणमन्दिरस्य ॥ ७ ॥

---

चिकीर्षित इत्यादि। तस्मिन् सीताप्रत्यर्पणलक्षणेऽर्थे मातृरुप-देशात् पूर्वतर पूर्वमेव चिकीर्षिते कर्त्तुमीप्सिते मात्रा शुभयैव बुद्ध्या कल्याणया अतिमात्रमत्यर्थं मुहुः क्षणमीर्य्यमाणः प्रवर्त्तमानः स विभीषणः सुधीः प्राज्ञः चिरकालमभ्यधिकं समाधात् चिन्तितवान् इदमतिन्याय्यमिति गातिस्थेति सिचो लुक् इयता प्रबन्धेन उदात्तार्थाभिधान इदात्तार्थत्वमुक्तं इत उत्तरं प्रहस्तरावणविभीषणमातामहकुम्भकर्णादीनां वचनप्रबन्धेषु चित्राद्भुतार्थत्वं द्रष्टव्यं स्वविनीतता सुबोधता शब्दानाकुलता चेत्येतदुभय कथायामेव मन्त्रनिर्णयाख्यायां द्रष्टव्यम् ॥ ६ ॥ ज० म०

चिकीर्षिते इत्यादि। तस्मिन् सीताप्रत्यर्पणरूपेऽर्थे पूर्वतरं मातुरुपदेशात् पूर्वमेव स्वय चिकीर्षिते कर्त्तुमिष्टे यत. क्षेमङ्करे शुभदायके मात्रापि शुभया शोभनयैव बुद्ध्या अतिमात्रमत्यर्थं मुहुः पुनः पुनः प्रेर्यमाण सुधीः प्राज्ञः स विभीषणश्चिरमभ्यधिकं समाधात् न्याय्यमेवैतदिति चिन्तितवान् भूस्थापिवेति दासंज्ञकात् सेर्लुक् इतया प्रबन्धेन उदात्तार्थत्वमुक्तं इत उत्तरं रावणविभीषणप्रहस्तादीनां वचनप्रबन्धेन चित्राद्भुतार्थत्व द्रष्टव्यं अतिशीलता शब्दानां कुशलताचेत्येतदुभय मन्त्रनिर्णयकथायां द्रष्टव्यम् ॥ ६ ॥ भ०

दौवारिकेत्यादि। स विभीषणः रावणमन्दिरस्य द्वारं ययौ दौवारिकाः द्वारे नियुक्ताः द्वारादीनामित्यौव् तैरभ्याहृताः शक्रदूता यस्मिन् द्वारे सोपायनाः गृहीतकौशलिकाः उपस्थिता औपढौकिता लोकपाला यत्र साशङ्काः सभयाः भीष्मा भयानकाः अप्रा विशन्तो निशाटा यत्रेति तदिति ॥ ७ ॥ ज० म०

दौवारिकेत्यादि। विभीषणो रावणमन्दिरस्य द्वारं ययौ कीदृशं

दूरात् प्रतीहारनतः स वार्त्तां पृच्छन्ननावेदितसंप्रविष्टः ।
सगौरवं दत्तपथो निशाटैरैक्षिष्ट शैलाग्रमिवेन्द्रशत्रुम् ॥ ८ ॥
कृशानुवर्ण्यध्यधिरूढमुच्चैः सिंहासने संक्षयमेघभीमम् ।
निसर्गतीक्ष्णं नयनस्फुलिङ्गं युगान्तवह्नेरिव धूमराशिम् ॥ ९॥

---

द्वारं दौवारिकैर्द्वारपालैरभ्याहता निवारिताः शक्रदूता यस्मिन् सोपायनाः सोपहाराः सन्तः उपस्थिता लोकपाला यत्र साशङ्का. सभयाः सन्तो भीष्मा भयजनका अ प्ता आत्मीया विशन्तो निशाटा राक्षसा यत्र् तेन परेष्वात्मीयेष्वपि तस्य धृष्टत्वं दर्शितं द्वारि नियुक्तो दौवारिकः ठगेकादिति ष्णिकः द्वारस्वरेति उन णिक्ते व्रिरिति वृद्धिः ॥ ७ ॥ भ०

दूरादित्यादि। स विभीषणः दूरादेव प्रतीहारेण नतः स्वामिनीव तत्र गौरवात् वार्त्तां पृच्छन् कुशली महाराज इति विभीषणो द्वारि तिष्ठतीति राज्ञे अनावेदित एव सम्प्रविष्टो निशाटैः सगौरवञ्च सविनयं दत्तपथो दत्तमार्गः इन्द्रशत्रुं रावणमैक्षिष्ट दृष्टवान् शैलाग्रमिव सिंहासनारूढस्य तस्योच्चत्वात् ॥ ८ ॥ ज० म०

दूरादित्यादि। दूरादेव प्रतीहारेण द्वारपालेन नतो नमस्कृतः राजा कुत्र तिष्ठति किं वा करोतीति वार्त्तां पृच्छन् विभीषणो द्वारि तिष्ठतीति राज्ञोऽनावेदित एव सम्प्रविष्टः निशाटै राक्षसैः सगौरवं यथा स्यात्तथा दत्तः पन्था यस्य स विभीषण इन्द्रशत्रुं रावणं ऐक्षिष्ट दृष्टवान् शैलाग्रमिव पर्वतशिखरमिव सिंहासनस्थत्वात् गुरोर्भावो गौरवं विकारसङ्घेति ष्णः ॥ ८ ॥ भ०

कृशानुवर्ण्यीत्यादि। सिंहासने उच्चैस्तुङ्गे कृशानुवर्ण्यि अग्नितुल्ये अधिरूढं उपविष्टं सङ्क्षयमेघवद्भीमं अतिभयङ्करं निसर्गतीक्ष्णं स्वभावरौद्रं नयनानि स्फुलिङ्गा इव यस्य तमैक्षिष्ट युगान्तवह्नेरिव धूमराशिं अग्नितुल्यसिंहासने उपरि स्थितत्वात् सोऽपि सङ्क्षयमेघवद्भीमः स्वभावतः कटुकत्वात् स्वभावतीक्ष्णः नयनानि विस्फुलिङ्गा यत्रेति ॥ ९ ॥ज० म०

प्रीत्यापि दत्तेक्षणसन्निपातं भयंभुजङ्गाधिपवद्दधानम् ।
तमः समूहाकृतिमप्यशेषानूर्ज्जा जयन्तं प्रथितप्रकाशान् ॥ १० ॥
न रत्नदायं जितमृत्युलोका रात्रिञ्चराः कान्तिभृतोऽन्वसर्पन् ।

---

कृशान्वित्यादि। कीदृश रावणमैचिष्ट कृशानुवर्ष्मणि अग्न्याकारे अग्निसुन्दरे वा उद्दीप्तत्वादुच्चैस्तुङ्गे सिंहासनेऽधिरूढ वर्ष्म देहे प्रमाणे च सुन्दराकारयोरपीति विश्वः प्रलयकालीनमेघवङ्गीममतिकृष्णत्वात् निसर्गेण स्वभावेन तीक्ष्ण रौद्रं नयनानि स्फुलिङ्गा अग्निकणा इव यत्र युगान्तवह्नेः प्रलयकालीनवह्नेर्धूमराशिमिव अग्नितुल्यसिंहासनस्थत्वात् धूमोऽपि मेघतुल्यः कटुत्वात्तीक्ष्णः स्फुलिङ्गवांश्च भवति ॥ ९ ॥ भ०

प्रीत्येत्यादि। यथा भुजङ्गाधिपः शेषः प्रीत्या स्नेहेन दत्तेक्षण-सन्निपातः समर्पितनेत्रनिवहो भयमादधाति तद्वद्भयमादधानं तमःसमूह-स्येवाकृतिर्यस्य तमपि प्रथितप्रकाशानशेषानर्कादीन् ऊर्जा बलेन जयन्त-मैचिष्ट ऊर्जेति भ्राजभासेत्यादिना क्विप् ॥ १० ॥ ज० म०

प्रीत्येत्यादि। पुनः कीदृशं भुजङ्गाधिप. शेष. प्रीत्यापि दत्ते-क्षणसन्निपातः समर्पितनेत्रसमूहः सन् यथा भय जनयति तथा भयं दधानं तमःसमूहस्य राहुबन्दस्येव अन्धकारचयस्येव वा आकृतिर्यस्य तथाभूतमपि ऊर्ज्जा बलेनाप्यशेषान् प्रसिद्धप्रकाशान् सूर्यादीन् जय-न्तमभिभवन्तं ऊर्ज्ज बलप्राणधारणयोः तासुमिति भावे क्विप् तमोऽन्ध-कारे स्वर्भानौ तमः क्लेशे गुणान्तरे इति विश्व. ॥ १० ॥ म०

न रत्नदायमित्यादि। यथा देवमुख्याः अमरात्याज्जितमृत्युलोकाः कान्तिभृतो दीप्तिधराः सञ्जाततृष्णाः सन्तः प्रमुक्तमुक्ताफलमम्बु वाह-मुपसर्पन्ति तद्वत्तं विभीषणं रत्नदाय रत्नं दास्यतीति अण् कर्म्मणि चेति भविष्यत्काले क्रियायां क्रियार्थायामित्यण् तत्र एककर्तृके भिन्नकर्तृके वेति विशेषाभावात् अथवा दयदानगत्योरित्यस्मात्कर्मण्यण् रत्न दयते ददातीति कृत्वा रात्रिञ्चरा भग्नयम लोकाः अन्वसर्पन् ॥ ११ ॥ ज० म०

प्रयुक्तमुक्ताफलमम्बुवाहं सञ्जाततृष्णा इव देवमुख्याः ॥ ११ ॥
स किङ्करैः कल्पितमिङ्गितज्ञैः सम्बाधकं पूर्व्वसमागतानाम्।
सिंहासनोपाश्रितचारुबाहुरध्यास्त पीठं विहितप्रणामः ॥ १२ ॥
ततो दशास्यः क्षुभिताहिकल्पं दीप्राङ्गुलीयोपलमूढरत्नम्।

---

तमित्यादि। रात्रिञ्चराः सञ्जाताभिलाषाः सन्तो रत्नदाय तं विभीषणमन्वसर्पन् अनुगतवन्तः यथा देवमुख्या देवश्रेष्ठा जितमर्त्य-लोकाः कान्तिभृतः सञ्जाततृष्णाः सन्तः शुक्तिषु तोयप्रक्षेपेण प्रयुक्तमु-क्ताफलं मेघमनुसर्पन्ति तद्वत् कीदृशा रात्रिञ्चराः जितमर्त्यलोकाः अभि-भूतयमलोकाः कान्तिं बिभ्रतीति क्विप् कान्तिभृतः तेजस्विनः देवमुख्याः अपि अमरत्वात् जितमर्त्यलोकाः कान्तिभृतश्च रत्नादायमिति रत्न दास्यतीति भविष्यत्काले दातुर्यन्निति यणतस्य कालविशेषानुक्तेस्त्रिषु कालेषु भवति अन्यकालेऽपि न क्षतिः यत्नुद्यिदिति यत् दयदाने इत्यस्य रूपं वा यद्वा श्वससव्यधेत्यादिना णः ततः षष्ठीसमासः ॥ ११ ॥ भ०

स किमित्यादि। स विभीषणः विहितप्रणामः कृतप्रणतिः पी-ठमध्यास्त निषसवान् किङ्करैर्भृत्यैरिङ्गितज्ञैरभिप्रायवेदिभिः कल्पित-मुपनीतं पूर्व्वसमागतानां प्रथमप्रविष्टानां सम्बाधकं सङ्कटकृत् सम्बाधत इति णत् रावणस्य सिंहासने उपाश्रितः स्थितः चारुर्बाहुर्यस्य विभी-षणस्येति सः ॥ १२ ॥ ज० म०

स किङ्करैरित्यादि। स विभीषणो विहितप्रणामः कृतभक्त्यतिशय-व्यञ्जकनतिः सन् पीठमध्यास्त अधिरूढवान् किम्भूतमासनमिङ्गितज्ञैरा-वणाशयवेदिभिः किङ्करैर्भृत्यैः कल्पितमुपनीतं पूर्व्वसमागतानां प्रथमोप-विष्टानां अन्येषां मन्त्रिणां सम्बाधकं सङ्कोचकारकं तेषां स्थाने अस्य पीठस्थार्पणात् स कीदृशः रावणसिंहासने उपाश्रितः स्थितश्चारुर्बाहु-र्यस्य ॥ १२ ॥ भ०

तत इत्यादि। विभीषणनिवेदनादुत्तरकालं दशास्यः पाणिं क्षुभि-ताहिकल्पं क्रुद्धविस्तृतफणेन सर्पेण तुल्यं दीप्रो दीपनशीलोऽङ्गुलीयोप-

अनेकचञ्चन्नखकान्तिजिह्वं प्रसार्य्य पाणिं समितिं बभाषे ॥ १३ ॥
शक्तैः सुहृद्भिः परिदृष्टकार्य्यैराम्नातिभिर्नीतिषु बुद्धिमद्भिः।
युष्मद्विधैः सार्द्धमुपायविद्भिः सिध्यन्ति कार्य्याणि सुमन्त्रितानि॥१४

---

लोऽङ्गुलीयरत्नं यतः तत एव गूढरत्नं अनेकाश्चञ्चन्त्यश्चलन्त्यो नखकान्तयो जिह्वा इव यस्य त प्रसार्य्य समितिं राक्षससमूहम्बभाषे ॥ १३ ॥ ज० म०

तत इत्यादि। विभीषणोपवेशनादनन्तरं दशास्यः पाणिं प्रसार्य्य समितिं राक्षसानां सभां वक्ष्यमाणप्रकारेण बभाषे उवाच कीदृशं पाणिं क्षुभिताहिकल्पं क्रुद्धविस्तृतफणसर्पतुल्यं दीप्तो दीपनशीलोऽङ्गुरीयोपलो मुद्रिकारत्नं यत्र अतएवोढरत्नं अनेन सर्पसादृश्यं सूचितं अनेकाश्चञ्चन्त्यश्चपला नखकान्तयो जिह्वा इव यस्य॥ १३ ॥ भ०

शक्तैरित्यादि। समर्थ्यैः सुहृद्भिर्मित्रैः परिदृष्टकार्य्यैः मा भूददृष्टकर्मणां कर्मसु विषाद इति आम्नातिभिः अभ्यस्तनीतिशास्त्रैरित्यर्थः इष्टादिभ्यश्चेति इनि क्तस्येन्विषयेति कर्मणि सप्तमी बुद्धिमद्भिः ज्ञानवद्भिःउपायविद्भिः सामादिकुशलैरित्यर्थः युष्मद्विधैः सह कार्य्याणि सुमन्त्रितानि सिध्यन्ति ॥ १४ ॥ ज० म०

शक्तैरित्यादि। मन्त्रिणां प्रोत्साहनार्थमिदमुच्यते युष्मद्विधैर्भवादृशैः सह सुमन्त्रितानि कार्य्याणि सिध्यन्ति सिद्धिं गच्छन्ति तत्र हेतुमाह शक्तैः समर्थैः न केवलं युष्माभिर्मन्त्रणा दीयते मन्त्रणां दत्वा तन्निर्स्रीतकर्त्तव्यत्वमपि क्रियत इति भावः स्वयमसमर्थोहि न स्वामिनो युद्धाद्यर्थं मन्त्रणां ददातीति वा सुहृद्भिर्मित्रैः न तु शक्तत्वेनाहङ्कारः नतु वा कुमन्त्रणा दीयत इति भावः परिदृष्टकार्य्यैरदृष्टकर्म्माणोहि शास्त्रविदोऽपि मुह्यन्ति नीतिषु आम्नातिभिरभ्यस्तनीतिशास्त्रैः न केवल दर्शनादेव कार्य्यज्ञानं क्तेनाढे इति कर्मणि सप्तमी विषयविवक्षयेत्यन्ये बुद्धिमद्भिः ऊहापोहक्षमैः न शुकादिवत् अधीतवक्तृत्वं उपायविद्भिः सामदानादिकुशलैः

उपेक्षिते वालिखरादिनाशे दग्धे पुरेऽक्षे निहते सभृत्ये।
सैन्ये द्विषां सागरमुत्तितीर्षावनन्तरं ब्रूत यदत्र युक्तम्॥ १५॥
भुजांसवक्षः स्थलकार्मुकासीन् गदाश्च शूलानि च यातुधानाः।
परामृशन्तः प्रथिताभिमानाः प्रोचुः प्रहस्तप्रमुखा दशास्यम्॥१६॥

---

उपायाज्ञानात्। बुद्धिमन्तोऽपि मुह्यन्ति परिकरालङ्कारोऽयं विशेषणै-र्यत्साकूतैरुक्तिः परिकरस्तु सः॥ १४॥ भ०

उपेक्षित इत्यादि। वालिखरादिनाशेषूपेक्षितेषु द्विषाञ्च सैन्ये सागरमुत्तितीर्षावुत्तरितुमेषणशीले अनन्तरमिदानीं ब्रूत वदत यदत्र युक्तमिति उत्तितीर्षाविति इकोर्चिम् विभक्ताविति नुन भवति तृतीया-दिषु भाषितपुंस्कमिति पुम्वद्भावः॥ १५॥ ज० म०

उपेक्षित इत्यादि। वालिनः खरादेश्च नाशे उपेक्षिते सति पुरे लङ्कायां दग्धे सति भृत्यैः सह अक्षनाम्नि कुमारे हते सति शत्रुणां सैन्ये समुद्रमुत्तितीर्षौ उत्तरितुमिच्छौ सति अनन्तरमिदानीं यूयं ब्रूत अत्र यद्युक्तमिति बभाषे इति पूर्वेणान्वयः उत्तितीर्षाविति सन्नाशंस-इद्रुरिति पक्षेऽनिम् पुम्वद्भावोक्तपुंस्कमिति पक्षे पुम्वद्भावात् नुचिक इति न नुन्॥ १५॥

भुजांसेत्यादि। यदि वयं शत्रून् न व्यापादयामस्तदा किमेतैर्भु-जादिभिर्दृढैरिति प्रथिताभिमानाः प्रकाशिताहङ्कारा भुजादीन् परामृ-शन्तः प्रहस्तप्रमुखा यातुधाना दशास्यं प्रोचुर्वक्ष्यमाणं वचपरिभा-षणे लिट् उस्॥ १६॥ ज० म०

भुजामित्यादि। प्रहस्तप्रभृतयो यातुधाना दशास्यं वक्ष्यमाणं प्रोचुः किङ्कुर्वन्तः बाहून् स्कन्धान् वक्षःस्थलानि धनूंषि खड्गान् गदाः शूलानि च परामृशन्तः स्पृशन्तः प्रथिताभिमानाः प्रकाशिताह-ङ्काराः॥ १६॥ भ०

अखण्डमानं परिखण्ड्य शक्रं त्वं पण्डितम्मन्यमुदीर्णदण्डः।
नराभियोगं नृभुजां प्रधान! मन्त्रोन्मुखः किं नयसे गुरुत्वम्॥१७॥
निर्यत्स्फुलिङ्गाकुलधूमराशिं ब्रूहि भूमौ पिनषाम भानुम्।

अखण्ड्यमानमित्यादि। शक्रमखण्ड्यमानं अनभिभवनीयाहङ्कारं अतश्च पण्डितम्मन्यं पण्डितमात्मानं मन्यमानं नान्यः पण्डितोऽस्तीति तादृशं परिखण्ड्य जित्वा त्वं नृभुजां राक्षसानां प्रधान! उदीर्णदण्डः अभ्यर्चितबलः सन् किमर्थं मन्त्रोन्मुखो मन्त्रप्रवणः नराभियोगं गुरुत्वं नयसे प्रापयसि सुमन्त्रितानि कार्य्याणि सिध्यन्तीति अत्र कर्त्तृगुणाभियोगेन क्रियाफलेन योगादात्मनेपदम्॥१७॥ जं० म०

किं प्रोचुरित्याह

अखण्डेत्यादि। हे नृभुजां राक्षसानां प्रधान! अखण्ड्यमानं परैरनभिभवनीयमात्मानं पण्डितं मन्यमानं नान्यः पण्डितोऽस्तीति साहङ्कारं शक्रमपि परिखण्ड्य जित्वा त्वं उदीर्णदण्डो महाबलोऽपि सुमन्त्रोन्मुखः सन् मन्त्रणां कुर्व्वन् नरस्याभियोगं युद्धं गुरुत्वं कथं नयसे प्रापयसि अनन्तरं ब्रूत यदत्र युक्तमिति वचनेऽत्र गौरवप्रसङ्गात् मन्यात् स्वार्थे इति खग्‌दण्डो यमे मानभेदे लगुडे दमसैन्ययोः। व्यूहभेदे प्रकाण्डेऽपि कोषस्याश्वयोरपि स्तनः। अभिमानाग्रहे दण्डखण्डांशोः पारिपार्श्विके इति। प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायाञ्च प्रधानं स्यादेकत्वे च सदैव तु इति च विश्वः। प्रधाना हरितांजगा इति प्रयोगात् पुंलिङ्गोऽपि प्रधानशब्द इति श्रीपतिः॥१७॥ भ०

निर्य्यदित्यादि। ब्रूहि समादिश आस्तां तावन्नराभियोगः किं भानुं क्षितौ पिनषाम चूर्णयाम प्रश्ने लोट् रुधादिभ्यः श्नम्। निर्य्यता निर्गच्छता स्फुलिङ्गेनाकुलो धूमराशिर्यस्य तं भानुं वा इति विकल्पे वर्त्तते दन्तनिष्पीडितपीतं इन्दुं वा पूर्व्वं दन्तैर्निष्पीडितं पश्चात्पीतं छीवाम निरस्याम व्यौरुपधाया इति दीर्घः शुष्के नुयष्टेरस्यीव तत्सदृशम्॥१८॥ जं० म०

आदन्तनिष्पीडितपीतमिन्दुं ष्ठीवाम शुष्केक्षुलताखिकल्पम् ॥१८॥
सराघवैः किं बत वानरैस्तैर्यैः प्रातराशोऽपि न कस्यचिन्नः ।
सस्थाणुकैलासधराभिधत्स्व किं द्यौरधोऽस्तु क्षितिरन्तरीक्षे ॥१९॥

निर्यदित्यादि । आस्तां तावन्नराभियोगः ब्रूहि आदिश किं भूमौ भानुं पिनषाम चूर्णयाम धौपिषस्थचूर्णने विधिनिमन्त्रणेत्यादिना संप्रश्ने गौ कीदृशं भानुं निर्यता निर्गच्छता स्फुलिङ्गेनाकुलो धूमराशिर्यस्य आः किंवा इन्दुं ष्ठीवाम ष्ठिवुक्लमाचम इति दीर्घः भाद्यादिषु इत्यादौ ष्ठिव-वर्जनात् न दन्त्यसकारत्वं कीदृशमिन्दुं पूर्वं दन्तैर्निष्पीडितं पश्चात्पीतं सुधापानात् नीरसमिक्षुयष्टेर्यदस्थि दृढभागस्तत्तुल्यं आ इत्यव्ययं विकल्पे वर्त्तते इति जयमङ्गला आस्तु स्यात् कोपपीडयोरित्यमरः । आ सम्यक् दन्तैर्निष्पीडितमिति केचित् ॥ १८ ॥ भ०

सराघवैरित्यादि । सस्थाणुर्यः कैलासः तस्य धर इति सः धारयतीति धरः कर्त्तर्यच् हे सस्थाणुकैलासधर ! नोऽस्माकं मध्ये कस्यचिदेकस्य यैः सराघवैः प्रातराशोऽपि प्रातर्भोजनमपि न भवति तैः सराघवैर्वानरैः किं प्रयोजनं बतशब्दोऽनुशोचने अतोऽभिधत्स्व आदिश किं द्यौराकाशमधो-ऽस्तु भवतु क्षितिर्वा अन्तरीक्षे उपरिष्टादस्त्विति ॥ १९ ॥ व० भ०

सराघवैरित्यादि । हे सस्थाणुकैलासधर ! नोऽस्माकं मध्ये कस्यचिदे-कस्यापि यैर्वानरै राघवाभ्यां सहितैः प्रातराशः प्रातर्भोजनमपि न भवति तैः किङ्कर्त्तव्यमलागत्येति शेषः । बतेति खेदे आमन्त्रणे वा बतोऽभिधत्स्व आदिश किं द्यौराकाशं स्वर्गो वा अधो भवतु क्षितिरन्तरीक्षे उपरिष्टादस्तु तत्रैव कर्म्मणि सर्वे वयं भवद्भिर्नियोक्तुमुचिताः नत्वल्पकार्य्ये रामादि-बधे इति भावः । प्रलयेऽपि तिष्ठतीति स्थाणुः शिवः नाम्न्यन्ये इति सूत्रे-ण्यणुप्रत्ययः तेन सह वर्तमानं कैलासपर्व्वतं धरतीति पचादित्वादच् त्व-मद्भुतकर्म्मणि किं रामभिया मन्त्रणां करोषीति भावः । अन्तरीक्ष्यते जग-दस्मिन्निति अन्तरीक्षं छन्दसि ह्रस्वेकारमिति सर्वधरः शब्दभेदे त्वन्तरीक्ष-मिति द्वयक्षरम् ॥ १९ ॥ भ०

चापल्ययुक्तस्य हरेः कृशानुः समेधितो वालधिभाक् त्वदीयैः।
अस्त्रेण बध्यस्य गलन्नधाक्षीद्राजन् प्रमादेन निजेन लङ्काम् ॥२०॥
अथाञ्चितोरस्कमुदीर्णदृष्टिः कृत्वा विवक्षाप्रवणं शरीरम्।
विवृत्तपाणिर्विहितोत्तरार्थं विभीषणोऽभाषत यातुधानान् ॥२१॥

यत्पुरं दग्धं तद्युष्मत्प्रमादेनैव न शत्रुशक्त्येति दर्शयन्नाह

चापल्येत्यादि। चपलस्य भावश्चापल्यं ब्राह्मणादित्वात् ष्यञ् युवादिष्वपि दृश्यते तत्र चापलमिति रूपं तेन युक्तस्य हरेर्मर्कटस्य हे राजन्! शस्त्रेण बध्यस्य सतः यो बालधिः पुच्छं तद्भाक् समाश्रितः कृशानुस्त्वदीयैः भृत्यैः समेधितो वर्द्धितः तैलघृतादिभिर्गृहाद् गृहं गच्छतो गलन् पुच्छात्पतन् लङ्कामधाक्षीत् दग्धवान् एकाचोवशोभषित्यादिना भत्वं हलन्तलक्षणा वृद्धिः होढः षोढोः कः सि। निजेन आत्मीयेन प्रमादेन ज्वालादर्शितलक्षणेन तदानीं तस्य शस्त्रव्यापादनमेव युक्तमिति ॥ २० ॥ ज० म०

लङ्कादाहोऽप्यस्माकमनवधानादेव न तु शत्रुसामर्थ्यादिति सूचयितुमिदमुच्यते

चापल्येत्यादि। हे राजन्! तव निजेनात्मीयेन प्रमादेनानवधानेन कृशानुरग्निर्लङ्कामधाक्षीत् दग्धवान् कीदृशः कृशानुर्हरेर्मर्कटस्य बालधिभाक् पुच्छमाश्रितः त्वदीयैर्भृत्यैः स्वयमेधितस्तैलवस्त्रादिभिर्दीपितः गलन् हरेर्गृहाद्गृहान्तरगमनेन पतन् हरेः कीदृशस्य चापल्ययुक्तस्य चञ्चलतया युक्तस्य शस्त्रेण बध्यस्य बधार्हस्य चञ्चलस्य बध्यस्य बधमकृत्वा पुच्छे अग्निदानादेव एवं तव प्रमादः चपलस्य भावश्चापल्यं विकारसंघेति ष्यञ्ः दहेरनिट्त्वात् व्रजवदेत्यादिना वृद्धौ सौ त्रिः ॥ २० ॥ भ०

अथेत्यादि। प्रहस्तादिवचनानन्तरं अञ्चितोरस्कं विन्यस्तहारत्वात् पूजितोरस्कं उरः प्रभृतिभ्यः कप् अञ्चेः पूजायामितीट् नाञ्चेः पूजायामित्यनुनासिकलोपः प्रतिषेधः तादृशं शरीरं विवक्षाप्रवणं वक्तुमिच्छाभिमुखं कृत्वा शरीरस्य सौष्ठवं उत्पाद्येत्यर्थः उदीर्णदृष्टिस्तदभिमुखदृष्टिः विवृत्तपाणिस्तदभिमुखीकृतदक्षिणपाणिः विभीषणो यातुधानानभाषत विहितोत्तरार्थं विहितः प्रतिषिद्धः परैरुदितस्य वचनास्यार्थो यत्र भाषणे इति ॥२१॥ज०म०

युद्धाय राज्ञा सुभृतैर्भवद्भिः सम्भावनायाः सदृशं यदुक्तम् ।
तत्प्राणपण्यैर्वचनीयमेव प्रज्ञा तु मन्त्रेऽधिकृता न शौर्य्यम् ॥२२॥
यत्रापि यत्नादृतमन्त्रवृत्तिर्गुरुत्वमायाति नराभियोगः ।

अथेत्यादि । प्रहस्तादिवचनानन्तरं विभीषणो विहितोत्तरार्थं यथा स्यात्तथा यातुधानान् अभाषत वक्ष्यमाणप्रकारेणोक्तवान् किं कृत्वा शरीरं देहं विवक्षाप्रवणं वक्तुमिच्छया अभिमुखं कृत्वा शरीरसौष्ठवमुत्पाद्येत्यर्थः शरीरं कीदृशमञ्चितोरस्कं विन्यस्तहारत्वात् पूजितवक्षसं क्षुधवसपूजार्थाञ्च इति इम् नेदित् पूजार्थाञ्चोरिति नलोपाभावः यञ्चितं विस्तारितं उरो यस्येति उरन्तात् क इति केचित् पुंवत्स्त्र्युक्तपुंस्क इति ज्ञापकात् ऋतोऽन्यस्मादपि बहुव्रीहौ क्वचित्कः स्यादिति गम्यते तेनात्र कः स्वार्थे क इत्यन्ये उरःप्रभृतिभ्यो बहुव्रीहौ नित्यं क इति परस्तत्र विभीषणः कीदृशः उदीर्णदृष्टिः प्रहस्तादीनां अभिमुखं दत्तदृष्टिर्विष्टत्तपाणिः तदभिमुखीकृतदक्षिणपाणिः विहितः प्रतिषिद्ध उत्तरस्य प्रतिवाक्यस्यार्थो येन भाषणेन ॥२१॥भ०

युद्धायेत्यादि । युद्धार्थं राज्ञा भवन्त सुभृताः सम्वर्द्धिताः तैः सुभृतैर्यदुक्तं भानुं पिनषामेत्यादि कीदृशं सम्भावनायाः सदृशं तत्प्राणपण्यैर्वचनीयमेव मन्त्रे तु प्रज्ञाधिकृता न शौर्य्यम् ॥ २२ ॥ ज० म०

युद्धायेत्यादि । राज्ञा युद्धार्थमेव सुभृतैः परिपुष्टैर्भवद्भिः सम्भावनाया अध्यवसायस्य सदृशं योग्यं यदुक्तं पिनषाम भानुमित्यादिकं तद्वचनीयमेव वचनयोग्यमेव यतः प्राणाएव पण्या राजकृतेन भरणेन विक्रेया येषां तैः किन्त्विदं वचनं मन्त्रे नोपयुज्यते यतः प्रज्ञा बुद्धिर्मन्त्रेऽधिकृता न तु शौर्य्यम् ॥ २२ ॥ भ०

नराभियोगं किं नयसे गुरुत्वमित्यस्योत्तरमाह

यत्रेत्यादि । वशीकृतेन्द्रस्य निर्ज्जितशक्रस्य रावणस्य नराभियोगो यत्नादृतमन्त्रवृत्तिर्यत्नेनादृता मन्त्रवृत्तिर्यस्य सः तादृशो गुरुत्वमायातीति यत्राप्युक्तं अस्मिन् वस्तुनि हनूमान् कृतोत्तरो दत्तोत्तरः यतः प्रध्वंसिताशेषपुरः पुरं लङ्का पूः शब्दो वा कृतसमासान्तः यत्र कपिनाथ भृत्येन ईदृशमनुष्ठितं स कथं नराभियोगो मन्त्रोन्मुखेन न निरूप्यत इति ॥२३ ॥ज०म०

वशीकृतेन्द्रस्यकृतोत्तरोऽस्मिन् विध्वंसिताशेषपुरो हनूमान् ॥२३॥
अग्निः प्रमादेन ददाह लङ्कां बध्यस्य देहे स्वयमेधितश्चेत् ।
विमृश्य तद्देवधियाभिधत्त ब्रह्मास्त्रबन्धोऽपि यदि प्रमादः ॥२४॥

नराभियोगं किं नयसे गुरुत्वमित्यत्रोत्तरम्

यस्येत्यादि। वशीकृतेन्द्रस्य निर्ज्जितशक्रस्य रावणस्य यत्नेनाहृता मन्त्रे-च्छुरियं तादृशो नराभियोगो गुरुत्वमायातीति यस्योक्तं अस्मिन् वस्तुनि हनूमानेव कृतोत्तरः दत्तप्रतिवाक्यो यतो विध्वंसितमशेषं पुरं येन यस्य दूतमात्रेणैवं कृतं तस्य नराभियोगः कथं लघुः स्यादतस्तत्र मन्त्रणा युक्तैव ॥ २३ ॥ भ०

प्रमादेनाग्निः लङ्कामधाक्षीदित्यत्रोत्तरमाह

अग्निरित्यादि। बध्यस्य बधार्हस्य देहे तदेकदेशेषु पुच्छादिषु प्रमादेन स्वयं युष्माभिरग्निरेधितो दीपितः लङ्कां ददाह चेत्तथा त्वाह अबध्योऽपि यदि प्रमादः तद्देवधिया दैवबुद्ध्या देवानां सात्त्विकत्वान्निर्मला बुद्धिः तया विमृश्य निरूप्याभिधत्त ब्रूत सोऽपि प्रमाद इति यतोऽसावमोघोऽपि विशेषितः अभिधत्तेति दधस्तयोश्चेत्यभ्यासदकारस्य भष धातोस्च स्वरितत्वम् ॥ २४ ॥ ज० म०

अग्निरित्यादि। निजेन प्रमादेन कृशानुर्लङ्कामधाक्षीदित्यत्रोत्तरं बध्यस्य बधार्हस्य कपेर्देहे स्वयमेधितो दीपितोऽग्निर्लङ्कां प्रमादेन ददाहेति चेत् यदि तदा यदि ब्राह्मास्त्रबन्धोऽपि प्रमादोऽनवधानकृतो भवति तद्देव-धिया देवानां सात्त्विकत्वान्निर्मला तत्त्वग्राहिणी या बुद्धिस्तादृशधिया विमृश्य निरूप्य अभिधत्स्व ब्रूहि देवेति पृथक् पदं रावणसम्बोधनं वा यदि च ब्रह्मास्त्रबन्धो न प्रमादः तदा अग्निं दत्त्वा ब्रह्मास्त्रबन्धस्य स्थापि-तत्वात् कुतोऽग्निदानप्रमादो येन च स्वयमेव तादृशबन्धनं खण्डितं तस्य किमशक्यं कुतो वा बधः स्यादिति भावः। डुधाञ्धारणे पुष्टौ दाने अभि-पूर्व्वो भाषणार्थः ह्वादोरेद्विरिति द्वित्वं खर्भ्भखयेति खेर्दत्वं श्नाभ्योरित्या-

जगत्यमेयाद्भुतभावभाञ्जि जितामिमानाश्च जना विचित्राः ।
कार्य्ये तु यत्नं कुरुत प्रकृष्टं मा नीतिगर्भान् सुधियोऽवमध्वम् २२
वृद्धिक्षयस्थानगतामजस्रं वृत्तिं जिगीषुः प्रसमीक्षमाणः ।

लोपः भभान्तस्येति खेर्षत्वं भपभसोरिति तः अभिमत्तेति पाठे घोदधोऽन्तलोपे तथि ॥ २४ ॥ भ०

पराभियोगः सर्वथा निरूप्यत इति दर्शयन्नाह ।

जगतीत्यादि । असंख्यविचित्रभावभाञ्जि जगन्ति तत्रत्या अपि जनाः विचित्राः शक्तिदेशकालवशात् जिताभिमानाश्च अन्यैरुत्कृष्टैर्जीयतेऽभिमानस्तेषां तेनात्मन्यभिमानो न कर्त्तव्य इति दर्शयति कार्य्ये तु प्रकृष्टमुत्तमं यत्नं कुरुत येन तत्तत्कार्य्यं सिध्यति तत्र च ये युक्तिमभिदधति तान्नीतिगर्भान् नीतिरेव षाड्गुण्यादिज्ञानं गर्भे येषां अतएव सुधियो मावरुध्वं मा परिभूत तदयुक्तानुष्ठानात् हनसिजिति कित्वविधानसामर्थ्यात् अनुनासिकलोपाभावः धिचेति सिचोलोपः ॥ २५ ॥ ज० म०

पराभियोगः सर्वथा निरूपणीय इति दर्शयितुमिदमुच्यते

जगतीत्यादि । जगन्ति भुवनानि अमेयानसंख्यान् अद्भुतानाश्चर्य्यान् भावान् भजन्ति तत्रत्याश्च जना अपि विचित्राः शक्तिदेशकालवशान्नानाविधा जिताभिमानाश्च भवन्ति अन्यैरुत्कृष्टैर्जनैर्जितोऽभिमानोऽहङ्कारो येषां ते तथा तस्मादभिमानो न कर्त्तव्य इति कार्य्येषु प्रकृष्टमुत्तमं यत्नं कुरुत तेनैव कार्य्यं सिध्यति तत्त्ववत्तया नीतिरेव गर्भोऽन्तर्गतो येषां तान् अतएव सुधियः पण्डितान् मा अवमध्वं तदवज्ञां न कुरुत मनेर्धे सिलोपो वेति सिलोपे वनतनाद्यनिमामिति नकारलोपः ॥ २५ ॥ भ०

यथा च विजिगीषुणा वर्त्तितव्यं तथोपदिशन्नाह

वृद्धीत्यादि । आत्मद्रव्यप्रकृतिसम्पन्नो न यस्याधिष्ठानं विजिगीषुः तस्य च वृद्धिक्षयस्थानमिति नीतिः फलानि गुणाश्च सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षट् तत्र यस्मिन् गुणे स्थितः पश्येदिहस्थः पश्यामीति दुर्गसेतुवणिक्पथशून्यनिवेशनवान् द्रव्यहस्तिवनकर्मोपघातानः प्रवर्त्तयितुं परस्य

घटेत सन्ध्यादिषु यो गुणेषु लक्ष्मीर्न तं मुञ्चति चञ्चलापि ॥२६॥
उपेक्षणीयैव परस्य वृद्धिः प्रनष्टनीतेरजितेन्द्रियस्य ।
मदादियुक्तस्य विरागहेतुः समूलघातं विनिहन्ति यान्ते ॥२७॥

चैतानि हन्तुं गुणमातिष्ठेत् सा वृद्धिः यस्मिन् गुणे स्थितस्य कर्मणामुपघातं पश्येत् नेतरस्य तस्मिन्न तिष्ठेत् स क्षयः स्वकर्मणां वृद्धिगुणेनाभिपद्येतेतत् स्थानमित्यनेन मार्गेण यो विजिगीषुः वृद्धिक्षयस्थानगतामात्मनः परस्य च वृत्तिमजस्रं शश्वत् प्रसमीक्षमाणो निरूपयन् सन्ध्यादिषु षड्गुणेषु घटेत यतेत तं विजिगीषुं लक्ष्मीः राज्यश्रीः चञ्चलापि न मुञ्चति गुणबद्धलाबद्ध-त्वात् ॥ २६ ॥ ज० म०

नीतिरेव कीदृशीत्यपेक्षायामिदमुच्यते

वृद्धीत्यादि । यो जिगीषुः सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रय इति षड्गुणा एषु घटेत चेष्टेत तं लक्ष्मीश्चञ्चलापि न मुञ्चति गुणबद्धत्वात् चञ्चलशब्दो रूढः जिगीषुः कीदृशः अजस्रं सततं वृद्धिक्षयस्थानगतां तत्व-स्विनीमात्मनः परस्य च वृत्तिं प्रसमीक्षमाणः विचारयन् वृद्धिर्वर्द्धनं कोपादेः क्षयोऽपचयः परकोपादेः स्थानं स्थितिर्मित्रदुर्गवणिक्-पथादेः ॥ २६ ॥ भ०

अस्ति स कालो यत्र विजिगीषुणा परवृद्धिरुपेक्षणीयेति दर्शयन्नाह

उपेत्यादि । परः शत्रुः प्रनष्टनीतित्वादजितेन्द्रियः न मदादिषड्वर्गं त्यजति किन्तु तेनैव युज्यते तस्यैवंविधस्य या वृद्धिः सा सर्वस्यैव लोकस्य विरागहेतुः वैमुख्यकारणमुपेक्षणीयैव न तदभावाय तेनेदृशी यान्ते अव-साने समूलघातं सर्वं सर्वथा विनिहन्ति विनाशयति ॥ २७ ॥ ज० म०

वृद्ध्यादिगतां वृत्तिमेव निरूपयितुमिदमुच्यते

उपेक्षणीयेत्यादि । अजितेन्द्रियस्यातएव प्रनष्टनीतेर्मदादियुक्तस्य षड्-रिवर्गस्य परस्य वृद्धिरुपेक्षणीयैव यतः सा विरागहेतुः सर्वस्यैव लोकस्य वैमुख्यकारणं या वृद्धिरन्ते अवसाने समूलघातं विनिहन्ति समूलं नाशयति

जनानुरागेण युतोऽवसादः फलानुबन्धः सुधियात्मनोऽपि ।
उपेक्षणीयोऽभ्युपगम्य सन्धिं कामादिषड्वर्गजिताधिपेन ॥ २८ ॥
यदा विगृह्णन्न च सन्दधानो वृद्धिं क्षयञ्चानुगुणं प्रपश्येत् ।

तत्र वृद्धिः समूलं विनिहन्ति सर्वेषां विरागहेतुत्वादजितेन्द्रियत्वात् दोषव-त्त्वाच्च इति सूचितम् ॥ २७ ॥ म०

तथास्ति स कालो यत्र विजिगीषुणाप्यात्मक्षय उपेक्षणीय इत्याह

जनेत्यादि । आत्मनोऽप्यवसादः क्षयः जनानुरागेण युतः सम्बद्धः अनुरक्तप्रकृतिमण्डलत्वाद्विजिगीषोः फलानुबन्धः फलमनुबध्नाति सुधिया विदुषा अधिपेन राज्ञा कामादिषड्वर्गजिता कामक्रोधलोभमोहमदेर्ष्याणां षण्णां वर्गः तज्जिता उपेक्षणीयः तत्रापि परैः सन्धिमभ्युपगम्य कृत्वा अन्यथा क्षीणोऽयमिति परोऽभियुञ्जीत ॥ २८ ॥ ज० म०

जनेत्यादि । अधिपेन राज्ञा आत्मनोऽप्यवसादः क्षयः उपेक्षणीयः किं कृत्वा सन्धिमभ्युपगम्य शत्रुणा सन्धिमनु कृत्वान्यथा क्षीणोऽयमिति परेणा-भियुक्तः स्यात् अवसादः कीदृशः जनानामनुरागेण युतो बद्धोऽनुरक्तप्रकृतिम-ण्डलत्वात् फलानुबन्धः फलं वृद्धिमनुबध्नातीति ढातृषण् कीदृशेनाधिपेन कामादीनां षण्णां वर्गं जितवता अतएव सुधिया नीतिज्ञेन कामक्रोधौ लो-भमोहौ मद ईर्ष्या इतीह षडिति षड्वर्गस्तं जयतीति कर्त्तरि क्विप् ॥ २८ ॥ भ०

यदा च विजिगीषुः सन्धिविग्रहाभ्यां फलं न पश्येत् तदा स्ववृद्धि-क्षयप्रतीक्षमासनं कुर्य्यादित्युपदिशन्नाह

यदेत्यादि । यदा हि राजा विजिगीषावस्थितः विगृह्णन् विग्रहं कुर्व्वन् आत्मनोऽनुगुणामनुकूलां वृद्धिं न पश्येत् क्षयं वा परस्यात्मनोऽनुगुणं न पश्येत् सन्दधान इति सन्धिञ्च कुर्वन्नात्मनोऽनुगुणं न पश्येत् तदा आ-सीत स्ववृद्धप्रतीक्षमासनं कुर्य्यात् न विग्रहं सन्धिं वा अवसरः कालस्तं प्रती-क्षत इति अवसरप्रतीक्षः कर्मक्षयन् सन्धेर्विग्रहस्य वा स्वपरवृद्धिक्षयानुकूलं कालं प्रतीक्षमाणः इत्यर्थः न पुनः प्रयासं सन्धिविग्रहोद्यमं वितथं निष्फ-

आसीत राजावसरप्रतीक्षस्तदा प्रयासं वितथं न कुर्य्यात् ॥२९॥
सन्धौ स्थितो वा जनयेत् स्ववृद्धिं हन्यात्परं वोपनिषत्प्रयोगैः ।
आश्रावयेदस्य जनं परैर्वा विग्राह्य कुर्य्यादवहीनसन्धिम् ॥ ३०॥
सन्दर्शितस्नेहगुणः स्वशत्रून् विद्वेषयन्मण्डलमस्य भिन्द्यात् ।

वं निष्प्रयोजनं कुर्य्यात् यदा तु परं विग्रहीतुमशक्तः तदा श्वावराहवद्भ-
वहं समानमुपदेक्ष्यति ॥ १९ ॥ ज० म०

यदेत्यादि । यदा राजा विगृह्णन् विग्रहं कुर्वन् सन्दधानः सन्धिं
कुर्वाणोऽपि अनुगुणामनुकूलामात्मनो वृद्धिं न पश्येत् नचानुगुणमनुकूलं
परस्य क्षयं पश्येत् तदा आसीत आसनं कुर्य्यात् जिलासङ उपवेशे विधौ
स्वी अवसरप्रतीक्षः अवसरं वृद्धियोग्यकालं प्रतीक्षमाण इति क्षमीक्षाच-
रिभ्यो ण इति परस्त्वेण णः स्वमते पचादित्वादन् किंवा अवसरे प्रतीक्षा
यस्येति समासः वितथं निष्प्रयोजनं प्रयासं सन्धिविग्रहोद्यमं न कुर्य्यात्
॥ २९ ॥ भ०

सन्धिं कृतवतोऽपि विजिगीषोः परेण वा वियुज्यमानस्य विधिमुपदिशन्नाह

सन्धावित्यादि । सन्धौ स्थितो वर्त्तमानः जनयेत्स्ववृद्धिं यया अप्यु-
च्छ्रितः तामभियुञ्जीत परं वा शत्रुं उपनिषत्प्रयोगैः रहस्यप्रयोगैः वि-
षादिदानैः हन्यात् विनाशयेत् सन्धिना जातविश्वासत्वात् आश्रावयेदस्य जनं
देशादिदानेनाकर्षयेत् बलवता अभियुज्यमानः परैः विग्राह्य कलहं कार-
यित्वा अवहीनसन्धिं आक्रान्तसन्धिं कुर्य्यात् तस्योपतापितत्वात् ॥ ३० ॥
ज० म०

सन्धावित्यादि । सन्धिं कृत्वापि विजिगीषुर्न निश्चेष्टस्तिष्ठेत् किन्तु सन्धौ
स्थितः सन् स्ववृद्धिं जनयेत् उत्पादयेत् यथा वृद्धिं प्राप्य परं हन्तुं
क्षमते उपनिषत्प्रयोगैरभिचारैरहः प्रयुक्तैर्विषादिदानैर्वा परं हन्यात् स-
न्धिना जातविश्वासत्वात् भवेदुपनिषद्धर्मे वेदान्ते च रहस्यपीति विश्वः । अस्य
परस्य जनं वंशलोकं आश्रावयेत् देशादिदानेन आकर्षयेत् परैस्तदीयशत्रु-
भिर्वा विग्रहं कलहं कारयित्वा अवहीनसन्धिं त्यक्तसन्धिं कुर्य्यात् येन
सह सन्धिः प्रागासीत् तेन सह सन्धिभङ्गं कुर्य्यादित्यर्थः ॥ ३० ॥ भ०

इत्येवमादि प्रविधाय सन्धिर्वृद्धे र्विधेयोऽधिगमाभ्युपायः ॥ २१ ॥
मत्वा सहिष्णूनपरोपजप्यान् स्वकानधिष्ठाय जलान्तदुर्गान् ।
द्रुमाद्रिदुर्लङ्घ्यजलाप्रधृष्यान् वर्द्धेत राजा रिपुविग्रहेण ॥ २२॥
शक्नोति यो न द्विषतो निहन्तु' विहन्यते नाप्यबलैर्द्विषद्भिः ।

सन्धिस्तोर्विजिगीषोः शत्रुमण्डलभेदं कुर्वतः सुकरः सन्धिरित्युपदिशन्नाह

सन्दर्शितेत्यादि । अस्मच्छत्रवोऽनेन सन्धानं मा कार्षुरिति तान्विद्वेषयन् विमुखानुत्पादयन् दर्शितस्नेहगुणः प्रकटीकृतानुरागगुणः अस्य शत्रोर्मण्डलममात्यादिप्रकृतिस्भिन्द्यात् इत्येवमादि प्रविधाय सन्दर्शितेत्येवमादिवाक्यार्थं कृत्वेत्यर्थः वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुः सन्धिर्विधेयोऽनुष्ठेयः ॥२१॥ ज०म०

सन्दर्शितेत्यादि ।मण्डलभेदे सन्धिमुपदिशति अस्मच्छत्रवोऽनेन सन्धिं न कार्य्युरिति तान् विद्वेषयन् विमुखान् कुर्वन् सन्दर्शितस्नेहगुणः प्रकटितानुरागः सन् अस्य शत्रोर्म्मण्डलं सामादिभिर्भिन्द्यात् इत्येवमादि उक्तप्रकारादि प्रविधाय कृत्वा वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुभूतः सन्धिर्विधेयः ॥ २१ ॥ भ०

विग्रहोऽपि विशिष्टस्यैव विजिगीषोर्न यस्य कस्यचिदित्युपदिशन्नाह

मत्वेत्यादि । स्वकानात्मीयाननुजीविनः सहिष्णून् समर्थान् अपरोपजप्यान् परैरभेद्यान् जलान्ते ये दुर्गाः प्रदेशाः तानधिष्ठाय तत्र स्थापयित्वा अधिशीङ्स्थासां कर्म्मसंज्ञा कीदृशान् द्रुमैरद्रिभिर्दुर्लङ्घ्यजलैश्चाप्रधृष्यान् अगम्यान् वनपर्वतजलभेदात् त्रिविधं दुर्गं रिपुणा सह यो विग्रहः तेन हेतुना राजा वर्द्धेत वृद्ध्युपचितः स्यात् ॥ २२ ॥ ज० म०

सन्धेर्वृद्धिहेतुत्वमुपदर्श्य विग्रहस्य वृद्धिहेतुत्वं कथ्यते

मत्वेत्यादि । अपरोपजप्यान् परैरभेद्यान् सहिष्णून् समर्थान् स्वकानात्मीयान् अनुजीविनो मत्वा निश्चित्य जलान्तदुर्गान् जलान्ते लोकान्ते दुर्गप्रदेशान् अधिष्ठाय तत्र स्थित्वा राजा रिपुविग्रहेण हेतुना वर्द्धेत उपचितः स्यात् नतु सहसा विग्रहमात्रं वृद्धिहेतुः कीदृशान् दुर्गान् द्रुमैरद्रि-

स श्वावराहं कलहं विदध्यादासीत दुर्गादि विवर्द्धयंश्च ॥२२॥
प्रयाणमात्रेण परे प्रसाध्ये वर्त्तेत यानेन कृताभिरक्षः ।

भिर्द्विश्च कुम्भजलैश्च करणभूतैरगम्यत्वान् परैरगम्यान् इत्यपर्वतधारिभेदात्
त्रिविधं दुर्गमुक्तं दुःखेन गम्यते यत्र तद्दुर्गं कृनजनमसादेरिति आधारे
डः लक्षोःकभाव इत्युक्तः ॥ २२ ॥ म०

यदा अरिविजिगीषू परस्परं हन्तुं न शक्तौ तदा विजिगीषोरासन-
मुपदिशन्नाह

शक्नोतीत्यादि । यो विजिगीषुः अबलत्वात् द्विषतः शत्रूनभिहन्तुं
विग्रहीतुं न शक्नोति अबलैर्द्विषद्भिर्न विहन्यते स विजिगीषुः श्वावराहं
कलहं विदध्यात् अनुतिष्ठेत् श्वा च वराहश्च श्वावराहं तदीयमिव कलहं
तत्सेदमित्यण् यथा चण्डाला वराहं हन्तुमशक्ताः श्वानं विसृज्य योधयन्ति
यद्ययं हतोऽनेन वा अयमिति तयोर्भक्ष्यत्वादुभयथा कार्यसिद्धेः तद्वद्द्वयो-
र्विद्विषतोः कलहं विदध्यात् स्वयञ्च दुर्गादि विवर्द्धयन् दुर्गसेतुवणिक्शून्य-
निवेशनद्रव्यहस्तिवनकर्माण्युपचिन्वन् आसीत तिष्ठेत् ॥ २२ ॥ ज० म०

आसनकालः कथ्यते

शक्नोतीत्यादि । यो जिगीषुर्द्विषतः शत्रून् न निहन्तुं शक्नोति बल-
रहितैर्द्विषद्भिरपि न हन्यते च स श्वावराहं कुक्कुरसूकरसम्बन्धिनं कलहं
कुर्य्यात् तत्तुल्ययोर्युद्धं सम्पादयेदित्यर्थः यथा चण्डालाः स्वयं वराहं हन्तु-
मशक्ताः श्वानं विसृज्य योधयन्ति तत्र यदि शुना वराहो हन्यते वराहेण
वा श्वा हन्यते उभयथापि तेषां कार्यसिद्धिर्द्वयोरपि तेषां भक्ष्यत्वात् तथो-
भयोर्द्विषतोः कलहैर्जिगीषोरिति भावः । स्वयं दुर्गादि अष्टवर्गं विवर्द्धय-
न्नासीत विग्रहञ्च त्यक्त्वा तिष्ठेत् कृषिर्वणिक्पथोदुर्गं सेतुः कुञ्जरबन्धनम् ।
खन्याकरधनादानं शुल्कानाञ्च निवेशनमित्येषोऽष्टवर्गः । श्वा च वराहश्चेति
द्वन्द्वे श्वावराहेणेति परसूत्रेण पूर्वपदस्य विकल्पेन दीर्घत्वं लभते विश्व-
राजोऽदेत्यस्य योगविभागात् पक्षे पूर्वपदस्यादन्तत्वं सिद्धं ध्वत तु तदकार-
स्येऽपि न क्षतिः विकारसंघेत्यादिना इदमर्थे ण्यो द्वन्द्वे वेरसिद्धेः विदध्यादि-
त्यान्तर्भूतण्यर्थो बोध्यः ॥ ॥ २२ ॥ म०

**अशक्नुवन् कर्तुमरेर्विघातं स्वकर्मरक्षाञ्च परं श्रयेत ॥ २४ ॥**
**एकेन सन्धिः कलहोऽपरेण कार्य्योऽभितो वा प्रसमीक्ष्य वृद्धिम् ।**
**एवं प्रयुञ्जीत जिगीषुरेता नीतीर्विजानन्नहितात्मसारम् ॥ २५ ॥**
**त्वया तु लोके जनितो विरागः प्रकोपितं मण्डलमिन्द्रमुख्यम् ।**

यदा विजिगीषुर्यानमात्रसाध्यं शत्रुमात्मानं वा शक्तिहीनं पश्येत् तदा यायात् संश्रयेतेति गुणद्वयमुपदिशन्नाह

प्रयाणमात्रेत्यादि । प्रयाणमात्रेण प्रसाध्ये परे शत्रौ नापरं विग्रहमपेक्षते यानेन वर्त्तेत स्ववृत्तौ यतेत कृताभिरक्षः अभियास्यतः कर्म्मणां द्विविधत्वप्रतिविधानात् अरेर्विघातं दुर्गादिकर्म्मोपघातान् स्वकर्मरक्षां स्वेषां दुर्गादिकर्म्मणां अपरेणोपहन्यमानानां रक्षां कर्तुमशक्नुवन् शक्तिहीनत्वात् परं श्रयेत यमाश्रित्य क्षयस्थानात् स्थानवृद्धिमाप्नुयात् परो द्विविधः अभियोक्ता तद्विशिष्टबलोऽपरोऽन्य इति ॥ २४ ॥ ज० म०

यानाश्रययोः कालः कथ्यते

प्रयाणेत्यादि । परे शत्रौ प्रयाणमात्रेण प्रसाध्येऽभिभवनीये सति राजा यानेन वर्त्तेत स्ववृद्धौ यतेत कीदृशः सन् आत्मदेशस्य कृताभि सर्वतोभावेन रक्षा येन तादृशः अरेः शत्रोर्विघातं स्वेषां दुर्गादकर्म्मणां परैरुपहन्यमानानाञ्च रक्षां कर्तुमशक्नुवन् असमर्थोभवन् परं श्रयेत यतो वृद्धिमाप्नोतीत्यर्थः ॥ २४ ॥ भ०

यदा तु सहायसाध्यं कार्य्यं पश्येत् तदा सन्धिविग्रहासनद्वैधीभावकुर्य्यादित्युपदिशन्नाह

एकेनेत्यादि । अभित उभयपार्श्वयोः सन्धिना विग्रहेण वा वृद्धिं प्रसमीक्ष्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेण सहायाभियुक्तेन विग्रहः कार्य्य एवमुक्तेन प्रकारेण अहितस्य शत्रोरात्मनश्च सारं बलाबलं विजिगीषुर्विजानन् एता नीतीः षाड्गुण्यलक्षणाः प्रयुञ्जीत ॥ २५॥ ज० म०

द्वैधीभावप्रकारः कथ्यते

एकेनेत्यादि । अभित उभयपार्श्वयोः सन्धिविग्रहाभ्यां स्ववृद्धिं प्रस-

रामे तु राजन्! विपरीतमेतत् पश्यामि तेनाभ्यधिकं विपक्षम् २६
एकेन वाली निहतः शरेण सुहृत्तमस्ते रचितश्च राजा ।
यदैव सुग्रीवकपिः परेण तदैव कार्य्यं भवतो विनष्टम् ॥ २७ ॥

मीक्ष्य निरूप्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेणाभियुक्तेन स्वयं विग्रहश्च कार्य्यः वाशब्दः समुच्चये पूर्व्वश्लोकापेक्षया पक्षान्तरे वा एवमुक्तप्रकारेणाहितस्य शत्रोरात्मनश्च सारं बलं विजानन् विजिगीषुरेता नीतीः षाड्गुण्यरूपाः प्रयुञ्जीत ॥ २५ ॥ भ०

त्वया पुनरेवं प्रयुक्ता इति दर्शयन्नाह

त्वयेत्यादि । त्वया पुनश्चतुर्वर्णोच्छेदकारिणा लोके जनितो विरागः इन्द्रमुख्यञ्च शक्रप्रधानं मण्डलं प्रकोपितं रामे तु सर्व्वमेतद्विपरीतं अनुरागेण जनितं मण्डलञ्चानुरञ्जितं तेनाभ्यधिकं विपक्षं रामं पश्यामि ॥ २६ ॥ ज० म०

उक्तरीत्या नीतितत्त्वं प्रदर्श्य रावणे तद्वैपरीत्यात् सन्धिरेव युक्त इति प्रकृतमभिधीयते

त्वयेत्यादि । त्वया पुनर्लोके विरागो जनितः परद्रोहित्वात् इन्द्रादिकं राजमण्डलं प्रकोपितं तेनेयं भवतो वृद्धिरपि न शुभोदर्केति भावः । हे राजन् ! रामे पुनः सर्व्वमिदं विपरीतं धार्मिकत्वेन सर्व्वजनानुरागस्य जनितत्वात् रक्षोहन्तृत्वेनेन्द्रादिसम्मतत्वाच्च तेन विपक्षं शत्रुं रामं त्वत्तोऽभ्यधिकं पश्यामि विराग इति रञ्जेर्घञन्तस्य स्वदैधावोदेत्यादिना निपातितम् ॥ २६ ॥ भ०

नचेदानीमस्मातः कार्य्यं विनष्टं अपि तु प्रागेवेति दर्शयन्नाह

एकेनेत्यादि । तव सुहृत्तमो वाली यदैव परेण रामेण कर्त्रा शरेणैकेन निहतः सुग्रीवश्च कपिस्तत्स्थाने राजा रचितः स्थापितः तदैव विनष्टमिति ॥ २७ ॥ ज० म०

रावणस्य मित्रक्षयं रामस्य मित्रोपचयं कर्म्मणामाधिक्यञ्च दर्शयितुमिदमुच्यते

प्राकारमात्रावरणः प्रभावः खरादिभिर्यो निहतैस्तवाभूत् ।
लङ्काप्रदाहाक्षवधद्रुभङ्गैः क्लाम्यत्यसावप्यधुनातिमात्रम् ॥ १८ ॥
षड्वर्गवश्यः परिमूढबन्धुरुच्छिन्नमित्रो विगुणैरुपेतः ।
मा पादयुद्धं द्विरदेन कार्षीर्नम क्षितीन्द्रं प्रणतोपभोग्यम् ॥१९॥

एकेनेत्यादि । परेण शत्रुणा रामेण कर्त्रा एकेन शरेण नव सुहृत्तमो बाली यदैव निहतो मारितः सुग्रीवश्च कपिर्यदैव राजा रचितः कृतः तदैव भवतः कार्य्यं विनष्टं येन भवतो जेता वाली अल्पायासेन हतस्तेन भवज्जयस्यातिसुकरत्वात् ॥ १७ ॥ भ०

अथ प्रतापवतो मम कथं कार्य्यं विनश्यति प्रतापादेव शत्रवो नश्यन्तीति चेदाह

प्राकारेत्यादि । तव त्रैलोक्यप्रमाथी प्रताप आसीत् पुनः खरादिभिर्निहतैः प्राकारमात्रावरणो जातः लङ्कायामेव समर्थत्वात् असावप्यधुना लङ्कादाहेन अक्षवधेन द्रुमभङ्गेन अशोकवनिकाभङ्गेन च अतिमात्रमत्यर्थं क्लाम्यति ग्लानिमुपगच्छति ॥ १८ ॥ ज० म०

मत्प्रतापादेव कार्य्यं सिध्यतीत्याशङ्कामपनेतुमिदमुच्यते

प्राकारेत्यादि । यस्तव प्रभावः निहतैः खरादिभिः प्राकारमात्रावरणोऽभूत् प्राकारमात्रमावरणं यस्य तादृशो जातः पूर्व्वं त्रैलोक्यव्यापिनोऽपि तस्येदानीं लङ्कामात्रे पर्य्याप्तत्वात् असावपि अधुनेदानीं लङ्कायाः प्रदाहेनाक्षस्य वधेन वृक्षाणां भङ्गेन चातिमात्रमत्यर्थं क्लाम्यति ग्लानिमुपयाति ॥ १८ ॥ भ०

अतो रामेण सह युद्धं न घटते तदेव दर्शयन्नाह

षड्वर्गेत्यादि । षड्गुतो वश्यः कामादिवश्यः परिमूढबन्धुः मूर्खामात्यादिपरिवारः उच्छिन्नमित्रः वर्गस्यावश्यत्वात् अरिगणैरुपेतः तद्विपरीतो रामः अतो द्विरदेन पादयुद्धमिव तेन ज्यायसा मा विग्रहं कार्षीः अपितु क्षितीन्द्रं रामं नम प्रणतोपभोग्यं अनेन हीनसन्धिमाह तथाचोक्तं प्रवृत्तचक्रेणाक्रान्तो राजा बलवता बलः । सन्धिनोपनमेत्तूर्णं दण्डकोषात्मभूमिभिरिति ॥ १९ ॥ ज० म०

रामोऽपि दाराहरणेन तप्तो वयं हतैर्बन्धुभिरात्मतुल्यैः ।
तप्तस्य तप्तेन यथायसो नः सन्धिः परेणास्तु विमुञ्च सीताम् ॥४०॥
सन्धुक्षितं मण्डलचण्डवातैरमर्षतीक्ष्णं क्षितिपालतेजः ।
सामाम्भसा शान्तिमुपैतु राजन्! प्रसीद जीवाम सबन्धुभृत्याः ॥४१॥

रामेण सह तव युद्धमनुचितमिति दर्शयितुमिदमुच्यते

षड्वर्गेत्यादि । त्वं द्विरदेन हस्तिना सह पादयुद्धं पादेन विग्रहं मा कार्षीः न कुरु षड्वर्गवश्यत्वादिदोषहीनेन रामेण सह कलहो द्विरदेन युद्धस्य तुल्य इत्यर्थः द्विरदेन पादयुद्धमित्यनेन बलीयसा दुर्बलस्य युद्धमुपलक्ष्यते किन्तु क्षितीन्द्रं रामं नम प्रणम यस्मादसौ प्रणतैरेव जनैरुपभुज्यते वशीक्रियते त्वं कीदृशः षड्वर्गस्य कामक्रोधलोभमोहमदेर्ष्यात्मकस्य वश्य आयत्तः वशं गतो वश्यः ढषेकादिति यः परिभूढबन्धुर्मूर्खपरीवारः उच्छिन्नमित्रः हतवालिखरादिमित्रः मित्ररहितोवा अतएव विगुणैरुपेतः येन गुणेन दोष उत्पद्यते तेन युक्तः नमेत्यत्र विधिनिमन्त्रणेत्यादिना प्राप्तकाले णी ॥ ३९ ॥ भ०

युवयोः सन्धानकारणमस्त्येवेति दर्शयन्नाह

राम इत्यादि । यथा तप्तेनायसा तप्तस्यायसः सन्धिर्घटते तद्वदस्माकं तप्तानां तप्तेन रामेण सन्धिरस्तु अतो मुञ्च सीतां सन्धिनिमित्तम् ॥ ४० ॥ ज० म०

कथमावयोर्भिन्नधर्म्मयोः सन्धिः स्यादित्याशङ्कायामिदमुच्यते

राम इत्यादि। दाराहरणेन सीतापहारेण रामस्तप्तो वयमप्यात्मतुल्यैर्हतैर्बन्धुभिरक्षादिभिस्तप्ताः यथा तप्तेन लौहेन तप्तस्य लौहस्य सन्धिर्घटना भवति तथा परेण रामेणापि नोऽस्माकं सन्धिरस्तु उभयोः सन्तप्तयोः सन्धिरिति न्यायात् अतः सीतां विमुञ्च त्यज ॥ ४० ॥ भ०

यदि च तेन तप्तेनापि सता ज्यायसा न सन्धानं तदा सर्व्वे वयं न जीवामः तव तेजसो विनाशकत्वादिति दर्शयन्नाह

सन्धुक्षितमित्यादि । क्षितिपालतेजः सीतावियोगजं इन्द्रादिमण्डलैः

अपक्वकुम्भाविव भङ्गभाजौ राजन्नियातां मरणं समानौ ।
वीर्य्ये स्थितः किन्तु कृतानुरागो रामो भवांश्चोत्तमभूरिवैरी ॥४२

चण्डवातैरिव सन्धुक्षितं दीपितं अमर्षतीक्ष्णं असहिष्णुतयासह्यं सामाम्भसा साम्ना सन्धिना अम्भसेव शान्तिमुपैतु हे राजन् ! प्रसीद किं संरम्भेन अन्यथा तमारण्योऽग्निरिव दुःखामर्षजन्मो विक्रमयतीति ॥४१॥ज०म०

सन्धिं विनापि जीवनं नास्तीति दर्शयितुमिदमुच्यते

सन्धुक्षितमित्यादि । क्षितिपालस्य तेजः साम्ना सन्धिना अम्भसा जलेनैव शान्तिमुपैतु गच्छतु तेजःशब्देनात्र सीताविरहमन्युजोऽग्निरुपलक्ष्यते कीदृशं तेजः इन्द्रादिराजमण्डलैः प्रचण्डवातैरिव सन्धुक्षितं दीपितं अमर्षेण पराभवासहिष्णुतया तीक्ष्णमसह्यं तस्मात् हे राजन् ! प्रसीद किं क्रोधेन बन्धुभिर्भृत्यैश्च सह वयं जीवाम विधिनिमन्त्रणेत्यादिना प्रार्थनायां लोट् ॥ ४१ ॥ भ०

समानयोरपि सन्धानमेव युज्यते न विग्रहः किं पुनर्ज्यायसीत्यत्र हेतुं दर्शयन्नाह

अपक्वेत्यादि । हे राजन् ! यथा कुम्भावपक्वौ भङ्गभाजौ परस्पराभिहतौ विनश्यतः तद्वत् समानौ युध्यन्तौ मरणमियातां सार्व्वधातुकयकारत्वादिणो न दीर्घत्वं राजन्नियातामिति ङमो ह्रस्वादचिङमुट् किन्तु रामो वीर्य्ये स्थितः उत्साहशक्तियुक्त इत्यर्थः विक्रमबलं चोत्साहशक्तिः कृतानुरागस्य अनुरक्तमण्डलत्वात् भवान् पुनः उत्तमभूरिवैरी उत्तमा इन्द्रादयो भूरयः प्रभूता वैरिणः शत्रवो यस्य अतस्तेन सन्धानमेव युक्तं न विग्रहः ननु च समज्यायोभ्यां सन्धीयेत हीनेनैव विगृह्णीयात् मन्त्रप्रभावोत्साहशक्तिभिर्युक्तो ज्यायानपचितो हीनः तुल्यशक्तिः समः तत्र ज्ञानबलं मन्त्रशक्तिः कोषदण्डबलं प्रभुशक्तिः विक्रमबलं उत्साहशक्तिः ॥ ४२॥ ज०म०

समयोरपि विग्रहो न युक्तः सुतरां हीनाधिकयोरिति दर्शयितुमिदमुच्यते

अपक्वकुम्भावित्यादि । हे राजन् ! यथा अपक्वकुम्भौ परस्पराभिघातभङ्गभाजौ तथा समानौ युध्यमानौ मरणमियातां इणः रूपं समानयोर्वि-

दण्डेन कोषेण च मन्यसे चेत् प्रकृष्टमात्मानमरेस्तथापि ।
रिक्तस्य पूर्णेन वृथा विनाशः पूर्णस्य भङ्गे बहु हीयते तु ॥४३॥
क्लिष्टात्मभृत्यः परिमृग्यसम्पन्मानी यतेतापि ससंशयेऽर्थे ।
सन्देहमारोहति यः कृतार्थो नूनं रतिं तस्य करोति न श्रीः ॥४४

षहः कथञ्चिद्युज्यतेऽपि किन्तु रामो वीर्य्ये स्थित उत्साहशक्तिसम्पन्नः कृतानुरागः सर्वलोकेष्विति शेषः भवान् पुनरुत्तमानां भूरीणां बहूनामिन्द्रादीनां वैरी उत्तमा भूरयो बहवो वैरिणो यस्येति वा अतो हीनाधिकयोः सन्धिरेवोचित इति भावः ॥ ४२ ॥ भ०

सत्यामुत्साहशक्तौ शेषयोरभावात्तत्र हीनेन विग्रह एव युज्यत इत्याह

दण्डेनेत्यादि । दण्डेन चतुरङ्गेन बलेन कोषेण हेमरूप्यादिना यदि प्रकृष्टमात्मानमरेः सकाशान्मन्यसे तथाप्येवमपि न युक्तं यतो रिक्तस्य पूर्णेन भवता विनाशो भङ्गः वृथा निष्फलः पूर्णस्य पुनर्भवतो भङ्गे बहु हीयत इति हीनेन बलवतोऽपि सन्धानं युक्तं रिक्तस्य भङ्गो मा भूत् ॥ ४३ ॥ ज०म०

शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजा इति कोषः । दण्डबलं प्रभुशक्तिः अधिकविक्रम उत्साहशक्तिः ज्ञानबलं मन्त्रशक्तिस्तत्र यद्यपि राम उत्साहशक्तिशाली तथापि प्रभुशक्तिहीनः अहन्तु उत्साहप्रभुमन्त्रशक्तिभिर्युक्तः अतो हीनेनाधिकस्य विग्रह एवोचितो न तु सन्धिरित्याशङ्क्य दशच्यते

दण्डेनेत्यादि । दण्डेन चतुरङ्गबलेन कोषेण च हेमरूप्यादिना चेत् यदि अरेः शत्रोः सकाशादात्मानं प्रकृष्टं मन्यसे तथापि रिक्तस्य कोषदण्डहीनस्य रामस्य पूर्णेन भवता हेतुना विनाशो वृथा निष्फलः पूर्णस्य भवतो रिक्तेन रामेण भङ्गे सति पुनर्बहु हीयते अतो यस्मिन् जिते किमपि फलं नास्ति तेन हीनेनापि सन्धिः कर्त्तुमुचितः वृथा सङ्कटप्रवेशानौचित्यात् दण्डो यमे मानभेदे लगुडे दमसैन्ययोरिति विश्वः ॥ ४३ ॥ भ०

अनन्त्रेहि विजयफलमस्तीति चेदाह

क्लिष्टेत्यादि । यो मानी क्लिष्टात्मभृत्यः चिरकालक्लिष्टशरीरः क्लिष्टभृत्यश्च परिमृग्यसम्पत् प्रार्थनीया विभूतिर्येन मृगयतेः स्वार्थिकण्यन्ताद्यो यत्

शक्यान्यदोषाणि महाफलानि समारभेतोपनयन् समाप्तिम् ।
कर्म्माणि राजा विहितानुरागो विपर्य्यये स्याद्वितथः प्रयासः ४५

संशयेऽर्थे स्यान्न स्यादिति यतेतापि यत्नं कुर्य्यात् यः कृतार्थो भवादृशः त्रैलोक्यविजयित्वात् सन्देहमारोहति सन्देहे प्रवर्त्तते तस्य नूनमवश्यं श्रीर्विभूतिः रतिं स्थितिं न करोति ॥ ४४ ॥ ज० म०

रिक्तस्य भङ्गे मा भूदनयत् किञ्चित् फलं विजयो वैरिनिर्यातनञ्च फलमस्तीत्याशङ्क्येदमुच्यते

क्लिष्टात्मेत्यादि। क्लिष्टो दुःखित आत्मा शरीरं भृत्यश्च यस्य स परिक्लृप्तसम्पत् प्रार्थनीयविभूतिर्मानी संशयेऽर्थे सन्दिग्धे अर्थे यतेतापि यत्नं कुर्य्यादपि यः पुनः कृतार्थो भवादृशस्त्रैलोक्यविजयित्वात् सन्देहमारोहति सम्भाव्यमानविनाशे सन्दिग्धकर्मणि प्रवर्त्तते तत्र नूनमवश्यं श्रीः लक्ष्मी रतिं स्थितिं प्रीतिं वा न करोति तस्येति क्वचित्पाठः क्लृप्तकस्तु मार्गणे तव्यानीया इति कर्मणि यः ॥ ४४ ॥ भ०

कदा तर्हि विग्रह इत्याह

शक्यानीत्यादि। शक्यानि यानि कर्त्तुं पार्य्यन्ते अदोषाणि शुद्धानि महाफलानि कार्य्याणि राजा समारभेत विग्रहेणेत्यर्थात् उपनयन् समाप्तिं नयन् विहितानुरागोऽनुरक्तप्रकृतिः विपर्य्यये उक्तस्य अशक्यानि दोषाधिकानि स्वल्पफलानि राजा समारभेत समाप्तिं च न नयति स वितथः प्रयासः निष्फलो विग्रहः ॥ ४५ ॥ ज० म०

तर्हि कदा विग्रहः कर्त्तव्य इत्याशङ्क्येदमुच्यते

शक्यानीत्यादि। राजा समाप्तिमुपनयन् फलान्तत्वमुपगच्छन् कर्म्माणि समारभेत प्रस्तुतानि कुर्य्याद्विग्रहेणेत्यर्थात् यदि विहितानुरागोऽनुरक्तप्रकृतिमण्डलो भवेत् कीदृशानि शक्यानि कर्त्तुमित्यर्थात् अदोषाणि पर्य्यन्तशुद्धानि महाफलानि बहुप्रयोजनानि विपर्य्यये उक्तस्य वैपरीत्ये विरक्तप्रकृतिमण्डलो राजा समाप्तिमकुर्वन् यद्यशक्यानि सदोषाणि निष्फलानि कर्म्माणि समारभेत तदा प्रयासो वितथो मिथ्या निष्फलः स्यात् समस्तपाठे वितथाः प्रयासा यस्य तादृशो राजा स्यात् ॥ ४५ ॥ भ०

जेतुं न शक्यो नृपतिः सुनीतिर्दोषः क्षयादिः कलहे ध्रुवश्च ।
फलं न किञ्चिन्न शुभा समाप्तिः कृतानुरागं भुवि संत्यजारिम् ॥४६
त्वन्मित्रनाशो निजमित्रलाभः समेतसैन्यः सच मित्रकृच्छ्रे ।
भोग्यो वशः पश्य शरेण शत्रोः प्रसाधितो वालिवधे न कोऽर्थः ॥४७

ममापि रामविग्रहेण सर्वमस्तीति चैवाह

जेतुमित्यादि । नृपती रामः जेतुं न शक्यः विग्रहेण उत्साहशक्ति-युक्तत्वात् तेन सह कलहे दोषः क्षयादिः ध्रुवोऽवश्यम्भावी विग्रहे वा सति क्षयस्य प्रयासप्रत्यवाया भवन्तीत्युक्तं फलं न किञ्चित् न शुभा समाप्तिः स्वब-न्धुविनाशहेतुत्वात् अतो योद्धुमरिं ज्यायांसं सन्त्यज भुवि कृतानुरागं त्वं पुनरकृतानुराग इति ॥ ४६ ॥ ज० म०

ममापि रामविग्रहे सर्वमेतदस्तीत्याशङ्क्येदमुच्यते

जेतुमित्यादि । नृपती रामो जेतुमभिभवितुं न शक्यो यतः सुनीति-स्तेन सह कलहे विग्रहे बन्धुक्षयादिर्दोषो ध्रुवः अवश्यम्भावी फलन्तु न किञ्चिद्रत्नादिलाभशून्यत्वात् समाप्तिरपि न शुभा न साध्वी विनाशहेतुत्वात् समाप्तिरशक्या वा तत्सैन्यस्याप्यनेकत्वात् अतो भुवि कृतानुरागं अरिं रामं सन्त्यज ॥ ४६ ॥ भ०

अन्यच्च वालिवध एव तस्यार्थसम्पज्जायेति दर्शयन्नाह

त्वन्मित्रेत्यादि । वालिवधे सति शरेण रामस्य कोऽर्थो न प्रसाधितः अपि तु सर्व एव पश्य तथाहि त्वन्मित्रनाशः तस्य च मित्रलाभः मित्रस्य तल्लाभश्चेति समेतसैन्यः कृच्छ्रे सङ्कटप्राप्तौ अतः भोग्यः उपजीव्यः वशोऽनु-कूल इति ॥ ४७ ॥ ज० म०

रामस्य सुनीतित्वं दर्शयितुमिदमुच्यते

त्वन्मित्रेत्यादि । पश्य निरूपय शरेण वालिवधे सति शत्रो रामस्य कोऽर्थो न प्रसाधितः न सम्पादितः अपि तु सर्व एव प्रथमं त्वन्मित्रस्य वालिनो नाशः निजमित्रस्य सुग्रीवस्य लाभः प्राप्तिः स चेति बुद्धिस्थं परा-मृशति मित्रस्य क्लीवत्वात् किंवा लाभ इति कर्मणि घञ् मित्रस्य तल्लाभ-

लोभाद्भयाद्वाभिगतः कपीन्द्रो न राघवं येन भवेद्विभेद्यः ।
स्थितः सतां वर्त्मनि लब्धराज्यः प्रतिप्रियं सोऽभ्यगमच्चिकीर्षुः ४८

फलाशिनो निर्झरकुञ्जभाजो दिव्याङ्गनानङ्गरसानभिज्ञाः ।
न्यग्जातयो रत्नवरैरलभ्या मुख्याः कपीनामपि नोपजप्याः ४९॥

श्चेति समासः सच मित्ररूपो लाभः मित्रस्य रामस्य कृच्छ्रे व्यसने समेतसैन्यः भोग्यः उपजीव्यः वशोऽनुकूलः ॥ ४७ ॥ भ०

तं विभिद्य साधयिष्यामीति चेदाह

लोभादित्यादि । क्रुद्धलुब्धभीतावमानितास्त्वारो भृत्याः परस्य भेद्याः तत्र कपीन्द्रो राघवं लोभाद्भयाद्वा त्रासाद्वा नाभिगतः येन हेतुनाऽयं विभेद्यः स्यात् यस्मादसौ सतां मार्गे स्थितः सन् लब्धराज्यो लाभरतः प्रतिप्रियं चिकीर्षुः ॥ ४८ ॥ ज० य०

अनेन मित्रभेदं कृत्वा तं जेष्यामीत्याशङ्क्येदमुच्यते

लोभादित्यादि । क्रुद्धलुब्धभीतापमानितास्त्वारो भेद्या भवन्ति तत्र कपीन्द्रः सुग्रीवः सम्प्रति लोभाद्भयाद्वा राघवं रामं नाभिगतो येन लोभ्यमानो भीतो वा सन् विभेद्यो भेदार्हो भेत्तुं शक्यो वा भवेत् तेत्याः शक्यार्हे इति ण्यत् स कपीन्द्रः प्राप्तराज्यः साध्वाचारत्वात् सतां मार्गे धर्मे स्थितः सन् प्रतिप्रियं प्रत्युपकारं कर्त्तुमिच्छुरभ्यागमत् राममभिगतः लब्धराज्यत्वेन निर्लोभत्वं रामाभिगमेन निर्भयत्वं क्रोधोऽपमानश्चासम्भवान्नोक्तः ॥ ४८ ॥ भ०

तदनुजीविनोऽपि न भेद्या इति दर्शयति

फलाशिन इत्यादि । कपीनामपि मुख्या नीलकुमुदादयोऽपि नोपजप्याः नोपजपितुं शक्याः यतः फलाशिनो मिष्टान्ननिरपेक्षाः निर्झरकुञ्जभाजः न रम्यप्रासादवासिनः दिव्याङ्गनानङ्गरसानभिज्ञाः दिव्याङ्गनासु योऽनङ्गरसः सुरतरसः तदनभिज्ञा न्यग्जातयः न्यञ्चन्तीति ऋत्विगित्यादिना क्विन् ॥ ४९ ॥ ज० म०

कृताभिषेको युवराजराज्ये सुग्रीवराजेन सुताविशेषम् ।
ताराविधेयेन कथं विकारं तारासुतो यास्यति राक्षसार्थम् ॥५०॥
पश्यामि रामादधिकं समं वा नान्यं विरोधेऽन्यमुपाश्रयेम ।

तदनुजीविनोऽपि न भेद्या इति दर्शयन्नाह

फलाशिन इत्यादि । कपीनां मुख्याः श्रेष्ठा हनूमन्नीलकुमुदादयो न उपजप्या न भेदार्हा भेत्तुं न शक्या वा यतः फलाशिनः मिष्टान्न-निरपेक्षाः निर्झरकुञ्जभाजः न सुवासितजलप्रासादसेविनः दिव्याङ्गनासु योऽनङ्गरसः कामभोगस्तदनभिज्ञाः न्यगजानयस्तिर्यग्योनयः अतएव रत्नवरैः इन्द्रनीलपद्मरागादिभिरपि न लभ्याः अपि शब्दः पूर्वश्लोका-पेक्षया ॥ ४९ ॥ भ०

युष्मन्मित्रपुत्त्रोऽङ्गदोऽप्यभेद्य इति दर्शयन्नाह

कृतेत्यादि । सुग्रीवराजेन ताराविधेयेन ताराचित्तानुवर्त्तिना तारा-सुतोऽङ्गदः यौवराज्ये कृताभिषेकः सुताविशेषमिति क्रियाविशेषणं सुत-निर्विशेषं ममैवायं सुतो न वालिन इति तत्कथं राक्षसार्थं विकारं भेदं यास्यति नैवेत्यर्थः ॥ ५० ॥ ज० म०

अस्मन्मित्रपुत्त्रोऽङ्गदः पितृवधामर्षात् राज्यलोभाच्च भेद्यः अन्योऽपि कपयस्तत्सेवका एवेत्याशङ्क्येदमुच्यते

कृतेत्यादि । तारासुतोऽङ्गदः कथं राक्षसार्थं राक्षसहेतुकं राक्षस-प्रीत्यर्थं वा विकारं भेदं यास्यति यतः सुताविशेषं यथा स्यात्तथा सुग्रो-वराजेन युवराजराज्ये कृताभिषेकः कीदृशेन सुग्रीवराजेन ताराविधेयेन ताराचित्तानुवर्त्तिना एतेन लब्धैश्वर्य्यत्वात् सुग्रीवायत्ततया मातुरधीन-त्वाच्चाभेद्य एवायमिति दार्ढ्यं प्रतिपादितं सुतोऽविशेषो यत्रेत्यभिषेक-क्रियाविशेषणं ममैवायं पुत्त्रो न वालिन इत्येवंरूपेणेत्यर्थः-विधेयो विन-यग्राहीत्यमरः । अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु । प्रयोजने निवृत्तौ च विषये च प्रवर्त्तते ॥ ५० ॥ म०

अन्यसमाश्रयादपि रामेण विग्रहो न युज्यत इति दर्शयन्नाह

दत्त्वा वरं सानुशयः स्वयम्भूरिन्द्रादयः पूर्वतरं विरुद्धाः ॥ ५१ ॥
दुर्गाश्रितानां बहुनापि राजन्! कालेन पार्ष्णिग्रहणादिहेतुः ।
दुर्गोपरोधं न च कुर्वतोऽस्ति शत्रोश्चिरेणापि दशास्य हानिः॥५२॥

पश्यामीत्यादि । रामादधिकं ज्यायांसं समानं वा न पश्यामि यं विरोधे विग्रहनिमित्तमुपाश्रयेम आश्रयं गच्छेम संप्रश्ने लिङ् स्वयम्भूर्ब्रह्मा तावन्नाश्रयः यतो वरं दत्त्वा सानुशयः विप्रतीसारवान् जातः किमिदमकार्य्यमनुष्ठितं मयेति इन्द्रादयस्तु पूर्वतरं विरुद्धाः ॥ ५१ ॥
अन्यमाश्रित्य रामं जेष्यामीत्यत्रेदमुच्यते
पश्यामीत्यादि । रामादधिकं श्रेष्ठं समं तुल्यं वा अन्यं न पश्यामि विरोधे विग्रहनिमित्तं यमुपाश्रयेम आश्रयं गच्छेम विधिनिमन्त्रणेत्यादिना संप्रश्ने लिङ् तर्हि देवा एवाश्रीयन्तामित्यत आह स्वयम्भूर्ब्रह्मा वरं दत्त्वा सानुशयः पश्चात्तापान्वितः किमिदमकार्य्यं मया कृतमिति अन्ये इन्द्रादयो देवाः पूर्व्वकालमेव विरुद्धा व्यरोधयन्त ॥ ५१ ॥ भ०
एवं दुर्गसमाश्रयोऽपि न युज्यत इति दर्शयन्नाह
दुर्गेत्यादि । दुर्गाश्रितानामस्माकं दुर्गोपरोधं कुर्व्वतः शत्रोर्बहुनापि कालेन हे राजन्! पार्ष्णिग्रहणादेः आदिशब्दादाटविकान्तपालादिप्रकोपस्य हेतुर्नास्ति यद्वशादुपरोधो न भविष्यति अतः स्थितानां क्षय एव केवलं न च शत्रोरुपरोधं कुर्व्वतः चिरेणापि हानिः ॥ ५२ ॥ ज० म०
दुर्गमाश्रित्य रामं वञ्चयिष्यामि इत्यत्रेदुच्यते ।
दुर्गाश्रितानामित्यादि । हे राजन्! हे दशास्य! दुर्गमाश्रितानामप्यस्माकं बहुनापि कालेन पार्ष्णिग्रहणमित्रोद्यमादिरूपो हेतुरस्ति तस्मात् दुर्गस्थितानामपि क्षय एव यद्वा दुर्गाश्रितानामप्यस्माकं पार्ष्णिग्रहणादिहेतुका हानिरवश्यं बहुनापि कालेन भविष्यति अगदैरित्यादस्माकमस्मिन्नवसरे अन्योऽपि पार्ष्णिग्राहादयो हानिं करिष्यन्तीत्यर्थः । पार्ष्णिः स्याद्दुर्गमस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादपाश्र्वे धनेऽपि चेति कोषः । अस्मद्दुर्गोपरोधं कुर्व्वतस्तु शत्रोश्चिरेणापि कालेन न हानिरीप-

शस्त्रं तरूर्वीधरमम्बु पानं वृत्तिः फलैर्नो गजवाजिनार्थैः ।
राष्ट्रं न पश्चान्न जनोऽभिरक्ष्यः किं दुःस्थमाचक्ष्व भवेत्परेषाम् ५३

सन्धानमेवास्तु परेण तस्मात् नान्योऽभ्युपायोऽस्ति निरूप्यमाणः ।
नूनं विसन्धौ त्वयि सर्वमेतन्नेष्यन्ति नाशं कपयोऽचिरेण ॥ ५४ ॥

क्षयो भविष्यति अस्मदतिरिक्तस्य तद्वैरिणोऽसत्वात् अतो दुर्गाश्रयोऽपि न युज्यते ॥ ५२ ॥ भ०

युद्धशरीरोपयोगिनां सर्व्वदा सम्भवात् तदेव दर्शयन्नाह

शस्त्रमित्यादि । तरवश्च उर्व्वीधराश्चेति जातिरप्राणिनामिति एकवद्भावः तच्छस्त्रं न स्थूलखड्गादि पानमम्बु न मैरेयादि फलैर्वृत्तिर्नौदनादिभिः नो गजवाजिनार्थ्यैः शरीरमात्रत्वान्निश्चिन्ताः राष्ट्रं देशो न पश्चात् अतएव तत्स्थो जनो नाभिरक्ष्यः एवं च सति परेषां किं दुःस्थं इत्याचक्ष्व कथय ॥ ५३ ॥ ज० म०

परेण युद्धोपयोगिनो वस्तुनः क्षयात्तेषामपि कथं न हानिरित्यत आह उच्यते

शस्त्रमित्यादि । तरूर्व्वीधरं वृक्षपर्व्वतं सर्व्वेषां सुग्रीवादीनां शस्त्रं न खड्गादि तरवश्च उर्व्वीधराश्चेति समाहारद्वन्द्वः अप्राणिजातित्वात् समाहार इति परः । शस्यते हन्यते अनेनेति शस्त्रं ङशसृवचे त्राडिति त्रः अम्बु जलं पानं पेयं न मद्यादि पीयते इदमिति कर्म्मणि अनट् फलैर्वृत्तिर्जीविका नौदनादिभिः हस्तिनोऽश्वाः स्त्रियश्च न सन्ति अतः शरीरमात्रत्वान्निश्चिन्ताः राष्ट्रं देशोऽपि न पश्चादस्ति अतएव अतस्थो जनोऽपि रक्षणीयो नास्ति यदर्थं देशगमनं स्यात् एवं सति परेषां सुग्रीवादीनां किं दुःस्थं भवेत् तदाचक्ष्व कथय एतद्विपरीतमस्माकं सर्वमिति भावः ॥ ५३ ॥ भ०

अतो रामेण ज्यायसा सन्धिरेवास्तु न विग्रह इति तदेव दर्शयन्नाह

सन्धानमित्यादि । तस्मात्परेण सन्धिरेवास्तु अन्य उपायो नास्ति अन्यथा त्वयि विरुद्धबुद्धौ सर्व्वं कपयो विनाशयिष्यन्तीति ॥ ५४ ॥ ज० म०

सन्धानमित्यादि । तस्मात् पूर्व्वोक्तकारणात् परेण रामेण सह सन्धि-

विभीषणोक्तं बहु मन्यमानः प्रोन्नम्य देहं परिणामनम्रम् ।
स्खलद्वलिर्वार्द्धककम्प्रमूर्द्धा मातामहो रावणमित्युवाच ॥ ५५ ॥
एकः पदातिः पुरुषो धनुष्मान् योऽनेकमायानि वियद्गतानि ।
रक्षःसहस्राणि चतुर्दशाहींत् का तत्र वो मानुषमात्रशङ्का ॥५६॥

देव भवतु निरूप्यमाणः चिन्त्यमानोऽन्योऽस्य्युपायो नास्ति त्वयि विसन्धौ सन्धिमकुर्वाणे सति एतत्सर्वं स्वाम्यादिकं कपयोऽचिरेणैव कालेन नाशं नेष्यन्ति प्रापयिष्यन्ति ॥ ५४ ॥ भ०

विभीषणोक्तमित्यादि । बहु मन्यमानः श्लाघमानो मातामहो मातुः पिता माल्यवान्नाम देहं परिणामनम्रं वयसः परिणामान्नमनशीलं प्रोन्नम्योत्क्षिप्य अतएव स्खलद्वलिः वार्द्धकेन वृद्धभावेन मनोज्ञादित्वात् वुञ् कम्प्रः कम्पनशीलो मूर्द्धा यस्य सः रावणमिति वक्ष्यमाणमुवाच ॥ ५५ ॥ ज० म०

विभीषणोक्तमित्यादि । विभीषणस्योक्तं वाक्यं बहु मन्यमानः श्लाघमाना मातामहो माल्यवान् देहं प्रोन्नम्य उत्क्षिप्य रावणमिति वक्ष्यमाणमुवाच कीदृशं देहं परिणामनम्रं वयसः परिणामाद्वार्द्धकान्नमनशीलं स कीदृशः स्खलद्वलिः देहोत्क्षेपात् स्खलन्ती वलिर्जराश्लथं चर्म यस्य वलिस्त्वामरदृष्टे स्यात् जरसा श्लथचर्म्मणि । वार्द्धकेन वृद्धत्वेन कम्प्रः कम्पनशीलो मूर्द्धा मस्तको यस्य नमिकम्पिस्म्यजसकमहिंसदीपेत्यादिना रः कम्पमूर्द्धेति पाठे कम्पते कम्प इति पचादित्वादच् वृद्धस्य भावो वार्द्धकं विकारसङ्घेति कण् णित्वेन्निरिति निः मातुः पितेत्यर्थे मातृपितृभ्यां तत्पितरि डामहोऽभिधानात् ॥ भ० ॥

एक इत्यादि । एकः असहायः पदातिः न हस्त्याद्यारूढः पुरुषो मनुष्यः धनुष्मान् धनुर्मात्रायुधः चतुर्दश रक्षःसहस्राणि अनेकमायानि वियद्गतानि प्रयातुमशक्यानि परेषामित्यर्थात् आहींन् हिंसितवान् का तत्र वः युष्माकं मानुषमात्रशङ्का नैवेत्यर्थः ॥ ५६ ॥ ज० म०

एक इत्यादि । यो रामो राक्षसानां चतुर्दशसहस्राण्यार्दीत् जघान

ब्रह्मर्षिभिर्नूनमयं सदेवैः सन्तापितै रात्रिचरक्षयाय ।
नराकृतिर्वानरसैन्यशाली जगत्यजय्यो विहितोऽभ्युपायः ५७
वज्राभिघातैरविरुग्णमूर्त्तेः फेणैर्जलानामसुरस्य मूर्द्धः ।
चकार भेदं मृदुभिर्महेन्द्रो यथा तथैतत्किमपीति बोध्यम् ॥५८॥

तत्र वो युष्माकं का मानुषमात्रशङ्का मनुष्योऽयमिति को वितर्कः नैवेत्यर्थः कीदृशः एकः असहायः तत्रापि पदातिः न हस्त्यश्वाद्यारूढः पुरुषः मनुष्यो न देवादिः धनुष्मान् धनुर्मात्रायुधः कीदृशानि अनेकमायानि बहुकपटयुक्तानि वियद्गतानि आकाशे स्थितत्वात् हन्तुमशक्यानि सहस्र-संख्यासंख्यामात्रवाचित्वेऽपि परम्परया गुणगुणिनोरभेदविवक्षया वा हननकर्मत्वं चतुर्दशसहस्रावच्छिन्नरक्षांसि आर्द्रीदित्यर्थः ॥ ५६ ॥ म०

किन्तु दिव्योऽसाविति तदेव दर्शयन्नाह

ब्रह्मेत्यादि । सदेवैर्ब्रह्मादिभिः सन्तापितैः रात्रिचरक्षयाय नूनमयं राम उपायो विहितः उत्पादितः नराकृतिः आकृत्यैव केवलं नरः वानर-सैन्यशाली आद्यः अजय्यो जेतुमशक्यः ॥ ५७ ॥ ज० म०

यदि न मानुषमात्रं तर्हि कीदृशोऽयमित्यत्र भेद उच्यते

ब्रह्मर्षिभिरित्यादि । ब्रह्मर्षिभिर्व्यासवसिष्ठादिभिः रात्रिचराणां राक्षसानां क्षयाय नाशाय नूनमयं रामोऽभ्युपायो विहितः कृतः कीदृशैः सदेवैर्देवतासहितैः सन्तापितैः पीडितैस्त्वयेत्यर्थात् उपायविधाने बीजमिदं कीदृशो नराकृतिः मनुष्यरूपी देवविशेषः वानरसैन्येन युक्तः शोभमान इति विद्यासागरः जगति अजय्यः जेतुं न शक्यः ॥ ५७ ॥ म०

दृष्टश्चैवम्प्रकारो देवानां मयेति दर्शयन्नाह

वज्रेत्यादि । असुरस्य नमुचेः वज्राभिघातैरपि अविरुग्णमूर्त्तेः अचूर्णित-शरीरस्य सम्बन्धिनो मूर्द्धो जलफेणैर्मृदुभिः भेदं चकार यथा तथेदमपि शमे स्थितानामपि देवानां नराकृति वस्तु किमपीति बोद्धव्यम् ॥ ५८ ॥ ज० म०

दृष्टश्चैवंविधप्रकारो देवानामिति दर्शयितुमिदमुच्यते

क्व स्त्रीविसह्याः करजाः क्व वक्षो दैत्यस्य शैलेन्द्रशिलाविशालम्।
सम्पश्यतैतत् द्युसदां सुनीतं बिभेद तैस्तन्नरसिंहमूर्त्तिः ॥५९॥
प्रमादवांस्त्वं चतधर्म्मवर्त्मा गतो मुनीनामपि शत्रुभावम्।
कुलस्य शान्तिं बहु मन्यसे चेत् कुरुष्व राजेन्द्र ! विभीषणोक्तम् ६०

वज्रेत्यादि। वज्रस्याभिघातैरपि अविरुग्णमूर्त्तेरभग्नावयवस्य असुरस्य नमुचिनाम्नः सम्बन्धिनो मूर्द्धो मस्तकस्य भेदं छेदं उदभिरपि जलानां फेणैः महेन्द्रश्चकार यथा तथा इदमपि नराकृति किमपि वस्तु देवानामपि बोध्यं त्रेयं भवद्भिरित्यर्थात् ॥ ५८ ॥ भ०

अन्यथा कथं फेणपिण्डैर्विनाश इत्याह

क्व स्त्रीत्यादि। स्त्रीविषह्याः स्त्रीभिः सोढुं शक्याः करजा नखाः क्व दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलाविशालं वक्षः क्व च वक्षःकरजयोरपि दूरमन्तरं तथापि द्युसदां देवानां एतत् सुनीतं सुनयं सम्पश्यत यत् तैर्नखैर्नरसिंहमूर्त्तिः तद्वक्षो बिभेद ॥ ५९ ॥ ज० म०

क्व स्त्रीत्यादि। क्व स्त्रीभिरपि विशेषेणाकष्टेन सोढुं शक्याः करजा नखाः क्व दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलावद्विशालं वक्षश्च क्व अत्यन्तासम्भवे क्वद्वयं तथापि द्युसदां देवानामेतत् सुनीतं सुनयं यूयं पश्यत यतस्तैः करजैस्तद्वक्षो नरसिंहमूर्त्तिर्देवो बिभेद तद्वन्मनुष्योऽपि राक्षसान् हनिष्यतीति भावः दितेरपत्यमिति वाक्याद्यतोऽत्यावादेरित्यादिना गर्गादित्वात् ष्ण्यः ॥ ५९ ॥ भ०

यत्रैवमुपायेन दैवैर्निहन्यते तत्र त्वं कथं प्रमादी भुह्यसीत्याह

प्रमादवानित्यादि। त्वं यतः प्रमादी अजितेन्द्रियत्वात् चतधर्म्मवर्त्मा त्यक्ताचारः अतो मुनीनामपि शमे स्थितानां शत्रुत्वं गतः ईदृशोऽपि कुलस्य शान्तिं बहु मन्यसे चेत् स्लाघसे यदि हे राजेन्द्र ! कुरुष्व विभीषणोक्तम् ॥ ६० ॥ ज० म०

प्रमादवानित्यादि। हे राजेन्द्र ! कुलस्य शान्तिं कल्याणं त्वं चेत् यदि बहु मन्यसे तदा विभीषणोक्तं कुरुष्व कीदृशस्त्वं प्रमादवान् अनवधानस्त्वम-

घोषेण तेन प्रतिलब्धसंज्ञो निद्राविलाक्षः श्रुतकार्य्यसारः ।
स्फुरन्घनः साम्बुरिवान्तरीक्षे वाक्यं ततोऽभाषत कुम्भकर्णः ॥ ६१
क्रियासमारम्भगतोऽभ्युपायो नृद्रव्यसम्पत्सहदेशकाला ।
विपत्प्रतीकारयुतार्थसिद्धिर्मन्त्राङ्गमेतानि वदन्ति पञ्च ॥ ६२ ॥

धर्मपथोऽजितेन्द्रियत्वात् मुनीनां समदर्शिनामपि शत्रुत्वं प्राप्तः यदैव दैवैरुपायेन हिरण्यकशिपुप्रभृतयोऽपि हन्यन्ते स्म तदा प्रमादिनस्ते कथं रक्षा स्यादिति भावः ॥ ६० ॥ भ०

घोषेणेत्यादि । प्रहस्तविभीषणमातामहानां वदतां यो घोषः तेन प्रतिलब्धसंज्ञो विबुद्धः कुम्भकर्णो निद्राविलाक्षः निद्रया कषायितचक्षुः श्रुतकार्य्यसारः श्रुतकार्य्यशरीरः ततः कार्य्यसारश्रवणानन्तरं वाक्यमभाषत यथा घनः साम्बुः सजलोऽन्तरीक्षे वियति स्फूर्ज्जति तद्वत् स्फूर्ज्जन्निति ॥ ६१ ॥ ज० म०

घोषेणेत्यादि। ततो मातामहवचनानन्तरं कुम्भकर्णो वाक्यं वक्ष्यमाणमभाषत उक्तवान् सजलो मेघ इव अन्तरीक्षे स्फुरन् अत्युच्चत्वादासनस्यान्तरीक्षतुल्यत्वाद्वा तेन प्रहस्तविभीषणमातामहानां घोषेण शब्देन प्रतिलब्धसंज्ञः विबुद्धः अतएव निद्राविलाक्षः निद्रया कलुषीकृतचक्षुः श्रुतकार्य्यसारः अवगतकार्य्यसारः ॥ ६१ ॥ भ०

कार्य्यं निश्चित्य सदसि भाषणानि न पञ्चाङ्गमन्त्रं विनेति साङ्गं तं तावदुपदर्शयन्नाह

क्रियेत्यादि । क्रियाणां दुर्गादिकर्म्मणां यः समारम्भस्तं गतः प्राप्तो योऽभ्युपायः कर्म्मणामारम्भोपाय इत्यर्थः इदमेकमङ्गं नृद्रव्यसम्पत् पुरुषाणां द्रव्याणाञ्च सम्पदिति द्वितीयं द्वयोरप्येकवचनं योगवाहित्वज्ञापनार्थं सहदेशकालेति यस्मिन् देशे काले च कार्य्यसिद्धिस्ताभ्यां सह वर्त्तत इति तृतीयं अत्रापि सहवचनं योगादेव कर्म्मणामनुष्ठीयमानानां या विपत्तस्याः प्रतीकारस्तेन युक्तेति चतुर्थं अर्थसिद्धिः कार्य्यसिद्धिरिति पञ्चमं एतानि पञ्च मन्त्रस्याङ्गानि वदन्ति नीतिज्ञाः ॥ ६२ ॥ ज० म०

न निश्चितार्थं समयञ्च देशं क्रियाभ्युपायादिषु योऽतियायात् ।
स प्राप्नुयान्मन्त्रफलं न मानी काले विपन्ने क्षणदाचरेन्द्र ! ॥६२॥
औष्ण्यं त्यजेन्मध्यगतोऽपि भानुः शैत्यं निशायामथवा हिमांशुः ।

मन्त्रणां विना कथनमयुक्तमिति साङ्गं मन्त्रमुपदिशति

क्रियेत्यादि । एतानि पञ्च मन्त्राङ्गं वदन्ति नीतिविदः क्रियाणां दुर्गादिकर्मणां यः समारम्भस्तद्गतस्तत्सम्बन्धी योऽभ्युपायः येन कर्मारम्भो भवतीत्येकमङ्गं न्तथां मनुष्याणां द्रव्याणाञ्च सम्पदिति द्वितीयं द्वयोः सहकथनं परस्परोपयोगसूचनार्थं सहदेशकाला देशकालाभ्यां सहिता सम्पदित्यन्वयः तेन यस्मिन् देशे यस्मिन् काले च सिद्धिस्तदुभयविशिष्टं तृतीयम् अत्र सहवचनं योगवहित्वसूचनाय अनुष्ठीयमानानां कर्म्मणां या विपत् तस्या यः प्रतीकारः तेन युक्ते सति चतुर्थम् अस्य कार्यस्य सिद्धिरिति पञ्चमं मन्त्राङ्गमित्येकवचनेन मिलितानामेषामङ्गत्वं न तु प्रत्येकमिति सूच्यते सामान्यविशेषभाव इत्यन्ये ॥ ६२ ॥ भ०

न निश्चितेत्यादि । विनिश्चितार्थोऽवश्यं सिध्यतीति यस्मिन् समये काले देशे च कार्य्यसिद्धिः तादृशं समयं देशं च यो विजिगीषुर्नातियायात् नातिक्रामेत् प्रतिषेध्यस्य द्वित्वात् प्रतिषेधद्वयं योज्यं समयं च देशमिति पाठान्तरे समुच्चयेनैक एव योज्यः क्रियाभ्युपायादिषु सत्सु आदिशब्दात् पुरुषद्रव्यसंपद्विपत्प्रतीकारे च स प्राप्नुयान्मन्त्रफलं हे क्षणदाचरेन्द्र ! न पुनर्मानी भवादृशः काले विपन्ने प्राप्नोति स हि देशकालौ ह्रापयति ॥ ६२ ॥ ज० म०

न निश्चितार्थमित्यादि । क्रियाभ्युपायादिषु मध्ये निश्चितार्थं निश्चितोऽर्थोऽवश्यं सिध्यति यस्मिन् समये काले देशे च तादृशं समयं कालं देशञ्च यो जिगीषुर्नातियायात् नातिक्रामेत् हे राक्षसेन्द्र ! स एव मन्त्रफलमर्थसिद्धिं प्राप्नुयात् न पुनर्मानी भवादृशः काले विपन्नेऽतिक्रान्ते सति प्राप्नोति यदैव सीताहरणं कर्त्तुमिष्टं तदैव मन्त्रणा युक्ता मानित्वान्न कृता संप्रति किं मन्त्रेण साध्यमिति भावः ॥ ६२ ॥ भ०

औष्ण्यमित्यादि । हे पिशिताशिनाथ ! भानुर्मध्यगतोऽपि मध्याह्नेऽपि

अनर्थमूलं भुवनावमानी मन्ये न मानं पिशिताशिनाथ ! ॥६४॥
तथापि वक्तुं प्रसभं यतन्ते यन्मद्विधाः सिद्धिमभीप्सवस्त्वाम् ।
विलोमचेष्टं विहितावहासाः परैर्हि तत् स्नेहमयैस्तमोभिः ॥६५॥

औष्ण्यम् उष्णतां त्यजेत् सूर्य्यवर्ने लिङ् अथवा हिमांशुर्निशायामपि शैत्यं त्यजेत् भुवनावमानी पुनर्भुवनमवमन्तुं शीलमस्येति नास्ति मत्सम इति स भवादृशो मानं न त्यजेत् अनर्थमूलम् अनर्थस्य कारणम् एवं मन्ये जानामि ॥ ६४ ॥ ज० म०

औष्ण्यमित्यादि । हे पिशिताशिनाथ राक्षसानामीश्वर ! भानुर्नभोमध्ये गतोऽपि मध्याह्नस्थितोऽपि वा उष्णतां त्यजेत् अथवा हिमांशुश्चन्द्रो निशायामपि शीतत्वं त्यजेत् सम्भावने स्त्री कदाचिदेवमपि सम्भाव्यते न तु भुवनावमानी जगदवज्ञाशीलो भवादृशः अनर्थस्य मूलं कारणं त्यजेदित्यहं मन्ये एतेन संप्रत्यपि सीतासमर्पणादेव रक्षा तच्च त्वया मानिना कदापि न कार्य्यमिति भावः भुवनान्यवमन्यत इति ग्रहादित्वात्सिन् भुवनान्यवमन्तुं शीलं यस्येति परः ॥ ६४ ॥ भ०

तथापीत्यादि । तथापि एवमपि सति मद्विधा सिद्धिं कार्य्यनिष्पत्तिमभीप्सवः आप्तुमिच्छाशीलाः यत्त्वां विलोमचेष्टं प्रतिकूलचेष्टितं प्रसभमाहत्य वक्तुं यतन्ते परैः दूरजनैः शत्रुजनैर्वा विहितावहासा एवंविधा अप्युपदिशन्तीति वाशब्दः पादपूरणे तत् स्नेहमयैः स्नेहस्वभावैस्तमोभिरज्ञानैः स्नेहतमसाहृता भवन्तीत्यर्थः ॥ ६५ ॥ ज० म०

तथापीत्यादि । यद्यपि त्वमेवंविधस्तथापि कार्य्यस्य सिद्धिं प्राप्तुमिच्छवो मद्विधा विभीषणादयः परैरस्मदुक्तावज्ञापरैः प्रहस्तादिभिः शत्रुभिर्वा विहितावहासाः कृतोपहासा अपि सन्तः विलोमचेष्टं प्रतिकूलकारिणं त्वां प्रसभं बलाद्वक्तुं यत् यतन्ते तत् स्नेहमयैः स्नेहरूपैस्तमोभिरज्ञानैर्हेतुभिरेव स्नेहादेवमपि त्वां वक्तुं यतन्ते इत्यर्थः यद्वा यतो वक्तुं यतन्ते तस्मात् स्नेहमयैस्तमोभिरुपलक्षिता इत्यर्थः हिशब्दोऽवधारणे पादपूरणे इत्यन्ये ॥ ६५ ॥ भ०

क्रूराः क्रिया ग्राम्यसुखेषु सङ्गः पुण्यस्य यः संचयहेतुरुक्तः ।
निषेवितोऽसौ भवतातिमात्रं फलत्यवल्गु ध्रुवमेव राजन् ! ॥६६॥
दत्तं न किं के विषया न भुक्ताः स्थितोऽस्मि वा कं परिभूय नोच्चैः ।
इत्थं कृतार्थस्य मम ध्रुवं स्यान्मृत्युस्त्वदर्थे यदि किन्न लब्धम् ॥६७

क्रूरा इत्यादि । क्रूराः क्रियाः परहिंसादयः ग्राम्यसुखेषु परदारोपभोगादिषु सङ्गः प्रसक्तिः यः पुण्यस्यार्ज्जितस्य संचयहेतुरुक्तः विद्वद्भिः असौ भवतातिमात्रं सुष्ठु निषेवितः सन् हे राजन्निदानीं फलति फलं ददाति अवल्गु असारं ध्रुवमविनाशम् ।, ६६ ॥ ज० म०

क्रूरा इत्यादि । क्रूराः क्रिया हिंसात्मिका ग्राम्यसुखेषु परदारोपभोगादिषु सङ्ग आसक्तिरिति पुण्यस्य संचयहेतुर्विनाशकारणं य उक्तो वेदविद्भिः असौ भवता अतिमात्रमत्यर्थं निषेवितः सन् हे राजन् ! अवल्गु अमनोहरं कुलक्षयं ध्रुवमेव फलति अवल्गु यथा स्यात्तथा फलति फलं दास्यतीति वा भविष्यत्सामीप्ये की अभिधानात् ॥ ६६ ॥ भ०

तस्माद्विलोमचेष्टस्य भवतो हितोपदेशे मम न किञ्चित् प्रयोजनं तावत्तु स्यात् त्वदर्थे मत्प्राणत्याग इति दर्शयन्नाह

दत्तमित्यादि । तव प्रसादादर्थिभ्यः किं न दत्तं के विषया न भुक्ताः सर्वे एवानुभूताः कं वा परिभूय तिरस्कृत्य उच्चैर्महति पदे न स्थितोऽस्मि इत्यमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युरवश्यं स्यात् तदा किन्न लब्धं सर्वमेव जन्मफलं लब्धमित्यर्थः ॥ ६७ ॥ ज० म०

किं विलोमचेष्टस्य भवतो ममोपदेशेन त्वदर्थे प्राणा एव त्याज्या इति दर्शयितुमिदमुच्यते

दत्तमित्यादि । किं न दत्तं बन्धुयाचकादिभ्यो मया अपि तु सर्वं दत्तं तव प्रासादादिति वाक्यशेषः किंवा त्वया मह्यं किं न दत्तमपि तु सर्वं दत्तमेव के विषयाः स्रक्चन्दनादयो मया न भुक्ता अपि तु सर्व एवोपभुक्ताः किंवा उच्चैर्महत्वस्तु परिभूय न स्थितोऽस्मि किंवा परिभूय उच्चैर्महति पदे न स्थितोऽस्मीति वा कं वेति पाठे जनमिति शेषः अपि तु सर्व-

किं दुर्नयैस्त्वय्युदितैर्मृषार्थैर्वीर्य्येण वक्तास्मि रणे समाधिम् ।
तस्मिन् प्रसुप्ते पुनरित्थमुक्त्वा विभीषणोऽभाषत राक्षसेन्द्रम् ॥ ६८॥
निमित्तशून्यैः स्थगिता रजोभिर्दिशो मरुद्भिर्विकृतैर्विलोलैः ।
स्वभावहीनैर्मृगपक्षिघोषैः क्रन्दन्ति भर्त्तारमिवाभिपन्नम् ॥ ६९॥

मेव तिरस्कृत्य स्थितोऽस्मीत्यर्थः इत्थमनेन प्रकारेण कृतार्थस्य लब्धजन्म-फलस्य मम यदि त्वदर्थे मृत्युर्ध्रुवमवश्यं स्यात्तदा किं न लब्धं सर्वमेव फलं प्राप्तमिति भावः ॥ ६७ ॥ भ०

तत्र पुनरद्यापि विभीषणोक्तं युक्तं न प्रहस्तमुखोक्तमिति दर्शयन्नाह

किं दुर्नयैरित्यादि । त्वय्यपि स्थिते किं धीरधोऽस्मित्यादिना यान्यु-दितान्ययुक्तानि अलीकार्थानि तैर्दुर्नयैः किं न किञ्चित् फलं कस्मादिति चेत् यस्मात्तेषां समाधिं प्रतीकारं संग्रामे रामसम्बन्धिना वीर्य्येण वक्तास्मि वदिताहं रामवीर्य्यं प्रतीकाराद्वीत्यर्थः इत्यमेवं तस्मिन् कुम्भकर्णे उक्त्वा पुनः भूयः प्रसुप्ते सति विभीषणो राक्षसेन्द्रमभाषत ॥ ६८ ॥ ज० म०

किं दुर्नयैरित्यादि । प्रहस्तादीनामुदितैर्वाक्यैः किं धीरधोऽस्मित्या-दिभिर्मृषार्थैर्व्यर्थैर्दुर्नयैर्नीतिरहितैस्त्वयि विषये किं फलं यतस्तेषां वाक्या-नां समाधिं प्रतीकारं रणे रामसम्बन्धिना वीर्य्येणाहं वक्तास्मि वदितास्मि रामविक्रमेणैतद्वचनानां मिथ्यात्वं द्रक्ष्यसि अतो विभीषणवचनमेवो-चितं न प्रहस्तादिवचनमित्यर्थः । इत्थमेवमुक्त्वा तस्मिन् कुम्भकर्णे प्रसुप्ते निद्रिते सति विभीषणो राक्षसेन्द्रं पुनरभाषत ॥ ६८ ॥ भ०

निमित्तशून्यैरित्यादि । रजोभिर्निमित्तशून्यैः निर्निमित्तैः दिशः स्थगिताः सञ्छादिताः स्थगसंवरणे मरुद्भिश्च विकृतैः परुषैर्विलोलैर-नियतदिग्वर्त्तिभिः स्थगिताः मृगपक्षिणाञ्च घोषैः स्वभावहीनैर्दुष्टैर्भर्त्ता-रमिवाभिपन्नं हतं शोकात् क्रन्दन्ति ॥ ६९ ॥ ज० म०

सम्प्रति रावणस्य भयोत्पादनार्थं दुर्निमित्तं कथ्यते

निमित्तेत्यादि । दिशः स्वभावाद्धीनैर्विकृतैर्मृगाणां पक्षिणाञ्च घोषैः शब्दैः अभिपन्नं हतं भर्त्तारं शोकात् क्रन्दन्ति इव कीदृश्यो दिशः

उत्पातजं छिद्रमसौ विवस्वान् व्यादाय वक्त्राकृति लोकभीष्मम् ।
अत्तुं जनान् धूसररश्मिराशिः सिंहो यथा कीर्णसटोऽभ्युदेति ७०
मार्गं गतो गोत्रगुरुर्भृगूणामगस्तिनाध्यासितविन्ध्यशृङ्गम् ।
संद्रक्ष्यते शक्रपुरोहितोऽह्नि क्ष्मां कम्पयन्त्यो निपतन्ति चोल्काः ७१

निमित्तशून्यैः प्राणिव्यापाररूपकारणशून्यैः रजोभिर्धूलिभिः स्थगिता आच्छादिताः स्थगे संवृतौ मरुद्भिश्च स्थगिताः चकारोऽत्राध्याहार्यः किंवा वायुभिः करीभिर्धूलिभिः करणभूताभिः स्थगिताः कीदृशैर्मरुद्भिर्विकृतैः प्रचण्डैर्विलोलैरनियतदिग्वर्त्तिभिः ॥ ६९ ॥ भ०

उत्पातजमित्यादि । असौ विवस्वान् छिद्रम् उत्पातजं वक्त्राकृति लोकभीष्मं लोकस्य भयानकं व्यादाय प्रसार्य व्याङ्पूर्वस्य ददातेः क्वोत्वापि रूपं जनानत्तुं भक्षयितुं धूसररश्मिराशिः सन् अभ्युदेति उद्गच्छति यथा सिंहः कीर्णसटः विक्षिप्तकेसरकलापः मुखं व्यादायात्तुमुत्तिष्ठति तद्वदिति ॥ ७० ॥ ज० म०

उत्पातजमित्यादि । असौ धूसरकिरणजालो विवस्वान् सूर्यः छिद्रं व्यादाय प्रसार्य जनानत्तुं भक्षयितुमभ्युदेति यथा सिंहः कीर्णसटः प्रसारितकेसरकलापः सन् मुखं व्यादाय भक्षयितुमुत्तिष्ठति तद्वत् कीदृशं छिद्रमुत्पातजमुत्पाते अनिष्टे सति जातं वक्त्राकृति मुखसदृशं लोकस्य तीक्ष्णं भयजनकं भीष्ममिति क्वचित् पाठः भीममपि क्वचित् सूर्ये छिद्रं लोकसंक्षयाय भवतीति प्रसिद्धिः ॥ ७० ॥ भ०

मार्गमित्यादि । अगस्तिना यदध्यासितं विन्ध्यशृङ्गं तन्मार्गं भृगूणां गोत्रगुरुः शुक्रो गतः दक्षिणमार्गचारी शुक्र इत्यर्थः शक्रपुरोहितोऽपि वृहस्पतिः अह्नि दिवसे संद्रक्ष्यते उल्काश्च क्ष्मां क्षितिं कम्पयन्त्यः निपतन्ति ॥ ७१ ॥ ज० म०

मार्गमित्यादि । अगस्त्येन मुनिना अध्यासितमधिष्ठितं विन्ध्यपर्वतस्य शृङ्गं यत्र तदेव वर्त्म भृगूणां भृगुअपत्यानां गोत्रगुरुः कुलगुरुः शुक्रो गतः दक्षिणमार्गचारी शुक्रोऽनिष्टहेतुरिति प्रसिद्धिः ना

**मांसं हतानामिव राक्षसानामाशंसवः क्रूरगिरो रुवन्तः ।**
**क्रव्याशिनो दीप्तकृशानुवक्त्रा भ्राम्यन्त्यभीताः परितः पुरं नः ७२**
**पयोघटोध्नीरपि गा दुहन्ति मन्दं विवर्णं विरसञ्च गोपाः ।**
**हव्येषु कीटोपजनः सकेशो न दीप्यतेऽग्निः सुसमिन्धनोऽपि ॥७३**

भ्रान्ये तिक्चेति अस्यतेस्तिक् अगस्त्यास्तिरगस्तिः मनीषादित्वादकारलोपः अगस्त्योऽगस्तिरिति शब्दभेदः भृगूणामिति भृग्वत्र्यङ्गिर इत्यादिना अपत्यप्रत्ययलोपः शक्रपुरोहितो बृहस्पतिरह्नि दिवसे वंदृश्यते उल्काः क्ष्मां पृथिवीं कम्पयन्त्यो निपतन्ति ॥ ७१ ॥ भ०

मांसमित्यादि । राक्षसानां हतानामिव मांसमाशंसवः आशंसनशीलाः सनाशंसभिक्ष उः मांसभुजः शृगालादयः क्रूरगिरः परुषस्वनाः ज्वलनसदृशवदनाः निर्भयाः परितो भ्रमन्ति ॥ ७२ ॥ जं० म०

मांसमित्यादि । क्रव्याशिनः शृगालादयः निर्भयाः सन्तो रुवन्तो नदन्तो नोऽस्माकं पुरं लङ्कां परितः सर्वतो भ्राम्यन्ति भ्रमुजाचाले क्रमसङ्क्रमभ्रमेति पक्षे श्यन् शमादित्वाद्दीर्घः भिक्समयेत्यादिना परितोयोगे द्वितीया क्रव्याशिनः कीदृशाः हतानामिव राक्षसानां मांसं भक्षयितुमाशंसवः आकाङ्क्षन्तः सन् भिक्षाशंस उरित्यु प्रत्ययः क्रूरगिरो भीषणनादाः दीप्तकृशानुवक्त्राः उल्कामुखाः ॥ ७२ ॥ भ०

पय इत्यादि । क्षीरं विवर्णं दुर्वर्णं विरसं अस्वादु मन्दं अल्पं पयस्विनीरपि दुहन्ति अकथितं चेति द्विकर्मकता तथा शोभनेन्धनोऽप्यग्निर्न दीप्यते हव्येषु हवनीयेषु घृतादिषु सत्सु अचोयत् उपजननमुपजनः भावे घञ् जनिवध्योश्चेति न वृद्धिः कीटानामुपजनोऽस्मिन्निति कीटोपजनः सह केशैः सकेशः दह्यमानकीटकेश इत्यर्थः ॥ ७३ ॥ जं० म०

पय इत्यादि । गोपा घटोध्नीरपि पीवरस्तनीरपि गा मन्दम् अल्पं विवर्णं स्वाभाविकवर्णहीनं विरसमस्वादु पयो दुहन्ति मोचयन्ति घट इव ऊधस्तनो यासां स्वस्रोध इति ङीप् सस्य नकारश्च गवां गणाः प्रस्नुतपीवरोधस इत्यादि प्रयोगास्तु ङीप्येव सस्य नकारभावात् सदानोऽन्तोप इति अनोऽ-

तस्मात् कुरु त्वं प्रतिकारमस्मिन् स्नेहान्मया रावण ! भाष्यमाणः
वदन्ति दुःखं ह्यनुजीविवृत्ते स्थिताः पदस्थं परिणामपथ्यम् ॥ ७४
विरुगणसंकीर्णविपन्नभिन्नैः प्रक्षुण्णसंक्षीणघिताङ्गवृक्णैः ।

ङ्गोपः गां पान्ति रक्षन्तीति गोपाः हनजनादिति डः हव्येषु हवनीयेषु घृतादिषु कीटैः सह कीटोपजनः कीटजन्म भवति षञि जनवध इति ह्रस्वः शोभनसम्यगिन्धनयुक्तोऽपि अग्निर्न दीप्यते न ज्वलति केचित्तु हव्येषु सत्स्वपि अग्निर्न दीप्यते कीदृशः कीटस्योपजनो यत्रेति व्याचक्षते ॥ ७३ ॥भ०

तस्मादित्यादि । यस्मादेवं विनाशसूचकानि निमित्तानि दृश्यन्ते तस्मात् हे रावण ! स्नेहान्मया त्वं भाष्यमाणः अस्मिन् वस्तुनि प्रतीकारं सीताप्रत्यर्पणेनैव सन्धानं कुरु उपसर्गस्य घञीति बहुलं दीर्घः कस्मादेवं भाष्यत इति चेत् यस्मादनुजीविवृत्तेऽवस्थिताः यद्वचनं दुःखं दुःखहेतु तदा कटुकत्वात् परिणामपथ्यम् आयत्यां हितं तत्पदस्थं स्वामिपदे स्थितं वदन्ति ॥ ७४ ॥ ज० म०

तस्मादित्यादि । यत एवंविधानि विनाशसूचकानि निमित्तानि दृश्यन्ते तस्मात् हे रावण ! मया स्नेहाद्भाष्यमाणस्त्वम् अस्मिन् प्रकृते वस्तुनि प्रतीकारं सीताप्रत्यर्पणे सन्धिं कुरु कुत एवमप्रियं कथ्यत इत्याह हि यस्मादनुजीविवृत्ते सेवकधर्मणि स्थिता जना दुःखमापाततः कटुत्वात् दुःखजनकमपि परिणामपथ्यमुत्तरकाले हितं वचः स्वामिपदे स्थितं जनं वदन्ति दुःखहेतावपि दुःखशब्दप्रयोगो दृश्यते यथा कष्टं व्याकरणं पदे तिष्ठतीति हनजनादिति डः ॥ ७४ ॥ भ०

विरुगणेत्यादि । यावद्रिपुः नराशैः राक्षसैः शवाशान् गृध्रशृगालादीन् शवमश्नन्तीति कर्मण्यण् न सन्तर्पयति न प्रीणयति तावदस्य रिपोः आनमचरणाविं ग्रहीत् कीदृशैः विरुगणैर्भिन्नाङ्गैः ओदितश्चेति निष्ठानत्वं सङ्कीर्णैः इतस्ततो विक्षिप्तैः विपन्नैर्मृतैर्भिन्नैर्विदारितदेहैः प्रक्षुण्णैः एभ्यो रदाभ्यामिति नत्वं संक्षीणैर्दुर्ज्जितैः वयमेवमवस्था नीता इति शितेन

यावन्नराशैर्न रिपुः शवाशान् सन्तर्पयत्याननम तावदस्मै ॥ ७५ ॥
भ्रूभङ्गमाधाय विहाय धैर्य्यं विभीषणं भीषणरूक्षचक्षुः ।
गिरं जगादोग्रपदामुदग्रः स्वं श्लाघयन् शक्ररिपुः प्रभावम् ॥७६॥

तीक्ष्णेन अस्त्रेण ह्रक्णैः छिन्नैः र्पाहिज्यादिसम्प्रसारणं संयोगादिलोपः क्तत्वञ्च ओदित्वान्नत्वम् ॥ ७५ ॥ ज० म०

विरुग्णेत्यादि । यावत् रिपूरामो नराशैः राक्षसैः शवाशान् शवभक्षकान् शृगालादीन्न सन्तर्पयति तावदस्य रिपोरननम प्रणम अस्मै इति समार्थेनेत्यादिना कर्म्मणि षष्ठी अस्य समीपे आनम नम्रो भव समीपलक्षणया षष्ठीयमिति विद्यासागरः चरणाविव्यध्याहरन्त्यन्ये कीदृशैर्विरुग्णैः भग्नाङ्गैः रुजो भौभङ्गे सूत्वाद्योदिदिति ओदित्वात् क्तस्य नत्वं सङ्कीर्णैरितस्ततो विक्षिप्तैः कृश विक्षेपे ऋदिरणावितीर्व्य नचतयीति दीर्घः पूर्वेण रेफात् क्तस्य नत्वं विपन्नैर्हतैः यौपदङ्गतौ विपूर्वो विपत्तिमाह पूर्वेण दकारात् क्तस्य नत्वं भिन्नैर्विदारितदेहैः अर्थोभिदिर्भिदि भिद्विदारणं प्रक्षुण्णैः संपिष्टैः अथोक्षुदिर्क्षुदिक्षुत् संचूर्णने संक्षीणैर्ल्क्ष्मितैर्यमपीदृशीं दशां प्राप्ता इति मत्वा ह्रीलज्जे ह्रीघ्रालोन्देति क्तस्य पक्षे नत्वं शितास्त्रेण वृक्णैश्छिन्नैः व्रश्चश्छेदे व्रश्चः कङ्चेति क्तस्य नत्वं कङ्चस्य कत्वे तन्निमित्तस्य शस्य सत्वे स्कादेः सो लोपः ग्रहज्यादीरिति जिः ॥ ७५ ॥ भ०

भ्रूभङ्गमित्यादि । शक्ररिपुर्दशाननः विभीषणवचनात् क्रुद्धः भ्रूभङ्गं भ्रुकुटिमाधाय आबध्य धैर्यं विहाय त्यक्त्वा भीषणरूक्षचक्षुः भयानकपरुषचक्षुः उदग्रः उन्नामितदेहः स्वं प्रभावं विक्रमं श्लाघयन् बर्द्धयन् श्लाघ्येव इति यो वत्वं विभीषणं जगाद गिरं वाचम् उग्रपदां सुप्तिङन्तानां स्वरूपतोऽर्थतश्च परुषत्वात् ॥ ७६ ॥ ज० म०

भ्रूभङ्गमित्यादि । एवं विभीषणवचनात् कोपेन भ्रूभङ्गं भ्रुकुटीं आधाय आबध्य धैर्यं विहाय त्यक्त्वा शक्ररिपू रावणः प्रभावं स्वकीयं विक्रमं श्लाघयन् बर्द्धयन् विभीषणं गिरं वाचं जगाद कीदृशः भीषणं भयानकं रूक्षं परुषं चक्षुर्यस्य तादृश उदग्र उन्नमितदेहः गिरं कीदृशीम् उग्रपदां

शिला तरिष्यत्युदके न पर्णं ध्वान्तं रवेः स्वंत्स्यति वह्निरिन्दोः ।
जेता परोऽहं युधि जेष्यमाणस्तुल्यानि मन्यस्व पुलस्त्यनप्तः ॥७७॥
अनिर्हृतं भूतिषु गूढवैरं सत्कारकालेऽपि कृताभ्यसूयम् ।
विभिन्नकर्माशयवाक् कुले नो मा ज्ञातिचेलं भुवि कस्यचिद्भूः ७८

स्वरूपतोऽर्थतश्च कठोरत्वात् उच्चार्य्य पदानि यत्र स्फायीङ संहतौ पाति-स्फायोरिति वङ् ॥ ७६ ॥ भ०

शिलेत्यादि । उदके शीला तरिष्यति न पुनः पर्णं रवेः सूर्य्यात् ध्वान्त-मन्धकारं स्वंत्स्यति स्वविषयाति स्यन्दू प्रस्रवणे इत्यस्मात् न वृद्भ्यश्चतुर्भ्यं इतीट न भवति खरि चेति चत्वं तथा वह्निरिन्दोः स्वंत्स्यति अहमप्येष पर उत्कृष्टः जेता युधि संग्रामे जेष्यमाण इत्येतानि चत्वारि हे पुलस्त्यनप्तः ! विभीषण ! तुल्यानि मन्यस्व अवगच्छ लोटिरूपं यदि जेताप्यहं परेण जीये शिलातरणादीन्यपि भविष्यन्ति ॥ ७७ ॥ ज० म०

शिलेत्यादि । उदके जले प्रस्तरस्तरिष्यति न तु पर्णं पत्रं तरति रवेः सकाशात् ध्वान्तं न स्वंत्स्यति गमिष्यति इन्दोः सकाशात् वह्निः स्वंत्स्यति स्यन्दूङ्वृत्तौ वृद्भ्यो नेसृपेस्त्रसनोरिति इमृनिषेधः अतएव युधि परोऽन्य उत्कृष्टो वा जेता अहन्तु जेष्यमाणः हे पुलस्त्यनप्तः ! हे पुलस्त्यमुनि-पौत्र ! एतानि शिलातरणादीनि तुल्यानि मन्यस्व यदि शिलातरणादिकं भवेत् तदा मे पराजय इत्यर्थः पुलस्त्यब्राह्मणस्य भीरुत्वान्नप्तृत्वमपि नाढ्य-मिति नप्तृसम्बोधनेन सूच्यते ॥ ७७ ॥ भ० .

अनिर्हृतमित्यादि । भूतिषु ज्ञातिसम्बन्धिनीषु अनिर्हृतमसुखिनं गूढ-वैरं काले हनिष्यामीति सम्भृतापकाराशयं सत्कारकालेऽपि पूजाकालेऽपि कृतामर्षं विभिन्नाः कर्म्माशयवाचो यस्य तद्विभिन्नकर्म्माशयवाक् आशयोऽन्यो वाक्कर्मणी चान्ये यस्येति ईदृशं ज्ञातिचेलं गर्हितज्ञातिरस्माकं कुले मा भूत् कस्यचिदन्यस्य वा मा भूत् चेलशब्दो गर्हिते वर्त्तते ॥ ७८ ॥ ज० म०

अनिर्हृतमित्यादि । भुवि ईदृशं ज्ञातिचेलं गर्हितो ज्ञातिर्नोऽस्माकं कुले कस्यचिन्मा भूत् न भवतु अस्माकमिवान्यस्यापि कस्यचित् कुले इत्यर्थो

दुष्कृत्यभीक्ष्णं चयमात्मनोऽपि न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम् ।
नमन्ति शत्रून्न च बन्धुवृद्धिं सन्तप्यमानैर्हृदयैः सहन्ते ॥ ७९ ॥
त्वयाद्य लङ्काभिभवेऽतिहर्षात् दुष्टोऽतिमात्रं विवृतोऽन्तरात्मा ।

वा कीदृशं भूतिषु ज्ञातिसम्बन्धिनीषु सम्पत्तिषु अनिर्वृतं सुखरहितं गूढ-वैरं काले हनिष्यामीति गुप्तद्वेषं सत्कारकालेऽपि पूजासमयेऽपि क्षताभ्य-सूयं क्षतामर्षं गुणेऽपि दोषाविष्करणमसूया विभिन्नाः परस्परविरोधिन्यः कर्म्माशयवाचो यस्य क्रूरत्वादाशयोऽन्यो वाक्कर्मणी चान्ये इत्यर्थः चेलोनी-चेऽन्यवद्गेलसंशुके गर्हितेऽन्यवदिति विश्वप्रकाशे यद्यपि चेलशब्दस्य गर्हिते वाच्यलिङ्गत्वमुक्तं तथापि गर्हितेऽप्यवसाने च चेलमाचक्ष्यते बुधैरित्युगा-सनादव क्लीवत्वं सामान्यविवक्षया नपुंसकत्वमिति विद्यासागरः विशेषणस्य क्वचित् परनिपातोऽभिधानात् ॥ ७८ ॥ भ०

किं मया कृतं येनैवमुच्यत इति चेदाह

दुष्कृत्यीत्यादि । ज्ञातयः आत्मनः सुष्ठु चयं विनाशमिच्छन्ति न पुन-स्तुल्यकुलस्य एकहेतुगोत्रस्य लक्ष्मीं श्रियं तथा शत्रु कामं नमन्ति न पुनर्ब-न्धुवृद्धिं बन्धुसन्ततिं सहन्ते सन्तप्यमानैर्हृदयैः ईर्ष्यया दह्यमानैः ॥ ७९ ॥ ज० म०

दुष्कृत्यीत्यादि । ज्ञातयो वरमात्मनोऽपि चयमभीक्ष्णं पुनः पुनरिच्छन्ति न पुनः समानकुलोत्पन्नस्य भ्रात्रादेर्लक्ष्मीमिच्छन्ति तथा वरं शत्रून् नमन्ति न पुनर्बन्धूनां वृद्धिं सन्तप्यमानैरीर्षादह्यमानैर्हृदयैः सहन्ते ॥ ७९ ॥ भ०

किं मया कृतं येनैवमुच्यत इति चेदाह

त्वयेत्यादि । लङ्कापरिभवे लङ्कोपरोधे अतिहर्षात् हर्षेण दुष्टान्तरात्मा अतिमात्रं सुष्ठु त्वयाद्य विवृतः प्रकाशितः मयि दुष्टबुद्धिः अस्मद्विषये दुष्टो-ऽभियुक्तोऽयमिति बुद्धिः ते मृषा मिथ्यात्वत्वां धिगिति वदन् स दशाननः तस्य विभीषणस्य सिंहासनोपाश्रितवाहोः पार्ष्णिं पादप्रहारं शिरसि ददौ ॥ ८० ॥ ज० म०

धिक्त्वां मृषा ते मयि दुःस्थबुद्धिरेवं वदन्निदं तस्य ददौ स पार्ष्णिम् ॥८०
ततः स कोपं क्षमया निगृह्णन् धैर्य्येण मन्युं विनयेन गर्व्वम् ।
मोहं धियोत्साहवशादशक्तिं समं चतुर्भिः सचिवैरुदस्थात् ॥८१
उवाच चैनं क्षणदाचरेन्द्रं सुखं महाराज ! विना मयास्स्व ।
मूर्खातुरः पथ्यकटूननश्नन् यत्साऽऽमयोऽसौ भिषजां न दोषः ॥८२

पूर्व्वश्लोकद्वयार्थं विभीषणो घटयितुमिदमुच्यते

त्वयेत्यादि । लङ्कायाः अभिभवे दाहादौ सति त्वया अतिक्रमीः दुष्टोऽतिमात्रम् अतिशयेन दुष्टोऽन्तरात्मा प्रकाशित एतावन्तं कालं गुप्त आसीदिति भावः मद्धक्ष हृदये दुःस्थोऽयमरिभिरभियुक्तोऽयमिति ते तव बुद्धिरेषा मिथ्या अतस्त्वां धिगिति वदन् स दशाननस्तस्य विभीषणस्य पार्ष्णिं पादप्रहारं ददौ ॥ ८० ॥ भ०

तत इत्यादि । पार्ष्णिप्रहारादनन्तरं स विभीषणः कोपं क्षमया क्षान्त्या निगृह्णन् अभिभवन् तथा धैर्य्येण मन्युं शोकं विनयेन गर्वं मोहं वैचित्त्यं प्रज्ञया उत्साहवशादशक्तिमसामर्थ्यं निगृह्णन् अपमानेन कोपादीनां सम्भवात् चतुर्भिः सचिवैरमात्यैः समं सार्द्धमुदस्थात् आसनादुत्थितः ॥ ८१ ॥ ज० म०

तत इत्यादि । पार्ष्णिप्रहारादनन्तरं स विभीषणः क्षमया क्षान्त्या कोपं निगृह्णन् अभिभवन् धैर्य्येण मन्युं शोकं निगृह्णन् विनयेन गर्वं दर्पं निगृह्णन् धिया बुद्ध्या मोहं वैचित्त्यं निगृह्णन् उत्साहवशादशक्तिमसामर्थ्यं निगृह्णन् चतुर्भिः सचिवैरमात्यैरुदस्थादासनादुत्थितवान् ॥ ८१ ॥ भ०

उवाचेत्यादि । उत्थितस्यानन्तरं रावणमुवाच हे महाराज ! मया विना सुखमास्स्व तिष्ठ आस्तेर्लोट् तथात्र दोषो न ममोपदेष्टुः दृष्टान्तमूर्खातुरः मूर्खो च आतुरः पथ्यकटूननश्नन् अभक्षयन् यत्सामयः रोगवान् भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥ ज० म०

उत्थितो विभीषणो रावणं वाचमुवाच किमुवाचेत्याह

उवाचेति । हे महाराज ! मया विना सुखं आस्स्व सुखेन तिष्ठ-

करोति वैरं स्फुटमुच्यमानः प्रतुष्यति श्रोत्रसुखैरपथ्यैः ।
विविकशून्यः प्रभुरात्ममानी महाननर्थः सुहृदां वतायम् ॥ ८३ ॥
क्रीडन् भुजङ्गेन गृहानुपातं कश्चिद्यथा जीवति संशयस्थः ।
संसेवमानो नृपतिं प्रमूढ तथैव यज्जीवति सोऽस्य लाभः ॥ ८४॥

त्यर्थः डिल्लासङ्ग उपवेशे गो तवैवात्र दोषो न ममेत्युपदिशन्नाह मूर्ख आतुरो रोगी पथ्यान् कटून् अनश्नन् अभक्षयन् सामयो रोगी यत्तिष्ठत्यसौ भिषजां वैद्यानां न दोषः किन्तु तस्यैव ॥ ८२ ॥ भ०

करोतीत्यादि । प्रभुर्विवेकशून्यो निर्विवेकः आत्ममानी मत्समोऽन्यो नास्तीति आत्मानं श्लाघमानम् आत्ममाने इनिः स्फुटसुच्यमानो वैरं करोति स्नेहं न करोति पथ्यमनेनोक्तमिति श्रोत्रसुखैः तदर्थमनोहारिभिः अपथ्यैस्तुष्यति तस्मादयं प्रभुः सुहृदामाश्रितानां महाननर्थहेतुत्वात् वत शब्दः खेदे ॥ ८३ ॥ ज० म०

करोतीत्यादि । प्रभुरीश्वरो विवेकशून्यः सदसद्विचाररहितः आत्ममानी मत्समो नास्तीत्यात्मानं श्लाघमानो वत खेदे अयमेव सुहृदां महाननर्थो दुःखहेतुः कथमित्याह तादृक् प्रभुः स्फुटं यथार्थं उच्यमानः क्रोधं करोति वत पथ्यमनेनोक्तमिति स्नेहं श्रोत्रसुखैः कर्णसुखकारिभिः अपथ्यैरपेऽतिदुःखजनकैः प्रहृष्यति तुष्यति अतस्तस्य विनाश एव स्यात् आत्मानमेव रक्ष्यत इति यह दिव्यासिन् ॥ ८३ ॥ भ०

क्रीडन्नित्यादि । यथा कश्चित् सर्पग्राही गृहानुपातं गृहं गृहमनुपत्य विश्चिपतीत्यादिना णमुल् भुजङ्गेन सह क्रीडन् जीवति संशयस्थः सन्देहे वर्त्तमानः किमयं खादिष्यति न वेति तथैव प्रमूढं मूर्खमधिपतिं संसेवमानो यज्जीवति सोऽस्य लाभः आस्तामन्यो लाभ इति ॥ ८४ ॥ ज० म०

क्रीडन्नित्यादि । यथा कश्चिद्व्यालग्राही गृहानुपातं गृहं गृहमनुपत्य गत्वा भुजङ्गेन सर्पेण क्रीडन् संशयस्थः किमयं खादिष्यति न वेति सन्देहे वर्त्तमानो जीवति तथैव प्रमूढमतिमूर्खमधिपतिं संसेवमानो

दत्तः स्वदोषैर्भवता प्रहारः पादेन धर्म्ये पथि मे स्थितस्य ।
स चिन्तनीयः सह मन्त्रिमुख्यैः कस्यावयोर्लाघवमादधात ॥ ८५॥

इति वचनमसौ रजनिचरपतिं
बहुगुणमसकृत् प्रसभमभिदधत् ।
निरगमदभयः पुरुषरिपुपुरा-
न्नरपतिचरणौ नवितुमरिनुतौ ॥ ८६ ॥

यज्जीवति अस्य सेवकस्य स एव लाभः एतेन मूर्खस्य तव सेवायां मम जीवनमेव लाभ इत्याशयः गदहानुपातमिति चणम्वेत्यस्य योगविभागात् साकल्ये चणम् गदहा अनुपत्यन्ते यस्मिन् इति क्रीडनविशेषणं वा तदा कर्म्मणि घञ् ॥ ८४ ॥ भ०

दत्त इत्यादि । स्वदोषैरविवेकत्वादिभिर्भवता पादप्रहारः यो मम धर्म्ये धर्म्मादनपेते मार्गे स्थितस्य दत्तः स मन्त्रिमुख्यैरेतैः सह चिन्तनीयः आवयोर्मध्ये कस्य लाघवमादधातु करोत्विति यावन्निरूप्यमाणस्तवैवेति भावः ॥ ८५ ॥ ज० म०

दत्त इत्यादि । भवता स्वदोषैरात्मनोऽविवेकत्वादिभिः पादेन प्रहारो भवता मम दत्तः मम कीदृशस्य धर्म्मादनपेते पथि वर्त्तमानस्य स पादप्रहारो मन्त्रिमुख्यैः सह त्वया चिन्तनीयो निरूप्यमाणः सन् आवयोर्म्मध्ये कस्य लघुत्वं करोतु निरूप्यमाणस्तवैव विवेकशून्यत्वख्यातिरूपं लाघवमुत्पादयिष्यतीति भावः ॥ ८५ ॥ भ०

इतीत्यादि । इत्येवं वचनं बहुगुणम् अर्थावगाढत्वात् असकृत् बहुत्वात् प्रसभम् आहत्य रजनिचरपतिमभिदधत् ब्रुवन् नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः रजनिचर इति ङ्यापोः संज्ञाच्छन्दसो बहुलमिति संज्ञायां ह्रस्वत्वं पुरुषरिपुपुरान्नङ्कातः निरगमत् निष्क्रान्तः अभयः सन् नरपतिचरणौ रामस्य पादौ अरिभिरपि नुतौ शूरत्वात् अत इतीट्प्रतिषेधः नवितुं प्रणामपूर्वकं स्तोतुम् अनेकार्थत्वाद्धातूनां नन्तुमित्यर्थः ॥ ८६ ॥ ज० म०

अथ तमुपगतं विदितसुचरितं
पवनसुतगिरा गिरिगुरुहृदयः ।

इतीत्यादि । असौ विभीषण इत्युक्तप्रकारं वचनम् असकृद्वारं वारं प्रसभं बलात् रजनिचरपतिं रावणं अभिदधत् वदन् नरपते रामस्य चरणौ नवितुं स्तोतुं पुरुषरिपो राक्षसस्य पुरात् लङ्कायाः निरगमत् निर्गतवान् वचनं कीदृशं बहुगुणम् औदार्य्यादिगुणयुक्तम् असौ कीदृशः अभयः न विद्यते भयं यस्य रामचरणौ कीदृशौ अरिभिरपि नुतौ स्तुतौ नुतस्तुतौ वेमूदित्यादिना वेमत्वात् नेमडीश्वीदिड्वेम इति इमनिषेधः नुविनुमिति पाठे नूशिस्तवन इत्यस्य रूपं रजनिचर इति संज्ञाशब्दः तेन संज्ञायां बहुत्वं, ह्रस्व इति केचित् रजनिशब्द औणादिकी ह्रस्वान्त इति विद्यासागरः वस्तुतोऽप्येवमेव रजनिजनितगुरुजागररागकषायितमलसनिमेषमिति जयदेवः सखि ! रजनिरद्धं गतवतीति कालिदासः दीर्घान्तता तु पाच्छोनादीत्यादिना पक्षे ईर्विधानात् । प्रहरणकलिका नाम वृत्तं तल्लक्षणं यथा नयभनलगिति प्रहरणकलिका ॥ ८६ ॥ भ०

अथेत्यादि । अनन्तरं विभीषणमुपेतं सेतुबन्धचिन्ताकाले राममुपगतवानिति द्रष्टव्यम् अन्यथा वक्ष्यमाणप्रभातकथनं विरुध्येत पवनसुतगिरा हनूमद्वचनेन सच्चरितोऽयमिति विदितं सुचरितं येन नृपतिः रामः गिरिगुरुहृदयः गिरिवत् गुरु अप्रकम्पं हृदयं यस्य सलिलसमुदयैः जलपूर्णघटे स्थितैः स्वपुरपतिकरैः लङ्काधिपतिं कुर्व्वन्तीति हेतौ टः अमदयत् हर्षितवान् मदी हर्षे इत्यस्य हेतुमण्यन्तस्य घटादित्वान्मित्त्वे ह्रस्वत्वं मुदितपरिजनं स्वामी लङ्काधिपत्येऽभिषिच्यत इति तस्य हृष्टा अनुजीविन इत्यर्थः ॥ ८७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे भाविकत्वप्रदर्शने तृतीयः परिच्छेदः काव्यस्य विभीषणागमनो नाम द्वादशः सर्गः ।

अथेत्यादि । अनन्तरम् उपगतं तं विभीषणं नृपतिः रामः सलिलसमुद्गैरभिषेकजलसमूहैर्हेतुभिरमदयत् हर्षितवान् तं कीदृशं पवनसुतस्य हनू-

नृपतिरमदयन्मुदितपरिजनं
स्वपुरपतिकरैः सलिलसमुदयैः ॥ ८७ ॥

इति भर्तृहारकृते भट्टिकाव्ये द्वादशः सर्गः ।

ततो गिरा वचनेन विदितं ज्ञातं शोभनचरित्रं यस्य मुदिता लङ्काधिपतित्वे स्वामी अभिषिक्त इति तुष्टाः परिजना अमात्याश्चत्वारो यस्य नृपतिः कीदृशः गिरिवन्मुरु निष्कम्पं हृदयं यस्य स तथा सलिलसमुदयैः कीदृशैः स्वपुरपतिकरैः लङ्काधिपत्यं कुर्वद्भिः मदीभिर्यज्ञि हर्षे ञिः प्रेरणे घटादित्वात् ह्रस्वः क्तः स्वकृष्ट इति टः पूर्व्वोक्तं वृत्तम् ॥ ८७ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणागमनो नाम द्वादशः सर्गः ।

---

## त्रयोदशः सर्गः ।

---

चारुसमीरणरमणे हरिणकलङ्ककिरणावली सविलासा ।
आबद्धराममोहा वेलामूले विभावरी परिहीणा ॥ १ ॥

काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधं तत्र शब्दभवदेशीयपदयोः प्राकृतभाषयोरपभ्रंशस्य च संस्कृतभाषायां समावेशासम्भवात् शब्दसमायाः प्राकृतभाषायाः समावेशः तमार्य्यागीत्या स्कन्धकलक्षणया दर्शयन्नाह ।

विभीषणागमनात् प्राक् यद्वृत्तं रामस्य तदाह

चार्वित्यादि । रामो रात्रौ निद्रावान् पल्लवशयनमध्यगादित्युक्तं तस्य नियमपूर्वं सुप्तवतः प्रभातमभूदिति कथयति वेलामूले पारसमीपे प्राकृते पुंलिङ्गनपुंसकयोराकारान्तस्य पदस्य सप्तम्या एकवचने मित्वमेत्वं वा रूपं चारु समीरणरमणे रमयतीति रमणं नन्द्यादिभ्यो ल्युः समीरणेन रमणं चारु च तत्समीरणरमणं चेति तत्र विभावरी रात्रिः परिहीणा क्षीणा हरिणकलङ्कस्य याः किरणावल्यः ताभिः सविलासा सविभ्रमा अतश्चाबद्धो रामस्य मोहो मूर्च्छा ययेति कृदिकारादक्तिन इत्यनेन आवलिरावलीत्युभयमपि संस्कृतप्राकृतयोः प्रयुज्यते ॥ १ ॥ ज० म०

अथ भाषासमावेशः । काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधं प्राकृतोऽपि संस्कृतभवः संस्कृतसमोदेशी चेत्यनेकविधः अत्र देशिसंस्कृतभवयोः प्राकृतयोरपभ्रंशस्य चासाधुशब्दत्वेनाधर्म्मजनकत्वात् उपक्रान्ते संस्कृतबन्धे समावेशासम्भवाच्च महाकविर्भट्टिः हरिः असामर्थ्यं बोधयन् शब्दसमायाः प्राकृतभाषायाः संस्कृतबन्धे समावेशं दर्शयति अयञ्च भाषाश्लेष एव तथाच रुद्रटः वाक्ये यत्रैकस्मिन्ननेकभाषानिबन्धनं क्रियते । अयमपरो मतिमद्भिर्भाषाश्लेषोऽत्र विज्ञेय इति प्राकृतशास्त्रे तालव्यशकारो मूर्द्धन्यषकारश्च नास्ति तत्र

बद्धो वासरसङ्गे भीमो रामेण लवणसलिलावासे।
सहसा संरम्भरसो दूरारूढ़रविमण्डलसमो लोले ॥ २ ॥

हि ग्रणोः स इति सूत्रम् एवं दन्त्यो नकारो नास्ति नोण इति सूत्रम् एवं एवमन्त्यस्थवकारो नास्ति यस्य ज इति च सूत्रम् एवमादिबहुतरमुन्नेयम् । सेतुबन्धनार्थं कृतनियमेन रामेण पत्रशय्यायां रात्रिर्गमितेति ज्ञापयितुं प्रभातवर्णनामधिकरोति

चार्व्वित्यादि । वेलामूले वेलायाः समुद्रजलस्य मूले तटे विभावरी रात्रिः परिहीणा विगता कीदृशे वेलामूले चारुणा मन्दशीतसुगन्धिना समीरणेन वायुना रमणे आनन्दने चारु मनोज्ञञ्च तत्समीरणरमणञ्चेति कर्म्मधारयो वा रमयतीति रमणं रमन्तेऽत्रेति वा कीदृशी विभावरी हरिणकलङ्कस्य चन्द्रस्य किरणावल्या रश्मिपङ्क्त्या सविलासा शोभमाना सविभ्रमा वा आबद्धो रामस्य मोहो यया प्राकृते आकारात् परस्य सप्तम्येकवचनस्य ङेम्मिनित्यादेशौ भवतस्तत्र ङेपक्षे संस्कृतसमत्वं स्कन्धकाच्छन्दः तल्लक्षणं यथा चौमत्ता अट्टगणा पुब्बद्धे उत्तद्धे वि होन्ति समरूआ । सो खन्धआ विआणह पिङ्गल पभणेइ मुद्धिबहु सर्ब्बआ इति ॥ १ ॥ भ०

बद्ध इत्यादि । नियमस्थितेऽपि मयि नाशौ समुद्र उत्थित इति वासरसङ्गे प्रभातकाले रामेण लवणसलिलावासे समुद्र इति विषयसप्तमी सहसा तत्क्षणं संरम्भरसः क्रोधरसो वीराख्यः भीमो दुःप्रेक्ष्यः बद्धो जनितः दूरारूढरविमण्डलसमो लोल इति दूरमारूढो मध्याह्नस्थो यो रविः तस्य मण्डलं तेन समस्तुल्योऽतितीक्ष्णत्वात् लोले चञ्चले समुद्रे प्रभातवातेन क्षोभ्यमाणत्वात् ॥ २ ॥ ज० म०

बद्ध इत्यादि । वासरस्य सङ्गः सम्बन्धो यत्र प्रभाते वासरस्य दिवसस्य सङ्गे सम्बन्धे सति वा रामेण लवणसलिलावासे लवणसमुद्रे संरम्भरसः क्रोधरसः सहसा तत्क्षणात् बद्धः कृतः कृतोपवासेऽपि मयि नायं प्रकटीभूत इति मत्वा संरम्भरसः कीदृशः

गाढ़गुरुपुङ्खपीड़ा सधूमसलिलारिसम्भवमहाबाणे ।
आरूढ़ा सन्देहं रामे समहीधरा मही सफणिसभा ॥ २ ॥

भीमो भयदः दूरमारूढस्य मध्याह्नस्थितस्य रवेः सूर्यस्य मण्डलेन समोऽतितीक्ष्णत्वात् समुद्रे कीदृशे लोले चञ्चले रामभयेन प्रभातवातेन वा चोभ्यमाणत्वात् प्राकृतशास्त्रे लवणशब्दस्य मध्यव्यञ्जनस्य स्वरेण सहोत्वं पक्षे विहितं तेन लोणं लवणमिति द्वयमपि स्यात् गाथावत् स्कन्धकस्यापि षष्ठो गणो मध्यगुरुश्चतुर्लघुर्वा अत्र पूर्वार्द्धे चतुर्लघुः षष्ठो गणः ॥ २ ॥ भ०

गाढेत्यादि । गाढं सुष्ठु गुरोः पुङ्खस्य या पीड़ा पीडनम् अङ्गुष्ठाभ्यां तया हेतुभूतया सधूमसलिलारेः अग्नेः सम्भवो यत्र स महाबाणो यस्य रामस्य तस्मिन् सति महासन्देहमारूढा संशयं प्राप्ता समहीधरा मही सफणिसभा सह भुजङ्गसमूहेन धारयन्तीति धराः अत्र धकारस्य पदमुखे वर्त्तमानस्य हकारो न भवति प्राकृते पदमध्यान्तयोर्विधीयमानत्वात् महीधर इति समस्तपदेऽपि न प्रवर्त्तते अत्र पूर्वपदमुत्तरं पदमिति व्यपदेशात् एवञ्च सति गोधरवज्रधरचक्रधरशङ्खधरादिषु न प्रवर्त्तते महीधरो महिधर इत्युभयमपि प्राकृते प्रयुज्यते असहानां विकल्पेन ह्रस्वदर्शनात् ॥ २ ॥ ज० म०

गाढ़ेत्यादि । गाढा दृढा गुरुपुङ्खस्य या पीडा अङ्गुष्ठतर्ज्जनीभ्यामाकर्षणं तया सधूमस्य सलिलारेरग्नेः सम्भवो यत्र तादृशो महान् बाणो यस्य तादृशे रामे सति मही पृथिवी सन्देहं विनाशसंशयम् आरूढा प्राप्ता कीदृशी समहीधरा पर्वतैः सह वर्त्तमाना फणिसभया सर्पसमूहेन सहिता प्राकृते महीधरपदे ह्रस्वो न भवति तत्र बहुलाधिकारात् खधथभामिति धकारस्य हकारो न भवति तत्र प्रायोऽधिकारात् पीडेति डोल इति लत्वं न भवति प्रायोग्रहणात् पीलेति पाठो वा संस्कृतेऽपि मनीषादित्वादैक्यस्मरणात् ॥२॥ भ०

घोरेत्यादि । रामेणाग्नेये शरे क्षिप्ते सति लवणजलमार्गेण

घोरजलदन्तिसङ्कुलमट्टमहापङ्ककाहलजलावासम् ।
आरीणं लवणजलं समिद्धफलवाणविद्धघोरफणिवरम् ॥ ४ ॥
सभयं परिहरमाणो महाहिसञ्चारभासुरं सलिलगणम् ।
आरूढो लवणजलो जलतीरं हरिबलागमविलोलगुहम् ॥ ५ ॥

समन्तात् शुष्कं रीङ्‌स्रवण इत्यस्मात् निष्ठातकारस्य णादय औदित इति णत्वम् अट्क्वुप्विति णत्वं रीणमित्यप्रयोगः प्राकृते महाराष्ट्रे तस्याप्रयोगात् घोरैः रौद्रैर्जलदन्तिभिः सङ्कुलं व्याप्तम् अट्टः शुष्को यो महापङ्कः तेन काहला विह्वला जलावासा मत्स्यादयो यत्र अट्ट अतिक्रमहिंसनयोरित्यस्य रूपं समिद्धफलेन दीप्तफलेन वाणेन विद्धाः घोराः फणिवरा महासर्पा यत्रेति ॥ ४ ॥ ज० म०

घोरेत्यादि । रामेणाग्नेयास्त्रे चिप्ते सति लवणजलम् आरीणं समन्तात् शुष्कम् ओरीङ्‌च्यवने सुल्वाद्योरिति क्तस्य नत्वं कीदृशं जलं घोरैर्भीमैर्जलहस्तिभिः सङ्कुलं व्याप्तम् अट्टः शुष्कोऽत्यर्थो वा यो महापङ्कस्तेन काहलाः शुष्का जलावासा मत्स्यादयो यत्र अट्टऽतिक्रमे बधे इत्यस्येदं रूपम् अट्टं भग्ने च शुष्के च चौमेऽत्यर्थे गृहान्तरे । काहली तु तरुण्यां स्यात् काहलं भृशशुष्कयोरिति च विश्वः काहलं विह्वलेऽपि स्यादित्यन्ये प्राकृतपक्षे कातरशब्दस्य काहलमिति भवति कातरवितस्तिमातुलङ्गेष्वित्यनेन तकारस्य हादेशात् हरितादित्वेन रेफस्य लत्वाच्च दीप्तफलेन वाणेन विद्धा घोराः फणिवराः सर्पश्रेष्ठा यत्र ॥ ४ ॥ भ०

सभयमित्यादि । सलिलगणं सलिलसमूहं सभयं महाहीनां सञ्चारेण भासुरं भासनशीलं तच्छिरोमणिद्योतितत्वात् परिहरमाणः परित्यजन् कर्त्रभिप्राये तङ् लवणजलः समुद्रः लवणं जलमस्येति जलतीरं तटं यत्र रामस्तिष्ठति तदारूढः संप्राप्तो मूर्त्तिमान् हरिबलागमेन वानरसैन्यागमेन विलोला व्याकुला गुहा यत्रेति ॥ ५ ॥ ज० म०

सभयमित्यादि । लवणं जलमस्य स लवणजलः समुद्रः जलतीरं

चञ्चलतरुहरिणगणं बहुकुसुमाबन्धबद्धरामावासम् ।
हरिपल्लवतरुजालं तुङ्गोरुसमिद्धतरुवरहिमच्छायम् ॥ ६ ॥
वरवारणं सलिलभरेण गिरिमहीमण्डलसंवरवारणम् ।

आरूढः संप्राप्तो मूर्त्तिमान् भूत्वा किं कुर्वन् सभयं यथा स्यात्तथा सलिलगणं जलराशिं परिहरमाणः परित्यजन् सभयमित्यत्र प्राकृते प्रायोग्रहणात् यलोपाभावः कगचजेति यलोपे अवर्णो यश्रुतिरिति यकारश्रवणमित्यन्ये कीदृशं सलिलगणं महाहीनां महासर्पाणां सञ्चारेण भासुरं तत् शिरोमणिभिर्दीप्तं कीदृशं जलतीरं हरिबलागमेन वानरसैन्यागमनेन विलोला व्याकुला गुहा यत्र विलोचनतरुमिति क्वचित्पाठः ॥ ५ ॥ भ०

चञ्चेत्यादि । चञ्चलश्चपलः तरुहरिणानां वानराणां गणो यत्र जलतीरे बहुकुसुमानां वृक्षाणामाबन्धेन परस्परसंश्लेषेण बद्धो घटितो रामावासो यत्र हरिपल्लवानि तरुजालानि यत्र तुङ्गा उरवः परिसमण्डलाः समिद्धा उज्ज्वला ये तरुवरास्तैर्हिमा शीतला छाया यत्र तज्जलतीरम् ॥ ६ ॥ ज० म०

चञ्चलेत्यादि । कीदृशं जलतीरमारूढः चञ्चलस्तरुहरिणानां वानराणां गणो यत्र बहूनि कुसुमानि येषां तेषां वृक्षाणाम् आबन्धेन परस्परसंश्लेषेण बद्धो घटितो रामस्यावासो वासस्थानं यत्र हरयः पिङ्गलाः पल्लवा यस्य तादृशं तरुजालं वृक्षसमूहो यत्र तुङ्गा उच्चा उरवोऽत्यर्थविस्तीर्णमण्डलाः समिद्धा उज्ज्वला ये तरवस्तैः शीतला छाया यत्र ॥ ६ ॥ भ०

वरेत्यादि । वरा उत्कृष्टा वारणा यत्र सलिलभरेण सलिलसमूहेन यो गिरीणां महीमण्डलस्य च संवरः संवरणमावरणं ग्रहेत्यादिनाप् तस्य वारणं निषेधकं समुद्रस्य वेलातिक्रमात् वसु द्रव्यं तस्य धारयं धारकम् अनुपसर्गादिति णिजन्ताच्छः तुङ्गाः अभ्रंलिहा ये तरङ्गास्तैः सह यः सङ्गः संश्लेषः तस्मात् परिहीणो नष्टो लोलो वसुधायां तत्सम्बन्धिन्यां रयो वेगो यत्र तज्जलतीरमारूढः गणितक्रममेतत् । एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृतयोरविशिष्टत्वात् ॥ ७ ॥ ज० म०

वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम् ॥७॥ कुल कम्

एतानि सप्त सङ्कीर्णानि ।

प्रणिपत्य ततो वचनं जगाद हितमायतौ पतिर्व्वारीणाम् ।

गङ्गावलम्बिबाहू रमं बहलोरुहरितमालच्छायम् ॥ ८ ॥

पूर्व्वार्द्धं निरवद्यम् ।

वरवारणमित्यादि । पुनः कीदृशं वरा उत्कृष्टा वारणा हस्तिनो यत्र सलिलभरेण जलातिशयेन गिरीणां महीमण्डलस्य च संवरः संवरणं तस्य वारणं निषेधकं समुद्रेण वेलाया अतिक्रमात् वसुधारयं द्रव्यस्य धारकं वाहिवानीति धारे शः तुङ्गानाम् उच्चानां तरङ्गाणां यः सङ्गः संश्लेषः तेन परिहीणो भ्रष्टो लोलो वसुधायां तत्सम्बन्धिन्यां रयो वेगो यत्र तरङ्गेण जलवेगनिरासात् । एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृतयोरविशिष्टस्वरूपत्वात् ॥ ७ ॥ भ०

प्रणिपत्येत्यादि । ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य वचनं जगाद हितमात्मनो रामस्य पथ्यमायतावागामिनि काले गङ्गावलम्बी गङ्गावलम्बनशीलः संपूर्णत्वाद्बाहुर्यस्य स गङ्गावलम्बिबाहुः संस्कृते ढ्लोपे पूर्वस्य दीर्घो नः प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वं विभक्तिसकारस्य च लोपः उरुमेहान् हरिः हरितो यस्तमालः बहला घना तस्येव छाया यस्य तमिति पूर्वार्द्धं निरवद्यमिति पूर्वस्मिन्नर्द्धे प्राकृतस्याभावात् निरवद्यं पश्चादर्द्धे तु संकीर्णमेव ॥ ८ ॥ जं० म०

प्रणिपत्येत्यादि । ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य प्रणम्य वचनं जगाद कीदृशं वचनम् आयतावुत्तरकाले हितं आत्मनो रामस्य च पथ्यं कीदृशः समुद्रः गङ्गावलम्बनशीलौ बाहू यस्य संस्कृते रिचोऽवे इत्यनेन अनरेफस्य ढोढीति लोपः पूर्वस्य दीर्घत्वं प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वं विलोपश्च रामं कीदृशं बहला निविडा उर्व्योर्म्महतोर्हरितमालयोरिव शुकवृक्षविशेषयोरिव छाया कान्तिर्यस्य शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्वित्यमरः प्राकृते हरिच्छब्दस्य तलोपोऽन्त्ये॰

तुङ्गा गिरिवरदेहा अगमं सलिलं समीरणो रसहारी ।
अहिमो रविकिरणगणो माया संसारकारणं ते परमा ॥ ९ ॥
आयाससम्भवारुण ! संहर संहारहिमहरसमच्छायम् ।
वाणं वारिसमूहं सङ्गच्छ पुराणचारुदेहावासम् ॥ १० ॥

व्यङ्गश्लेषोऽयमनेन पूर्वार्द्धं निरवद्यमिति वचनशब्दस्य दन्त्यान्तत्वात् प्राकृतस्य पूर्वार्द्धेन सम्भवः तेन केवलसंस्कृतत्वान्निरवद्यम् उत्तरार्द्धन्तु सङ्कीर्णमेव ॥ ८॥ भ०

तुङ्गा इत्यादि । गिरिवरदेहाः कुलपर्वतकायाः तुङ्गाः प्रांशवः अगमं सलिलम् अगस्त्यं यच्छेत्यादिनाप् समीरणो रसहारी अपामुच्छोषकः अहिम उष्णः रवेः किरणगणः एतत्सर्वं तव माया परमा महती संसारस्य कारणं सर्वथा त्वं विष्णुः त्वत्कृतेषु को रोष इति ॥ ९ ॥ ज० म०

तुङ्गा इत्यादि । गिरिश्रेष्ठानां देहास्तुङ्गा उच्चाः सलिलं समुद्रादि अगम्यं समीरणो वायो रसहारी जलशोषकः रवेः किरणगणोऽहिम उष्णः इत्यादिकं यत् सर्वं संसारस्य कारणं हेतुः तत्ते तव परमा माया महाकपटं एतेन त्वं विष्णुः स्वयं स्रष्टे मयि रोषोऽनुचित इति सूचितम् ॥९॥ भ०

आयासेत्यादि । यस्मात्संसारकारणं यदगम्यं सलिलं कृतं तस्मात्त्वं हे आयाससम्भवारुण ! रोषसम्भवेन रक्तीभूत ! संहारे प्रलये हिमहरा आदित्यास्तैः समा छाया यस्य बाणस्य तं संहर उपशमय वारिसमूहं सङ्गच्छ अङ्गीकुरु सकर्मकात्सम्मोगमित्यात्मनेपदं न भवति पुराणः शाश्वतः दर्शनीयो यो देहः तस्य वासमवस्थानम् ॥ १० ॥ ज० म०

आयासेत्यादि । हे आयाससम्भवारुण ! आयाससम्भवेन दुःखजनितेन क्रोधेनारुण ! रक्ताङ्ग ! त्वं वाणं संहर उपशमय कीदृशं वाणं संहारे प्रलये हिमहराः सूर्या वह्नयो वा तैः समा छाया कान्तिर्यस्य तं त्वं वारिसमूहं सङ्गच्छ अङ्गीकुरु रक्षेति भावः समोगमृच्छेति न मं सकर्मकत्वात् यतः पुराणस्य पर्वकालीनस्य चारोर्मनोज्ञस्य स्वदेहस्याभरं स्थानं आवास-

अमुलभहरिसञ्चारं जलमूलं बहलपङ्करुद्धायामम् ।
भण किं जलपरिहीणं सुगमं तिमिकम्बुवारिवारणभीमम् ॥११॥
गन्तुं लङ्कातीरं बद्धमहासलिलसञ्चरेण सहेलम् ।
तरुहरिणा गिरिजालं वहन्तु गिरिभारसंसहा गुरुदेहम् ॥१२॥

मित्यत्र प्राकृते मोविन्दुरित्यनुस्वार एव भवति संस्कृते तु यद्यपि मकारस्थितिरेव स्यात् तथा श्रुतेरभेदाद्भाषासमावेश इति इष्टा इति विद्यासागरः वा विरामे इत्यन्ये ॥ १० ॥ भ०

अमुलभेत्यादि । अन्यच्च यदेतज्जलमूलं जलस्यावस्थानम् आग्नेयशरशोषितत्वाज्जलपरिहीणं सत् तत् किं सुखेन गम्यत इति भण ब्रूहि यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यत्र तिमयो मत्स्याः कम्बवः शंखाः वारिवारणाः जलहस्तिनः तैर्भीमं एवं च सति अद्धुलभो दुर्लभः हरिसञ्चारो वानरपर्य्यटनं यत्रेति ॥ ११ ॥ ज० म०

अमुलभेत्यादि । एतद्‌जलमूलम् आग्नेयास्त्रेण जलपरिहीणमपि किं सुगमं सुखेन गम्यते इति भण ब्रूहि अपि तु नैव यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यस्य क्वापि पङ्काभावो नास्ति तिमिभिर्मत्स्यैः कम्बुभिः शङ्खैः वारिवारणैर्जलहस्तिभिर्भीमम् एवं सति अमुलभो दुर्लभो हरिसञ्चारो वानरपर्य्यटनं यत्र तिमिर्मीन इति हलायुधः अस्ति मत्स्यस्तिमिर्नाम दशयोजनविस्तृत इत्यन्ये अमुलभेत्यत्र हकारादेशो न भवति प्राकृते प्रायो ग्रहणादुक्तेः ॥ ११ ॥ भ०

गमनोपायमाह

गन्तुमित्यादि । सञ्चरन्त्यनेनेति सञ्चरः गोचरसञ्चरेति टच् बद्धो घटितो महासलिले यः सञ्चरः तेन सेतुना सहेलम् एकप्रहृत्या लङ्कातीरं लङ्कोपलक्षितं तटं गन्तुं तरुहरिणा वानरा गिरिभारस्य संसहाः क्षमाः संसहन्ते इत्यच् गिरिजालं गिरिसमूहं वहन्तु प्रापयन्तु गुरुर्देहः शरीरं यस्य गिरिजालस्य ॥ १२ ॥ ज० म०

गन्तुमित्यादि । बद्धो घटितो यो महासलिले सञ्चरः सेतुस्तेन सहेलं

हरहासरुद्धविगमं परकण्ठगणं महाहवसमारम्भे।
छिन्दन्तु रामबाणा गम्भीरे मे जले महागिरिबद्धे ॥ १३ ॥
गच्छन्तु चारुहासा वीररसाबन्धरुद्धभयसम्बन्धम्।
हन्तुं बहुबाहुबलं हरिकरिणो गिरिवरोरुदेहं सहसा ॥१४ ॥
एतानि षट् सङ्कीर्णानि।

सकौतुकं यथा स्यात् तथा लङ्कासम्बन्धितीरं गन्तुं गुरुदेहं महाकायं गिरिजालं पर्वतसमूहं वहन्तु कीदृशाः गिरिभारसंसहाः पर्वतवहनक्षमाः सह्यरत्यनेन लोक इति सह्यरः करणेऽण् ॥ १२ ॥ भ०

हरेत्यादि। मम जले गम्भीरे अगाधे महागिरिभिर्बद्धे सति यो महाहवस्य समारम्भः प्रवर्त्तनं तस्मिन् परस्य शत्रोः कण्ठगणं ग्रीवासमूहं हरस्य तुष्टत्वात् यो हासः तेन रुद्धो विगमश्छेदो यस्य तं रामशराश्छिन्दन्तु आशिषि लोट् ॥ १३ ॥ ज० म०

हरेत्यादि। मम गम्भीरेऽगाधे जले महागिरिभिर्बद्धे सति महायुद्धस्य समारम्भे प्रवृत्ते परस्य दशाननस्य कण्ठसमूहं रामस्य बाणाश्छिन्दन्तु आशिषि गो कीदृशं हरस्य हासेन रुद्धो निवारितो विगमोऽपायो यस्य रावणो महादेवस्य प्रीतये स्वशिरांसि छिन्नवान् ततस्तुष्टस्य महादेवस्य हासो जात इति प्रसिद्धिः भ ॥ १३० ॥

गच्छन्त्वित्यादि। बहवो बाहव एव वनं यस्य बाहूनां तरूणामिव बहुत्वात् तं रावणं वीररसस्य शौर्य्यस्य य आबन्धः सन्ततप्रवर्त्तनं तेन रुद्धो निवारितो भयसम्बन्धस्त्राससम्पर्को यस्य तं गिरिवरोरुदेहं गिरिवन्महाकायं सहसा हन्तुं तत्क्षणं हनिष्याम इति हरिकरिणः कपिहस्तिनः चारुहासाः मम जले बद्धे सति गच्छन्तु ॥ १४ ॥ ज० म०

एतानि षट् संकीर्णानि।

गच्छन्त्वित्यादि। हरिकरिणो वानरश्रेष्ठा आयासाभावात् सकौतुकाः सन्तः बहुबाहो रावणस्य बलं सैन्यं हन्तुं सहसा विरोधेन गच्छन्तु कीदृशं

जिगमिषया संयुक्ता बभूव कपिवाहिनी मते दाशरथेः ।
बुद्धजलालयचित्ता गिरिहरणारम्भसम्भवसमालोला ॥ १५ ॥

पूर्वार्द्धं निरवद्यम् ।

गुरुगिरिवरहरणसहं संहारहिमारिपिङ्गलं रामबलम् ।
आरूढं सहसा खं वरुणालयविमलसलिलगणगम्भीरम् ॥ १६ ॥

बलं वीररसस्य शौर्यस्य च आबन्धः सततप्रवर्त्तनं तेन रुद्धो निवारितो भयसम्बन्धस्त्राससम्पर्कौ यस्य गिरिवरस्येव उरुर्महान् देहो यस्य ॥१४॥ भ०

एतानि सङ्कीर्णानि संस्कृतप्राकृतयोस्तुल्यत्वात् ।

जिगमिषयेत्यादि । दाशरथेर्मतेऽभिप्राये सति कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव बुद्धजलालयचित्ता विदितसमुद्राभिप्राया गिरीणां यदाहरणमानयनं तस्य च आरम्भसम्भवः तेन समा लोला आकुला इत्येतदर्द्धं निरवद्यम् ॥ १५ ॥ ज० म०

जिगमिषयेत्यादि । दाशरथे रामस्य मते इच्छायां सत्यां कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव कीदृशी बुद्धम् अवगतं जलालयस्य समुद्रस्य चित्तं यया गिरीणां यत् हरणमानयनं तस्य च आरम्भसम्भवेऽनुष्ठानं तेन समा रामाज्ञानन्तरमेव चलितेति भावः लोला चञ्चला । पूर्वार्द्धं निरवद्यं संस्कृतमात्रत्वात् जिगमिषयेत्यादौ मूर्द्धन्यषादिश्रवणात् ॥१५॥भ०

गुर्वित्यादि । ततो रामबलं सहसा तत्क्षणं खमारूढं गुरूणां गिरिवराणां यदाहरणमानयनं तत्सहत इति मूलविभुजादित्वात् कः तस्य वा सहं शक्तं सहत इत्यच् संहारे प्रलये यो हिमारिरग्निः तद्वत्पिङ्गलं वरुणालयस्य समुद्रस्य यो विमलसलिलगणः निर्मलजलसमूहः तद्वद्गम्भीरं खमिति ॥ १६ ॥ ज० म०

गुरुगिरीत्यादि । ततो रामबलं कर्तृ सहसा तत्क्षणं खमाकाशम् आरूढं आरुरोह रुहः कर्त्तरि क्तः कीदृशं बलं गुरूणां गिरिवराणां यत् हरणमानयनं तत्सहं सहते इति पचादित्वादच् संहारे प्रलयकाले यो

अवगाढं गिरिजालं तुङ्गमहाभित्तिरुद्धसुरसञ्चारम्।
अभयहरिह्रासभीमं करिपरिमलचारुबहलं कन्दरसलिलम्॥१७
अलिगणविलोलकुसुमं सकमलजलमत्तकुररकारण्डवगणम्।
फणिसङ्कुलभीमगुहं करिदन्तसमूढसरसवसुधाखण्डम्॥ १८ ॥

हिमाद्रिरभिमतस्तद्वत् कपिलं तेजस्वित्वमपि तादृग् सूचितं खं कीदृशं वरुणालयस्य समुद्रस्य यो विमलः सलिलगणस्तद्वद्गम्भीरं दुरवगाहम् ॥ १६ ॥ भ०

अवेत्यादि। समारुह्य रामबलेन गिरिजालमवगाढम् अवष्टब्धं तुङ्गाभिरुच्छ्रिताभिर्महतीभिः परिणाहवतीभिर्भित्तिभीरुद्धः सुराणां सञ्चारो यस्मिन् तेषामुन्नतत्वात् अभया ये हरयः सिंहास्तेषां रासेन शब्देन भीमं भयानकं करिणां यः परिमलः संमर्दस्तेन चारु शोभनं बहलं घनं कन्दरसलिलं यस्मिन् ॥ १७ ॥ ज० म०

अवगाढमित्यादि। समारुह्य रामबलेन गिरिवृन्दमवगाढम् अवष्टब्धं तुङ्गाभिरुच्चाभिर्महतीभिः परिणाहवतीभिर्भित्तिभीरुद्धो निराकृतः सुरस्य सञ्चारो येन यत्र वा अभयानां हरीणां सिंहानां रासेन शब्देन भयानकं करिपरिमलेन हस्तिसंमर्दजनितमदगन्धेन चारु शोभनं बहलं प्रचुरं कन्दरसलिलं यत्र ॥ १७ ॥ भ०

अलिगणेत्यादि। अलिगणैर्विलोलानि कुसुमानि यत्र सकमलेषु जलेषु मत्ताः कुरराणां कारण्डवानाञ्च गणा तत्र फणिभिः सङ्कुला व्याप्ताः सत्यो भीमा गुहा यत्र करिदन्तैः समुत्क्षिप्तं सरसं सान्द्रं वसुधायाः खण्डं यत्र ॥ १८ ॥ ज० म०

अलिगणेत्यादि। कीदृशं गिरिजालम् अलिगणैर्भ्रमरसमूहैर्विलोलानि कुसुमानि यत्र सकमलेषु जलेषु मत्ताः कुरराणां कारण्डवानाञ्च पक्षिविशेषाणां गणाः समूहा यत्र फणिभिः सर्पैः संकुला व्याप्ता अत एव भीमा गुहा यत्र करिदन्तैः समूढमुत्क्षिप्तं सरसमार्द्रं वसुधायाः खण्डं यत्र ॥ १८ ॥ भ०

अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम् ।
रविमणिसम्भवहिमहरसमागमाबद्धबहुलसुरतरुधूपम् ॥ १९ ॥
हरिरवविलोलवारणगम्भीराबद्धसरसपुरुसंरावम् ।
घोणासङ्गमपङ्काविलसुबलभरसहोरुवराहम् ॥ २० ॥
एतानि पञ्च सङ्कीर्णानि ।

अरविन्देत्यादि । अरविन्दरेणुभिः पिञ्जराः पिङ्गला ये सारसास्तेषां रवेण हारि मनोहारि विमलं बहु चारु जलं यत्रेति रविमणिसम्भवः सूर्य्यकान्तमणिसम्भवः यो हिमहरः अग्निः तेन यः समागमः संश्लेषस्तेनाबद्धो जनितो बहुलः सुरतरुधूपो यत्र ॥ १९ ॥ ज० म०

अरविन्देत्यादि । पुनः कीदृशं गिरिजालम् अरविन्दानां रेणुभिः पिञ्जराः पिङ्गला ये सारसाः पक्षिभेदास्तेषां रवेण मनोहारि निर्मलं बहु चारु जलं यत्र रविमणिसमुत्पन्नेन हिमहरेणाग्निना यः समागमस्तेनाबद्धो जनितो विपुलः सुरतरुधूपो देवदारुधूपो यत्र तादृशं पीव इति प्राकृतसूत्रे बहुलाधिकाराच्च वकारादेशः ॥ १९ ॥ भ०

हरिरवेत्यादि । हरीणां सिंहानां यो रवस्तेन विलोलाश्चञ्चला ये वारणास्तैर्गम्भीरो मन्द्र आबद्धो जनितः सरसो भयानकरसयुक्तः पुरुर्महान् संरावो यत्र घोणासम्पर्कात् सम्भवो यस्य पङ्कस्य घोणासमुद्भूतो यः पङ्क इत्यर्थः तेनाविलाः लिप्ताङ्गाः सुबला तत एव भरसहाः उरवश्च वराहा यत्र तद्गिरिजालमवगाढमिति ॥ २० ॥ ज० म०

एतानि पञ्च सङ्कीर्णानि ।

हरिरवेत्यादि । पुनः कीदृशं गिरिजालं हरीणां सिंहानां रवेण शब्देन विलोलाश्चञ्चला ये वारणा हस्तिनस्तैर्गम्भीरमाबद्धो जनितः सरसो भयानकरसान्वितः पुरुर्महान् संरावः शब्दो यत्र घोणाया नासिकायाः सम्पर्कात् सम्भवो यस्य तेन पङ्केनाविला लिप्ताङ्गाः सुबला अत एव भरसहा उरवो महान्तो वराहा यत्र ॥ २० ॥ भ०

एतानि सङ्कीर्णानि प्राकृततुल्यत्वात् ।

उच्चख्नुः परिरब्धान् कपिसंघा बाहुभिस्ततो भूमिभृतः ।
निष्पिष्टशेषमूर्द्ध्नः शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान् ॥ २१ ॥

सर्वं निरवद्यम् ।

तुङ्गमहागिरिसुभरा बाहुसमारूढभिदुरटङ्का बहुधा ।
लवणजलबन्धकामा आरूढा अम्बरं महापरिणाहम् ॥ २२ ॥

उच्चख्नुरित्यादि । ततोऽवगाहादनन्तरं बाहुभिः परिरब्धान् समाश्लिष्टान् भूमिभृतः पर्वतान् कपिसंघा उच्चख्नुः उत्खातवन्तः गमहनेत्युपधालोपः निःशिष्टशेषमूर्द्ध्नः व्याप्तपातालमूलत्वात् चूर्णितनागराजमस्तकान् शृङ्गैः शिखरैर्विकीर्ण उष्णरश्मिरादित्यो नक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात् सर्वं निरवद्यमिति अत्र प्राकृतस्याप्रयुक्तत्वात् ॥ २१ ॥ ज० म०

उच्चख्नुरित्यादि । ततोऽवगाहानन्तरं कपिसंघाः कपिसमूहा बाहुभिः परिरब्धान् समाश्लिष्टान् भूमिभृतः पर्वतान् उच्चख्नुः उत्खातवन्तः कीदृशान् निःशिष्टाश्चूर्णिताः शेषस्यानन्तस्य मूर्द्धानो मस्तका यैः पातालमूलत्वात् शृङ्गैः शिखरैर्विकीर्णौ विक्षिप्त उष्णरश्मिः सूर्यो नक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात् ॥ २१ ॥ भ०

तुङ्गेत्यादि । तुङ्गा उच्चा महान्तः परिणाहवन्तो ये गिरयस्तैः सुभरा जातारम्भाः कपयः बाहुभिः समारूढा भिदुराः विदारणशीलाः टङ्का उन्नतप्रदेशा यैस्ते बहुधा अनेकप्रकारं लवणजलबन्धकामाः एवमेनं बद्धव्यमिति जातेच्छाः आरूढाः अम्बरं महापरिणाहम् अप्रमेयदिग्विभागम् ॥ २२ ॥ ज० भ०

तुङ्गेत्यादि । लवणजलस्य समुद्रस्य बन्धनं कामयन्तोऽभिलषन्तो वानरा अम्बरमाकाशमारूढा बहुधा अनेकप्रकारेण कीदृशाः तुङ्गैरुच्चैर्महद्भिः सपरिणाहैर्गिरिभिः सुभरा बहुभारान्विताः बाहुभिः समारूढा गृहीताभिदुरास्तेषां बाहुसम्बन्धात् स्वयमेव वा भिद्यमानाष्टङ्का उन्नतप्रदेशा यैः छिद्भिदिद इति कुरः कर्मकर्त्तर्य्येव कुर इति केचित् भिदुरो विदा-

बहुधवलवारिवाहविमला यसगुरुमहासिदेहच्छायम्।
बद्धविहङ्गममालं हिमगिरिमिव मत्तकुररवसम्बद्धम्॥ २३॥
चारुकलहंससङ्कुलमचण्डसञ्चारसारसाबद्धरवम्।
सकुसुमकणगन्धवहं समयागमवारिसङ्गविमलायामम्॥ २४॥

रणशील इत्यनेन कीदृशमम्बरं महापरिणाहम् अप्रमेयदिग्विभागं कामा आरूढा इति प्राकृते पद्ययोः सन्धिर्नेति पक्षे सन्ध्यभावः॥ २२॥ भ०

बह्वित्यादि। बहवो धवला वारिवाहा यत्राम्बरे विमलायसः अयसो विकारः गुरुरलघुर्महान् योऽसि खड्गः तस्य यो देहः तस्य छायेव छाया यस्य बद्धा विरचिता विहङ्गानां माला पङ्क्तिर्यत्र मत्तानां कुररानां रवेण सम्बद्धं युक्तम् अतो हिमगिरिमिवाम्बरमारूढा इति॥ २३॥ ज० म०

बहुधवलेत्यादि। पुनः कीदृशमम्बरं बहवो धवला वारिवाहा मेघा यत्र विमल आयसो लोहविकारो गुरुर्महान् योऽसि खड्गः तच्छरीरस्येव छाया शोभा यस्य बद्धा विरचिता सम्बद्धा वा विहङ्गमानां पक्षिणां माला पङ्क्तिर्यत्र मत्तानां कुररानां रवेण सम्बद्धं संयुक्तं हिमगिरिमिव हिमालयमिव॥ २३॥ भ०

चारुकलेत्यादि। चारुभिः कलहंसैः सङ्कुलं व्याप्तम् अचण्डसञ्चारैः शनैः सञ्चरद्भिः सारसैराबद्धो रवो यस्मिन् सकुसुमकणः सपुष्परेणुर्गन्धवहो वायुर्यत्रेति वहतीति वहः कर्त्तर्यच् गन्धस्य वह इति सः समयस्य प्रावृट्कालस्य य आगमः तेन यो वारिसङ्गः तेन प्रक्षालितत्वात् विमला आयामा यत्र तदम्बरमारूढा इति॥ २४॥ ज० म०

चारुकलेत्यादि। पुनः कीदृशमम्बरं चारुभिः कलहंसैः राजहंसैः कादम्बैर्वा सङ्कुलं व्याप्तं कलहंसस्तु कादम्बे राजहंसे नृपोत्तम इति विश्वः अचण्डसञ्चारैः शनैःशनैः सञ्चरद्भिः सारसैराबद्धो रचितो रवो यत्र सकुसुमकणः पुष्पावयवसहितो गन्धवहो वायुर्यत्र समयस्य वर्षाकालस्य आगमनेन यो वारिसङ्गस्तेन प्रक्षालितत्वात् विमल आयामो दैर्घ्यं यस्य सम्प्रति मेघशून्यत्वात्॥ २४॥ भ०

सहसा ते तरुहरिणा गिरिसुभरा लवणसलिलबन्धारम्भे ।
तीरगिरिमारूढा रामागमरुद्धसभयपरसञ्चारम् ॥ २५ ॥
एतानि चत्वारि सङ्कीर्णानि ।

सहसेत्यादि । ते तरुहरिणाः शाखामृगाः गिरिभिः सुभराः सन्तः लवणसलिलबन्धारम्भे समुद्रबन्धनारम्भे सहसा तत्क्षणं तीरगिरिं तटस्थितं पर्वतमारूढाः अत्र संस्कृतपक्षे संहिताया अविवक्षितत्वात् तीरगिरिमारूढा इति नोक्तम् अन्ये आरूढास्तीरगिरिमिति विपर्य्ययमस्य पठन्ति तदयुक्तं संस्कृतपक्षे असम्भवाद्यत्वं नास्ति अतो विसर्जनीयस्य सकार एव स्यात् रामस्य य आगमस्तेन रुद्धः सभयानां रिपूणां शत्रूणां सञ्चारो यत्र तीरगिरौ राम आगत इति तत्र भयात् सञ्चारं त्यक्तवन्त इति ॥२५॥ज०म०

एतानि चत्वारि सङ्कीर्णानि ।

सहसेत्यादि । ते तरुहरिणा वानरा गिरिभिः सुभरा महाभारान्विताः सन्तो लवणसलिलस्य समुद्रस्य बन्धनारम्भे सहसा तत्क्षणं तीरे स्थितं गिरिमारूढाः कीदृशं गिरिं रामस्यागमनेन रुद्धो निरस्तः सभयानां परेषां शत्रूणां सञ्चारो यत्र तीरगिरौ राम आयात इति भयात्तत्र शत्रवो न सञ्चरन्तीत्यर्थः तीरे गिरिमारूढा इति पाठो बहुप्राचीनपुस्तके दृश्यते आरूढास्तीरगिरिमिति पाठे प्राकृते विसर्गलोपात् सङ्कीर्णत्वं न स्यात् लुप्तविसर्गपाठे संस्कृतत्वभङ्ग इति मन्यमानाः प्राहुस्तीरे गिरि आरूढा इति तीरपदमसमस्तं गिरिपदेन च समासं कृत्वा विसन्धिं पठन्ति यद्यपि वैकस्वस्यार्थोऽसे इति समासे नित्य एव सन्धिस्तथापि खवातोऽडौरिति डित्करणेन सन्धेरनित्यत्वज्ञापनात् मातृस्वर्षावुज इति दर्शनाच्च समासेऽपि क्वचित् सन्धिर्न भवतीति बोध्यं समासेऽपि क्वचिद्विसन्धिरिति पाणिनीयाः इकश्चासवर्णे नित्यसमासवर्ज्जमिति क्रमदीश्वरस्तत्र नित्यसमासवर्जनाद्विकल्पसमासेऽत्र पक्षे प्रकृतिभावः स्फुट एव एवं परसञ्चारमित्यत्र परसञ्चारे इति पठित्वा तीरविशेषणं वदन्ति तीरगिरिमारूढा इति पाठो न युक्तश्छन्दोभङ्गात् ॥ २५ ॥ भ०

ततः प्रणीताः कपियूथमुख्यैर्न्यस्ताः क्रमानीलतनयेन सम्यक् ।
अकम्प्रवप्राग्रनितम्बभागा महार्णवं भूमिभृतोऽवगाढाः ॥ २६ ॥

निराख्यातनिरवद्यम् ।

तेनेऽद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः ।
तत्रास शत्रुर्ददृशे सुवेलः प्रापि जलान्तो जहृषुः प्लवङ्गाः ॥ २७ ॥

एकान्तराख्यातनिरवद्यम् ।

एतानि चत्वारि सङ्कीर्णानि प्राकृतसमानत्वात् ।

तत इत्यादि । ततोऽनन्तरं भूमिभृतः पर्व्वताः कपियूथमुख्यैर्नीलादिभिः क्रमानीलतनयस्य नलस्य प्रणीताः अर्पिताः सन्तस्तेनैव क्रमानुतनयेन सम्यक् साधु न्यस्ताः सन्तः महार्णवम् अवगाढाः अवष्टब्धवन्तः अकम्प्राः स्थिराः वप्राग्रनितम्बानां भागा येषान्ते वप्रो मूलम् इत्यजिदी उच्चविभ्यो नमित्यधिकृत्य बन्धेर्बधि बुधोचेधौणादिको नक् इदं निराख्यातं तिङन्तपदाभावात् निरवद्यञ्च प्राकृताभावात् ॥ २६ ॥ ज० म०

तत इत्यादि । तदनन्तरं कपियोधमुख्यैर्नीलादिभिः प्रणीता दत्ता क्रमानोरग्नेस्तनयेन नलेन सम्यक् साधु न्यस्ता अर्पिता भूमिभृतः पर्व्वताः महार्णवम् अवगाढाः आच्छादयामासुः कीदृशाः अकम्प्राः अकम्पनशीलाः स्थिरा वप्रानितम्बभागा येषां मूलं वप्रोऽङ्घ्रिनामक इत्यमरः बुध्दौङन्देने नाम्नप्रत्येतिक् चेति क्तः वृधुङल्डट्ढौ इत्यस्मात् क्त इति केचित् वप्रशब्दोऽपि दृश्यते अग्रं श्टङ्गं नितम्बो मध्यं निराख्यातमाख्यातप्रत्ययरहितं निरवद्यं केवलसंस्कृतत्वात् तालव्यशादिमत्त्वात् ॥ २६ ॥ भ०

तेन इत्यादि । अद्रिबन्धस्तेने शनैर्विस्तारं गतः अत एव ववृधे पयोधिर्वृद्धिं गतः गिरिभिः पूर्य्यमाणोदरत्वात् तीरं प्लावयति स्म तुतोष रामस्तुष्टवान् सुकरमिदानीं शत्रुव्यापादनमिति मुमुदे कपीन्द्रः हृष्टवान् प्राप्तो मे प्रत्युपकारकाल इति तत्रास शत्रुः त्रासमुपगतः सेतुं बद्ध्वा इदानीमायातो राम इति ददृशे सुवेलः ढौकमानैः सर्व्वैर्दृष्टः जालान्तश्च प्रापे प्राप्तः ततो जहृषुः हृष्टाः प्लवङ्गाः स्वाम्यादेशः सम्पादित इति । एतदेकान्तराख्यातं सुबन्तपदैर्व्यवधानात् निरवद्यञ्च प्राकृताभावात् ॥ २७ ॥ ज० म०

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः।
आस्फोटयाञ्चक्रुरभिप्रणेदूरेजुर्ननन्दुर्वियुः समीयुः॥ २८॥
आख्यातमाला।

तेन इत्यादि। तद्वीर्या वर्त्मसेतौ वानरैर्विस्तारितः पयोनिधिर्वृद्धिं गतः पर्वतैः पूर्य्यमाणत्वात् तीरं प्लावितवानित्यर्थः रामस्तुतोष तुष्टः सुकरमिदानीं शत्रुव्यापादनमिति मत्वा कपीन्द्रः सुग्रीवो मुमुदे हृष्टः प्राप्तो मे प्रत्युपकारकाल इति मत्वा शत्रुर्दशाननस्तत्रास भीतः अत्रापि राम आगत इति मत्वा सुवेलो ददृशे वानरैर्दृष्टः यतो जलस्यान्तोऽवसानं प्रापे प्राप्तः अत एव प्लवङ्गा वानरा जहृषुर्हृष्टाः स्वाम्यादेशः सम्पादित इति मत्वा। एतदेकान्तराख्यातं स्वाद्यन्तपदैर्व्यवधानात् निरवद्यञ्च प्राकृताभावात् ॥ २७ ॥ भ०

भ्रेमुरित्यादि। ते पारं प्राप्य केचित् प्रदेशदर्शनोत्सुकाः भ्रेमुः भ्रान्ताः अन्ये ववल्गुः तोषङ्गतवन्तः उख उखीत्यत्र वल्गतिर्गतौ पठ्यते केचिदतिहर्षात् ननृतुः अन्ये रावणपराक्रमान् न्यक्कुर्व्वन्तो जजक्षुः हसितवन्तः बुभुक्षया वा फलानि भक्षितवन्तः जक्ष भक्ष्यहसनयोः केचित् जगुः गायन्ति स्म केचिदम्बरं पुप्लुविरे उत्प्लुत्योत्प्लुत्य गच्छन्ति स्म केचित् भ्रान्ता निषेदुः निषण्णाः केचिदास्फोटयाञ्चक्रुर्वयं युध्याम इति आस्फोटं कुर्व्वन्तीति शयन्ताच्छिद्धाम् केचित्तोषादभिप्रणेदुः सुष्ठु नादितवन्तः केचिद्रेजुः दीप्तवन्तः केचिन्ननन्दुर्वयमीदृशं कर्म्म कृतवन्त इति अन्ये वियुरितस्ततो गच्छन्ति स्म केचित्समीयुः एकत्र सङ्गताः आख्यातमालेति तिङन्तमाला ॥ २८ ॥ ज० म०

भ्रेमुरित्यादि। सेतुना पारं प्राप्य केचित् भ्रेमुः प्रदेशदर्शनोत्सुका इतस्ततो गताः अपरे ववल्गुः वल्गितवन्त वलगुद्भजे अनेकार्थत्वात् हर्षादिहेतुकप्रलापार्थेऽपि वर्त्तते अन्ये ननृतुः हर्षात् नृत्यं चक्रुः अन्ये जजक्षुः फलानि भक्षितवन्तः हर्षात् हसितवन्तो वा जक्षभक्ष्यहसनयो केचित् जगुः गायन्ति स्म केचित् समुत्पुप्लुविरे उत्प्लुत्य गतवन्तः के-

गिरिपङ्कचारुदेहं कक्कोललवङ्गबद्धसुरभिपरिमलम् ।
बहुबहलोरुतरङ्गं परिसरमारूढमुद्धरं लवणजलम् ॥ २९ ॥
लोलं कूलाभिगमे खे तुङ्गामलनिबद्धपुरुपरिणाहम् ।

चिच्छिदुः श्रमापनोदनार्थमुपविष्टाः केचिदास्फोटमहङ्कारं चक्रुः तेः कथाख्याने ञि अन्येऽभिषषेदुः पुरीसान्निध्ये शब्दं चक्रुः केचित् रेजुः पुष्पादिना शोभितगात्राः अन्ये ननन्दुः सनकत्वात् हर्षं प्रापुः केचित् वियुः यूथादन्यत्र गताः कौतुकात् अपरे समीयुः एकत्र सम्भूय स्थिता आख्यातमालेति पुष्पतुल्यानां क्रियापदानां ग्रथनात् उपसर्गस्य लिङ्गत्वेऽपि पृथक् स्थितत्वाभावात् क्रियाद्योतकत्वेनाख्याततुल्यतया व्यपदेशः ॥ २८॥ भ०

गिरीत्यादि । गिरीणां प्रस्रियमाणानां यः पङ्कः गैरिकादिधातुकर्दमः तेन चारुदेहं कक्कोललवङ्गाभ्यां बद्धः सुरभिः परिमलो गन्धो यस्मिन् बहवः प्रभूता बहलाः स्थूला उरवः उच्चास्तरङ्गा यस्य तदीदृशं लवणजलम् उद्धरम् उद्धृतं कर्मीभूतं परिसरं तटमारूढं सेतुना निवारितगतित्वात् ॥ २९ ॥ ज० म०

गिरिपङ्केत्यादि । लवणजलं कर्त्तृ परिसरं पर्यन्तभुवं तटमारूढं प्राप सेतुना निवारितगतित्वात् कीदृशं जलं गिरीणां प्रच्छिन्नानां यो गैरिकादिधातु-पङ्कस्तेन चारु देहं यस्य वर्णोत्करोत्पादनात् कक्कोलैर्लवङ्गैश्च गन्धद्रव्यविशेषैर्बद्धो रचितः सुरभिः परिमलो विमर्दोत्थो गन्धो यत्र बहवः प्रचुरा बहला स्थूला उरव उच्चास्तरङ्गा यस्य उद्धरं मर्यादामतिक्रान्तं प्रकृते कक्कोलशब्दस्य नानुस्वारविधिः कक्कोलशब्दस्यैव तत्रोल्लेखात् यत्तु कर्पूरमञ्जर्यां कङ्कोलीकुलं कुपित इति तत्रापि कक्कोलीत्येव पठनीयं लेखकप्रमादादनुस्वारपाठः वैकल्पिकोऽप्यनुस्वार इत्यन्ये ॥२९॥ भ०

लोलमित्यादि । कूलाभिगमे तटगमने लोलं चञ्चलं खे आकाशे तुङ्गञ्च तदमलञ्चेति तुङ्गामलं निबद्धः संयुक्तः पुरुर्महान् परिणाहो यस्य तुङ्गामलञ्च तन्निबद्धपुरुपरिणाहञ्चेति वियति आरोहपरिणाहाभ्यां युक्त-

सुरगङ्गाभरणसहं गिरिबन्धवरेण लवणसलिलं रुद्धम् ॥ २० ॥
आरूढश्च सुवेलं तरुमालाबन्धहारिगिरिवरजालम् ।
रावणचित्तभयङ्करमापिङ्गललोलकेसरं रामबलम् ॥ २१ ॥
लङ्कालयतुमुलारवसुभरगभीरोरुकुञ्जकन्दरविवरम् ।

अन्यर्थः सुरगङ्गायाः मन्दाकिन्याः यद्भरणं पूरणं तत्र सहं शक्तं तादृशं लवणजलं गिरिबन्धवरेण सेतुना रुद्धम् ॥ २० ॥ ज० म०

लोलमित्यादि । गिरिबन्धवरेण सेतुना लवणजलं रुद्धं कीदृशं कूलाभिगमे तटागमने लोलं चञ्चलं खे आकाशे लङ्गश्च तदनलङ्घेति लङ्गासलं निरुद्धः संयुक्तः पुरुसोहात् परिणाहो विशालता यस्य लङ्गामलञ्च तत् निरुद्धपुरुपरिणाहञ्चेति विग्रहः खे आरोहपरिणाहाभ्यां युक्तमित्यर्थः सुरगङ्गाया मन्दाकिन्याः पूरणे समर्थं विस्तृतत्वात् प्राकृते कूलाभिगमे इत्यत्र भकारस्य हकारो न भवति प्रायोग्रहणात् ॥ २० ॥ भ०

आरूढमित्यादि । रामबलं तटे स्थित्वा आरूढञ्च सुवेलं पर्वतं चकारस्य प्राकृते स्वरशेषता न भवति पदमध्यान्वयोरवर्त्तमानत्वात् तरुमालाया य आबन्धः तेन हारि मनस्तुष्टिकरं तादृशं गिरिवराणां पर्य्यन्तगिरीणां जालं यस्य सुवेलस्य रावणचित्तस्य भयङ्करं रामबलं आपिङ्गलानि लोलानि केशराणि यस्य तदिति ॥ २१ ॥ ज० म०

आरूढमित्यादि । रामबलं समुद्रमुत्तीर्य्य सुवेलं पर्वतमारूढं चकारस्य प्राकृते लोपो न भवति पदमध्यान्वयोरवर्त्तमानात् कीदृशं सुवेलं तरुमालाया आबन्धेन वेष्टनेन हारि मनोहारि पर्य्यन्तगिरिवरजालं यस्य यत्र वा रामबलं कीदृशं रावणचित्तस्य भयजनकं आपिङ्गलानि लोलानि चञ्चलानि केशराणि यस्य केसरशब्दो दन्त्यमध्यः ॥ २१ ॥ भ०

लङ्केत्यादि लङ्कालयानां राक्षसानां यस्तुमुलो महानारवः तेन सुभराः सुपरिपूर्णाः गम्भीरोरुकुञ्जा गम्भीरमहागह्वराणि । कन्दरविवराणि च यत्र

वीणारवरससङ्गमसुरगणसङ्कुलमहातमालच्छायम् ॥ १२ ॥

सरसबहुपल्लवाविलकेसरहिन्तालबद्धबहलच्छायम् ।

ऐरावणमदपरिमलगन्धवहाबद्धदन्तिसंरम्भरसम् ॥ २३ ॥

सुवेले वीणारवे यो रसस्तृष्णा तेन सङ्गमः समागमो येषां सुरगणानां सुरगणास्तेति सः तैः सङ्कुला व्याप्ता महातमालच्छाया यत्रेति ॥ १२ ॥

जं० मं०

लङ्केत्यादि । कीदृशं लङ्कालयानां राक्षसानां यस्तुमुलो महानारवस्तेन सुभराणि परिपूर्णानि गम्भीराणि उद्धाणि महान्ति कुञ्जानि कन्दराणि विवराणि च यस्य यत्र वा वीणारवस्य रसेनेच्छया यः सङ्गमः परस्परमिलनं तेन हेतुना सुरगणैः संकुला व्याप्ता महातमालतरुच्छाया यत्र वीणारवरसेन सङ्गमो येषां सुरगणानामित्यन्ये ॥ १२ ॥ भ०

सरसेत्यादि । सरसाः सार्द्राः ये बहवः पल्लवाः तैराविला अन्धकारिता ये केसरहुमाः हिन्तालद्रुमाश्च तैर्बद्धा बहुला घना छाया यत्र सुवेले ऐरावणस्य ऐरावतस्य हस्तिनो मदपरिमलो यस्मिन् गन्धवहे तादृशेन गन्धवहेन बद्धो दन्तिनां हस्तिनां संरम्भरसः क्रोधरसो यत्रेति ऐरावण ऐरावत इत्युभयमपि प्राकृते साधु ॥ २३ ॥ जं० मं०

सरसेत्यादि । पुनः कीदृशं सुवेलं सरसैः स्निग्धैर्बहुभिः पल्लवैराकुला व्याप्ता ये केसरा हिन्तालाश्च दृक्षास्तैर्बद्धा जनिता बहला निबिडा छाया यत्र पल्लवाविलकेसरेति पाठे आविला अन्धकारिताः ऐरावणसम्बन्धिनो मदस्य परिमलो यत्र तादृशेन गन्धवहेन बद्धो जनितो दन्तिनां क्रोधरसो यत्र ऐरावत ऐरावण इत्युभयं प्राकृते साधु यद्यप्यैकारस्य प्राकृते नित्यमेकारादेश उक्तस्तथापि ऐदेता च कैषाञ्चिदित्युक्तत्वात् तन्मते वेदृशद्राहृतं अधके उरस्थ्यते अर्थमिति ॥ २३ ॥ भ०

तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजालम् ।
हरिणभयङ्करसकुसुमदावसमच्छविविलोलदाडिमकुञ्जम् ॥ २४ ॥
कलहरिकण्ठविरावं सलिलमहाबन्धसङ्कुलमहासालम् ।

तुङ्गेत्यादि । तुङ्गतरूणां या छाया तस्यां रोहन्तीति इगुपधलक्षणः कः तुङ्गतरुच्छायारुहाः विटपाः तेषां कोमलं हरिहरितं हारि तुष्टिकरं लोलं पल्लवजालं यत्र हरिणानां भयङ्करादावसदृशत्वात् सकुसुमा दावसमच्छवयः दावाग्नितुलाः लोलदाडिमकुञ्जा यत्र ॥ २४ ॥ ज० म०

तुङ्गेत्यादि । पुनः कीदृशं सुवेलं तुङ्गानां तरूणां छायासु रूढं जातं अत एव कोमलं मृदु हरिद्वर्णं हारि मनोहरं लोलं चञ्चलं पल्लवानां जालं समूहो यत्र हरिणानां भयङ्करो दावसादृश्याद्भयजनकः सकुसुमः पुष्पैः सह वर्त्तमानः अतएव दावेन वनाग्निना समा छविस्तुल्यकान्तिर्विलोलश्चञ्चलो दाडिमकुञ्जो यत्र अग्निशिखापि लोला भवति दवौ दावौ वनारण्यवह्नी इत्यमरः रुहेरिगुपधत्वात् कगृप्रामीजुडु इति कः पल्लववालमिति केचित् पठन्ति तदा संस्कृते बालशब्दस्य नञार्थस्य विशेषणस्य परनिपातोऽभिधानात् कर्त्तुं शक्यते प्राकृते तु पूर्वनियम एव तस्मात् पल्लवं वलति धारयतीति ढातुर्षार्थिति षण् प्राकृते छविशब्दे वकारलोपो न भवति तत्र प्रायोग्रहणात् दाडिमेत्यत्र दालिमेति क्वचित्पाठः संस्कृते डलयोरलयोरैक्यमिति परः स्मृते मनीषादित्वात्तादूप्यं प्राकृते डोल इति लत्वं क्वचिन्न भवति तत्र प्रायोग्रहणात् हेमचन्द्रेण तु टवर्गस्य बाल इत्युक्त्वा दाडिमं दालिममित्युदाहृतम् ॥ २४ ॥ म०

कलेत्यादि । कलो मनोहरः हरीणां कण्ठविरावो यत्र सलिलस्य यो महाबन्धस्तेन सङ्कुला महान्तः सालाः सालवृक्षा यत्र चलकिसलयेषु लग्नं संलग्नं सलिलकणमयं सलिलकणरूपं मणिजालं मणिसमूहमिव विवहन्तं धारयन्तम् ॥ २५ ॥ ज० म०

चलकिसलयसम्बद्धं मणिजालं सलिलकणमयं विवहन्तम् ॥२५॥
तुङ्गमणिकिरणजालं गिरिजलसङ्घट्टबद्धगम्भीररवम् ।
चारुगुहाविवरसभं सुरपुरसममभरचारणसुसंरावम् ॥ २६ ॥
विमलमहामणिटङ्कं सिन्दूरकलङ्कपिञ्जरमहाभित्तिम् ।

कलहेत्यादि । पुनः कीदृशं सुवेलं कलोऽव्यक्तमधुरो हरेः सिंहस्य कण्ठविरावो यत्र सलिलसहावन्धेन सेतुना संकुलाः पयोव्याप्ता महान्तः सालदृचा यत्र चञ्चलैः किसलयैः पल्लवैः संयुक्तं मणिजालं विवहन्तं विशेषेण धारयन्तं मणिजालं कीदृशं सलिलकणान् मिनोति अतिस्निग्धत्वात् प्रक्षिपतीति पचादित्वादन् सलिलकणाः प्रस्तुता यत्रेति वा अभिधानात् प्रस्तुतवृत्तेर्मयट् सलिलसालकिसलयशब्दादन्यान्विताः ॥ २५ ॥ भ०

तुङ्गेत्यादि । तुङ्गमणीनां किरणजालं यत्रेति गिरिजलानि निर्झरजलानि तेषां यः सङ्घट्टः परस्परसंश्लेषस्तेन बद्धो गम्भीरो रवो यत्र चारु गुहाविवरमेव सभा शाला यत्र अमरचारणानां गन्धर्वाणां गायतां शोभनः संरावो यत्र अतएवामरपुरसमम् ॥ २६ ॥ जं० म०

तुङ्गमणीत्यादि । पुनः कीदृशं तुङ्गं मणिकिरणजालं यत्र गिरिजालानां सङ्घट्टेन मिथोऽभिघातेन बद्धो जनितो गम्भीररवो यत्र चारु गुहाविवरमेव सभा गृहं यत्र अमरचारणानां गन्धर्वाणां शोभनः संरावो यत्र अत एव अमरपुरस्य समानमिति ॥ २६ ॥ भ०

विमलेत्यादि । विमलमहामणीनां पद्मरागादीनां टङ्काः छेदा यत्र अतश्च सिन्दूरकलङ्केन लाञ्छनेन पिञ्जरा इव महाभित्तयो यस्य वीराणां हरीणां दन्तिनाञ्च यः सङ्गमोऽन्योन्यगमनं तस्माद्भयन्तेन रुद्धा निवारिता विभावर्यां विहारसमीहा विहरणेच्छा यत्र ॥ २७ ॥ जं० म०

विमलेत्यादि । पुनः कीदृशं सुवेलं विमला महामणीनां टङ्काश्छेदा यत्र अत एव सिन्दूरस्य कलङ्केन लाञ्छनेन पिञ्जरा महाभित्तयो यत्र वी-

वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीहम् ॥ २७ ॥
समहाफणिभीमबिलं भूरिविहङ्गतुमुलोरुघोरविरावम् ।
वारणवराहहरिवरगोगणसारङ्गसङ्कुलमहासालम् ॥ २८ ॥
चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधम् ।

राणां सिंहानां दन्तिनाञ्च यः सङ्गमो मिथः संसर्गस्तस्माद्भयेन रुद्धा निरस्ता विभावर्य्यां रात्रौ विहारसमीहा विहरणेच्छा यत्र विभावर्य्याः पुंश्चल्या विहारसमीहा यत्रेति वा विभावरी हरिद्रायां कुट्टिन्यां चन्द्रयोषितीति विश्वः प्राकृते भकारस्य हकारो न भवति तत्र प्रायोग्रहणात् ॥ २७ ॥ भ०

समेत्यादि । समहाफणीन्यतएव भीमानि बिलानि विवराणि यत्र भूरीणां विहङ्गमानां तुमुलोऽनेकप्रकार उरुर्म्महान् घोरो रौद्रो विरावो यत्र वारणादिभिः स्कन्धकषणार्थिभिः सङ्कुला महासाला यत्र ॥२८॥ज०म०

समहाफणीत्यादि । पुनः कीदृशं सुवेलं महाफणिसहितानि अत एव भीमानि बिलानि विवराणि यत्र भूरीणां बहूनां विहङ्गानां तुमुलोऽनेकरूपो व्याकुलो वा उरुर्म्महान् घोरो रौद्रो विरावो यत्र हस्तिभिः शूकरैः सिंहवरैर्गोगणैर्हरिणैश्च सङ्कुलाः स्कन्धकण्डूयनार्थं व्याप्ता महान्तः सालवृक्षा यत्र नाम्नप्रन्येतिक् चेति सर्त्तेरङ्गण् प्रत्ययः सारङ्गोदन्त्यादिः ॥ २८ ॥ भ०

चलेत्यादि । चलैः किसलयैः हस्तैरिव सविलासं प्रारब्धनृत्यं चारूणां महाकमलानां स्थलजानां रेणुभिः पिञ्जरा वसुधा यत्र सकुसुमा केसराः वाणाश्च यत्र लवङ्गतरोस्तरुणा या वल्ल्यः प्ररोहस्ता एव वरो हासो विकाशाख्यो यत्र ॥ २९ ॥ ज० म०

चलेत्यादि । पुनः कीदृशं सुवेलं चञ्चलैः किसलयैर्हस्तैरिव सविलासं प्रारब्धनृत्यमिव चारुमहीकमलानां शोभनस्थलपद्मानां रेणुभिः पिञ्जरा वसुधा यत्र सकुसुमाः केसराः पुन्नागा वाणाञ्झिण्टयो यत्र लवङ्गतरोस्तरुण्या

सकुसुमकेसरवाणं लवङ्गतरुतरुणवल्लरीवरहासम् ॥ ३९ ॥

अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमम् ।

अमरारूढपरिसरं मेरुमिवाविरलसरसमन्दारतरुम् ॥ ४० ॥

फलभरमन्थरतरुवरमविदूरविरूढहारिकुसुमापीडम् ।

वल्लर्य्या मञ्जर्य्या वरः श्रेष्ठो हासो विकाशो यत्र एतेन लवङ्गतरोर्नायकत्वं मञ्जर्य्याश्च नायिकात्वं व्यङ्ग्यम् ॥ ३९ ॥ भ०

अमलेत्यादि । अमलमणीनां हेमादीनां टङ्काश्छेदा यत्र तुङ्गा उच्चा महती विस्तारवती या भित्तिस्तया रुद्धो रुरूणां मृगाणां पङ्कगमः पङ्केन गमनं यत्र गमेर्य्यहेत्यादिना अप् । वङ्कगम इति पाठान्तरं तत्र रुद्धा कुटिलो गमो यत्र वकिकौटिल्ये इत्यस्य रूपं अमरैराल्ढाः परिसरास्तटा यत्र अविरलाः सरसा मन्दारतरवो देवद्रुमा यत्र तमिमं मेरुमिव ॥ ४० ॥ ज० म०

अमलमणीत्यादि । पुनः कीदृशं सुवेलं अमलानां निर्म्मलानां मणीनां हेम्नाञ्च टङ्काश्छेदा यत्र पूर्व्वं मणिटङ्कमात्रमुक्तं सम्प्रत्युभयटङ्क इति भेदः किंवा अमला मणयो यत्रेति विग्रहः तुङ्गा उच्चा महती विस्तीर्णा या भित्तिस्तया रुद्धो रुरूणां मृगविशेषाणां पङ्के गमो गमनं यत्र वङ्कगममिति पाठे वङ्कः कुटिलो गमो यत्र वकिङ् कौटिल्ये इत्यस्य रूपं अमरैराल्ढः परिसरः पर्य्यन्तभूर्यस्य अविरला घनाः सरसा मन्दारतरवो देवद्रुमा यत्र अत एव मेरुमिव ॥ ४० ॥ भ०

फलेत्यादि । फलभरेण मन्थरा ईषन्नतास्तरुवरा यत्र अविदूरे विरूढा हारिणः कुसुमापीडा यत्र पुष्पस्तवकानां हस्तप्राप्यत्वात् हरिणकलङ्कमणिः महाचन्द्रकान्तः तस्मात् सम्भवो यस्य बहुवारिणः तेन सुरभाः परिपूर्णा गम्भीरा गुहा यस्य अत्र सन्धिग्रहृतया वारिमहत्वात् गम्भीरगुहापूरकमिति ॥ ४१ ॥ ज० म०

हरिणाङ्कमणिसम्भवबहुवारिभरसुगम्भीरगुहम् ॥ ४१ ॥
जलकामदन्तिसंकुलसहेमरसचारुधवलकन्दरदेहम् ।
अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरिमणिकिरणम् ॥ ४२ ॥
गाढसमीरणसुसहं भीमरवोत्तुङ्गवारिधरसंवट्टम् ।

फलभरेत्यादि । पुनः कीदृशं सुवेलं फलभरेण मन्थरा ईषन्नम्रास्तरुवरा यत्र अविदूरे समीपे विरूढा उत्पन्ना हारिणो मनोहराः कुसुमापीडाः पुष्पस्तबका यत्र हरिणाङ्कमणेश्चन्द्रकान्तात् सम्भवो येषां तादृशैर्बहुभिर्वारिभिः सुभरा परिपूर्णा गम्भीरगुहा यस्य मणिबाहुल्येन वारिबाहुल्यं तेन गम्भीरस्थानपूरणं प्राकृते आपीडशब्दे पकारस्य वकारादेश ईकारस्य लोपो भवति यथा आवेड इति तथापि बहुलाधिकाराम्न भवति॥४१॥ भ०

जलेत्यादि । जलमिच्छद्भिरेवं कान्तैर्दन्तिभिः सङ्कुलाः सहेमरसा सह हेमरसेन वर्त्तमानाः चारवः शोभनाः धवलाः कन्दरगेहाः कन्दरसन्निवेशा यत्र रोहणं रोहः अङ्कुराद्रोहो यस्य शस्यस्य तेन समच्छवयस्तुल्यवर्णा रुरुगणास्तैः संलीढाः तरलास्सञ्चला: हरिमणिकिरणा मरकतमयूखा यत्र ॥ ४२ ॥ ज० म०

जलकामेत्यादि । पुनः कीदृशं सुवेलं जलं कामयन्ते जलकामा हस्तिमत्तैः संकुला व्याप्ताः सहेमरसाः सुवर्णपारदसहिताः चारवः शोभना धवलाः शुक्लाः कन्दरदेहा गुहासन्निवेशा यत्र अङ्कुरात् रोहः सम्भवो यस्य शस्यस्य अङ्कुरस्य प्ररोहो वा तेन समच्छवयस्तुल्यवर्णा अतएव भ्रमात् रुरूणां मृगविशेषाणां गणैः संलीढा जिह्वया स्पृष्टास्तरलाश्चञ्चला हरिमणीनां इन्द्रनीलमणीनां किरणा यत्र हरिशब्दो हरितपर्य्यायः ॥ ४२ ॥ भ०

गाढेत्यादि । गाढो महान् यः समीरणः तं सुसहत इति मूलविभुजादित्वात्कः भीमरवास्तुङ्गा ये वारिधरास्तेषां संवट्ट यत्र धवला ये जलवाहास्तेषां मालाया यत्सम्बद्धं यः सम्बन्धः सम्बन्धनं भावे क्तः तेन

धवलजलवाहमालासम्बन्धाबद्धहिमधराधरलीलम् ॥ ४३ ॥

लवणजलबन्धसरसं तरुफलसम्पत्तिरुद्धदेहायासम् ।

लङ्कातोरणवारणमारूढं समरलालसं रामबलम् ॥ ४४ ॥

कारणभूतेन आबद्धा अनुकृता हिमधराधरस्य हिमवतो धराधरस्य लीला विभ्रमो येन तं सुवेलं आरूढम् ॥ ४३ ॥ ज० म०

गाढमित्यादि । पुनः कीदृशं सुवेलं गाढो महान् यः समीरणो वायुस्तस्य सुसहं पचाद्वित्वादन् अतिस्थिरत्वात् भीमरवा उत्तुङ्गाश्च ये वारिधरा मेघास्तेषां सङ्गः संश्लेषो यत्र भीमरवेति उत्तुङ्गेति सङ्गविशेषणं वा वरोत्तुङ्गेत्यत्र यद्यपि प्राकृते लोपोऽच इत्यनेन अचि परे अचो लोपे रवुत्तुङ्गेति स्यात् तथापि बहुलाधिकारान्नास्ति लोपः धवलानां मेघानां मालया यत्सम्बन्धं आबद्धा सम्बन्धेति क्वचित्पाठः तेन कारणभूतेनाबद्धा कृता हिमधराधरस्य हिमालयपर्वतस्य लीला विभ्रमो येन तं सुवेलमारूढं रामबलमिति सम्बन्धः ॥ ४३ ॥ भ०

लवोदयस्तोदरादिकुलकम् ।

रामबलं कीदृशमित्याह

लवणेत्यादि । लवणजलबन्धाद्धेतोः सरसं सहर्षं तरुफलसम्पत्त्या रुद्धोऽपनीतः देहायासः क्षुत्पीडा यस्य लङ्कातोरणस्य वारणं निषेधकं आलोकं चक्षुर्न समरलालसं रणाभिलाषं रामबलं तं सुवेलमारूढमिति पूर्वेण योज्यम् ॥ ४४ ॥ ज० म०

लवणेत्यादि । रामबलं आरूढं सुवेलमिति पूर्वोक्तमिहापि योज्यं विशेषाभिधानाय पुनरुक्तमस्यादोषत्वात् आरूढमित्यत्रालोलमिति पाठे रामबलं समरलालसं जातमित्यर्थं साध्यं कीदृशं रामबलं लवणजलबन्धात्सरसं सहर्षं तरुफलसम्पत्त्या रुद्धोऽपनीतो देहायासो बुभुक्षापीडा यस्य तरुफल-

उरुपणववेणुगुञ्जाभेरीपेरोरुझल्लरीभीमरवम् ।
ढक्काघण्टातुमुलं सन्नद्धं परबलं रणायासहम् ॥ ४५ ॥
आरूढवाणघोरं विमलायसजालगूढपीवरदेहम् ॥
चञ्चलतुरङ्गवारणसंघट्टाबद्धचारुपरिणाहगुणम् ॥ ४६ ॥

सम्पत्तिबद्धदेहाभोगमिति क्वचित्पाठः तदा भोगशब्दस्य प्राकृते गकारलोपो न भवति प्रायोग्रहणात् लङ्कायास्तोरणस्य बहिर्द्वारस्य वारणं निषेधकं किंवा सुवेलमारुह्य लङ्कातोरणं वारणतुल्यं बहिर्द्वारस्थितहस्तिनं वा आरूढमित्यन्वयः समरे लालसा महतीच्छा यस्य ॥ ४४ ॥ भ०

तस्मिन्नारूढे परबलं सन्नद्धमित्यं प्रवृत्तमित्यर्थः इत्थं कथं तदाह उरुपणवेत्यादिना ।

उर्वित्यादि । उरुपणवादीनां भीमो रवो यस्मिन् परबले तत्र उरुपणवो महान् पणवः पेला वाद्यविशेषः उरुझल्लरी महती झल्लरीढक्काघण्टयोस्तुमुलः संमूर्च्छितः शब्दो यत्रेति रणायासहं रणक्लेशसहम् ॥ ४५ ॥ ज० म०

उरुपणवेत्यादि । परस्य रावणस्य बलं सन्नद्धं युद्धायोद्यतमित्यर्थः कीदृशं उरूणां पणवादीनां उरुभल्लर्याश्च भीमो रवो यत्र समौ पणवमर्दलौ गुञ्जापि पटहे प्रोक्ता काकबल्लर्यां कलध्वनाविति विश्वः ढक्कानां घण्टानाञ्च तुमुलःसंमूर्च्छितः शब्दो यत्र रणायासहं संग्रामक्लेशसहम् ॥ ४५ ॥ भ०

आरूढेत्यादि । धनुषि आरूढवाणत्वात् घोरं परबलं विमलेनायसजालेन वर्मणा गूढश्छन्नः पीवरः स्थूलो देहो यस्य चञ्चलानां तुरङ्गाणां वारणानाञ्च यः परस्परसंघट्टः श्लेषणं तेनाबद्धश्चारुः परिणाहगुणः विस्तार एव गुणो यस्य तत्परबलं संनद्धम् ॥ ४६ ॥ ज० म०

आरूढेत्यादि । कीदृशं परबलं आरूढं अर्थाद्धनुषि वाणा यस्य तच्च

असितोमरकुन्तमहापट्टिसभल्लवरवाणगुरुपुरुमुसलम् ।
वीररसालङ्कारं गुरुसञ्चारहयदन्तिसमहीकम्पम् ॥ ४७ ॥
ते रामेण सरभसं परितरला हरिगणा रणसमारम्भे ।
रुद्धा लङ्कापरिसरभूधरपरिभङ्गलालसाधीररवम् ॥ ४८ ॥ युग्मकम्

तद्घोरं रौद्रञ्चेति विग्रहः आरूढो वाणो यत्र तेन धनुषा घोरं वा विमले-नायोविकारेण वर्मणा कवचेन गूढ आच्छादितः स्थूलो देहो यस्य वर्मेत्यत्र जालपदं पठित्वा विमलेनायसेन जालतुल्येन सन्नाहेनेत्यन्ये प्राहुः चञ्चलानां तुरङ्गानां हस्तिनाञ्च यः संवट्टः संश्लेषस्तेनावष्टम्भस्य परिणाहगुणो यत्र ॥ ४६ ॥ भ०

असीत्यादि । अस्यादीनां वराणपर्यन्तानां द्वन्द्वः तैरस्यादिभिः गुरु अनभिभवनीयं पुरु महन्मुसलं यत्र अस्यादिगुरु च तत् पुरु मुसलं चेति सः वीररस एवालङ्कारो यस्य गुरुः सञ्चारो येषां हयदन्तिनां महा-कायत्वात् तैः समहीकम्पं सह महीकम्पेन वर्त्तमानं परबलं संनद्धम् ॥ ४७ ॥ ज० म०

असीत्यादि । पुनः कीदृशं परबलं असिभिः खङ्गैः तोमरैः शक्तिभिः कुन्तैः प्रासैः महापट्टिसैर्लौहदण्डविशेषैः भल्लैः श्रेष्ठवाणैश्च गुरु अनभि-भवनीयं पुरु महत् मुसलं यत्र वीररस एवालङ्कारो यस्य गुरुः सञ्चारो येषां तादृशैर्हयैर्दन्तिभिश्च हेतुभिर्महीकम्पसहितं तोमरोऽस्त्रीलौहदण्डः शक्तिः कासूश्च सर्वला । पट्टिशो लौहदण्डोयस्तीक्ष्णधारः क्षुरोपमः । मुसलशब्दो दन्त्यमध्योऽपि मन्विहितौ दुर्गटीकायां प्रत्युदाहृतत्वात् मुषस्तेय इत्यस्य वृषलादित्वात् मुषल इति वर्णदेशनायामुक्तत्वाच्च अत्र सङ्कीर्णत्वाद्दन्त्य-मध्यः ॥ ४७ ॥ भ०

ते रामेणेत्यादि । ते हरिगणाः कपिगणाः रणसमारम्भे रणप्रवर्त्तन-निमित्तं सरभसं सम्भ्रमपूर्वकं परितरलाः स्थातुमशक्नुवन्तः लङ्कापरिसरे

जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवरावासम् ।
भीमं तरुहरिणबलं सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४६॥
रावणबलमवगन्तुं जलभरगुरुसलिलवाहगणसमच्छायम् ।

लङ्कासमीपे ये तरवः तेषां परिभङ्गे चूर्णने लालसाः सतृष्णाः सन्तो रामेण रुद्धाः प्रतिषिद्धाः माभङ्क्षुरिति घोररवं घोरो रवो यस्यां प्रतिषेधनक्रियायामिति ॥ ४८ ॥ ज० म०

ते रामेणेत्यादि । ते हरिगणा वानरसमूहाः रामेण रुद्धाः प्रतिषिद्धाः कीदृशाः सरभसं सकौतुकं यथास्यात्तथा रणसमारम्भे सति तद्भित्तं वा परितरलायसञ्चलाः लङ्कायाः परिसरे समीपे ये पर्वतास्तेषां परिभङ्गे लालसा महतीच्छा येषां तादृशाः अतएव रुद्धाः घोरो रवो यत्रेति प्रतिषेधक्रियाविशेषणम् ॥ ४८ ॥ भ०

जलेत्यादि । तरुहरिणबलं कपिबलं निषिद्धं सत् भीमं भयानकं जलतीरादौरावासो यस्य तत् समिद्धस्य हिमारेरग्नेरादित्यस्य वा या किरणमाला तद्वल्लोलं समारूढमिति वक्ष्यमाणेन सम्बन्धः ॥ ४६ ॥ ज० म०

जलतीरेत्यादि । तरुहरिणबलं कपिसैन्यं रामेण निषिद्धं सत् अट्टादिषु समारूढमिति वक्ष्यमाणेन सम्बन्धः कीदृशं जलतीरेषु तुङ्गतरुवरेषु कन्दरेषु गिरिभित्तिषु कुञ्जविवरेषु च आवासो यस्य भीमं भयानकं सुसमिद्धस्य हिमारेः सूर्य्यस्य वह्ने र्वा या किरणमाला तद्वल्लोलं चञ्चलम् ॥ ४६ ॥ भ०

रावणेत्यादि । रावणबलं अवगन्तुं कीदृशमिति जलभरेण गुरुर्यः सलिलवाहगणो जलधरसमूहः तेन समच्छायं तुल्यच्छायं रावणबलं अट्टादिषु समारूढम् ॥ ५० ॥ ज० म०

एतानि द्वाविंशतिः सङ्कीर्णानि ।

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रसन्नकाण्डे भाषासमावेशश्चतुर्थः परिच्छेदः ।

अट्टतलमत्तमन्दिरतोरणमरानामभासु समारूढम् ॥ ५० ॥

इति भट्टिकाव्ये प्रसन्नकाण्डे भाषासमावेशो नाम चतुर्थः

काव्यस्य त्रयोदशः सर्गः ।

काव्यस्य सेतुबन्धो नाम त्रयोदशः सर्गः ।

समाप्तं चेदम्प्रसन्नकाण्डं तृतीयम् ।

रावणबलमित्यादि । रावणस्य बलं सैन्यं कीदृक् इत्यवगन्तुं ज्ञातुं तरुहरिणबलं अट्टादिषु समारूढं अट्टमुपरितनं गृहं रावणबलं कपिबलं च कीदृशं जलभरेण गुरुभिः सलिलवाहगणो मेघसमूहस्तेन समच्छायं तुल्यकान्ति ॥ ५० ॥ भ०

एतानि द्वाविंशतिः श्लोकान्तकानि ।

इति महामहोपाध्यायहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज श्री भरत-

सेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सेतुबन्धो नाम

त्रयोदशः सर्गः ।

# चतुर्दशः सर्गः ।

ततो दशास्यः स्मरविह्वलात्मा
चारप्रकाशीकृतशत्रुशक्तिः ।
विमोह्य मायामयराममूर्द्ध्ना
सीतामनीकं प्रजिघाय योद्धुम् ॥ १ ॥

सुप्तिङ्व्युत्पत्तौ यत्सौष्ठवं तदपि काव्यस्याङ्गमुक्तं अतः प्रसन्नकाण्डानन्तरं तिङ्काण्डं शब्दलक्षणप्रयोगार्थं कथ्यते तत्र लस्य स्थाने तिबादयः लकाराश्च नव लिट्स्छन्दोविषयत्वादिति अत्र नवविलसितानि निलसितञ्च नानारूपता तत्र भूतार्थवतो लिटोऽधिकृत्य तद्विलसितमाह

तत इत्यादि । ततः स्वपरबलयोरणादुत्तरकाले दशास्यः स्मरविह्वलात्मा कामवशीकृतदेहः भर्त्तरि निराशा सती सीता ममानुकूला भविष्यतीति मायामयेन मायास्वभावेन राममूर्द्ध्ना छिन्नेन सीतां विमोह्य मोहयित्वा चारैः प्रणिधिभिः प्रकाशीकृता शत्रुशक्तिः वैरिसामर्थ्यं यस्य योद्धुमनीकं सैन्यं प्रजिघाय प्रहितवान् हेरचिचिङीति कुत्वं भूतानद्यतनपरोक्षे सर्वत्र लिट् ॥ १ ॥

स्याद्यन्तव्युत्पत्तौ यत्सौष्ठवं तदपि काव्यस्याङ्गमुक्तं ततः प्रसन्नकाण्डादनन्तरं त्याद्यन्तकाण्डमुच्यते तत्रार्थवशात् प्रथमं ठौ प्रदर्श्यते पाणिनिमते त्याद्यन्तस्य तिङन्त इति संज्ञा ठौल्यस्य लिडिति संज्ञा

तत इत्यादि । अनन्तरं दशास्यो रावणः स्मरविह्वलात्मा कामविह्वलचित्तः सन् भर्तृनाशे सीतानुकूल्यं यास्यतीति मत्वा मायामयेन मायास्वरूपेण रामसम्बन्धिना मस्तकेन सीतां मोहयित्वा चारैः प्रकाशी-

कम्बूनथ समादध्मुः कोणैर्भेर्य्यो निजघ्निरे ।
वेणून् पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः ॥ २ ॥
वादयाञ्चक्रिरे ढक्काः पणवा दध्वनुर्हताः ।
काहलाः पूरयाञ्चक्रुः पूर्णाः पेराश्च सस्वनुः ॥ ३ ॥

क्षता शत्रूणां रामादीनां शक्तिः सामर्थ्यं येन तथाभूतः सन् योद्धुं युद्धं कर्त्तुं अनीकं सैन्यं प्रजिघाय प्राहिणोत् हिनवर्द्धने गतौ भवद्भूतभव्ये लिष इति भूतसामान्ये ठो धुर्द्विश्चङीति द्वित्वं झभखयहर्षेति खेर्हस्य जत्वं हेः खेरनङिघिरिति घिः ज् णित्यन्ते जुङतोरिति त्रिः यलायवायाव इति आय ॥ १ ॥ भ०

कम्बूनित्यादि । अथ सैन्यप्रेषणानन्तरं कम्बून् समादध्मुः शब्दितवन्तः शाङ्खिकाः कोणैर्वाद्यवादनैः काष्ठमयैः भेर्य्यो निजघ्निरे ताड़िताः कर्मणि लिट् वेणून् वंशान् पुपूरिरे सुखमरुता पूरितवन्तः पूरी आप्यायन इति दैवादिकोऽनुदात्तात्तेत् गुञ्जाः समवामनाः करघट्टिताः अङ्गुलिघट्टाः जुगुञ्जुः शब्दितवत्यः गुजि अव्यक्ते शब्दे ॥ २ ज० भ०

कम्बूनित्यादि । अथ प्रेषणादनन्तरं सैनिकाः कम्बून् शङ्खान् समादध्मुः शब्दायितवन्तः ध्मा अग्नियुतौ ध्वनौ उस् द्वित्वं झभखयहर्षेति खेर्हस्त्वं धस्य दश्च खे दाद्यचो लोप्य इति खेर्मलोपः उस्येचीति प्रकृतेरालोपः केचित् भेर्य्यो हहत् ढक्काः कोणैर्निजघ्निरे ताड़िताः हन्तेः कर्मणि ठो हनगमित्युङ्लोपः खेर्ह्रोर्घोज् णिति चेति प्रकृतेर्हस्य घत्वं हनोह्न इति घ्नादेशः कोणशब्देन वाद्यवादनकाष्ठदण्डादय उच्यन्ते वेणून् वंशान् केचित् सुखमारुतैः पुपूरिरे पूरितवन्तः पूरीयङपूर्त्तौ करेण घट्टिता अभिहता गुञ्जा वाद्यभेदा जुगुञ्जुः शब्दं चक्रुः गुजिकूजने हस्युङ्नलोपोऽस्याविति विधीयमानो न लोपो नेदित्पूजार्थाञ्चोरित्यनेन प्रतिषिध्यते अतएवेदितोनुण् लभ्यते ॥ २ ॥ भ०

वादेत्यादि । ढक्का वादयाञ्चक्रिरे वादितवन्तः ढक्कावादका इत्यर्थः वदेर्हेतुमत्यन्तात् आमि अयामन्तेत्ययादेशः आम्प्रत्ययवदिति कृञोऽनुप्रयोगस्यात्मनेपदणिचश्चेति आम्प्रत्ययादात्मनेपदस्य विहितत्वात् पणवाः

मृदङ्गा धीरमास्वेनुर्हतैः स्वेने च गोमुखैः ।
घण्टाः शिशिञ्जिरे दीर्घं जह्रादे पटहैर्भृशम् ॥ ४ ॥
हया जिहेषिरे हर्षाद्गम्भीरं जगजुर्गजाः ।

वाद्यविशेषाः हताः पाणविकैस्ताडिताः दध्वनुर्ध्वनिताः काहलाः गोपुच्छसंस्थानाः पूरयाञ्चक्रुः पूरितवन्तः पूरि आप्यायन इति चौरादिकस्योदात्तेत्तोरूपं पेराः खरमुखाकाराः पूर्णा मुखमरुता सस्वनुः फणाञ्च सप्तानामिति लिटि एत्वविधानस्य विकल्पितत्वात् नैत्वम् ॥ ३ ॥ ज०म०

वादयामित्यादि । केचित् ढक्काः वादितवन्तः वदेर्णिः णिजादीत्यादिना व्यान्तत्वादाम् भवञ्चकाम इति कृञोऽनुप्रयोगः पणवा वाद्यभेदा हतास्ताडिताः सन्तो दध्वनुः शब्दञ्चक्रुः केचित् काहला मुखमारुतैः पूरयाञ्चक्रुः चुरादेः पूरधातोरूपं पूरीयङ्पूर्त्तौ पुरक् चेति चकारात् पूर्त्तौ हस्तत्रितयदीर्घा स्यात् धुस्तूरकुसुमोपमा । शुद्धताम्रमयी मध्यशुषिरा काहला मतेति नाट्यदर्पणे । पेराः खरमुखाकाराः मुखमारुतैः पूर्णाः सन्तः सस्वनुः शब्दञ्चक्रुः स्वनमिशब्दे स्वनण् चकारात् शब्दे फणादिः तृफलेत्यादिना विभाषया अत एत्वं खिलोपस्य तदभावपक्षे रूपमिदम् ॥ ३ ॥ भ०

मृदङ्गा इत्यादि । मृदङ्गा मुरजाः धीरं आस्वेनुः गम्भीरं ध्वनिताः एत्वपक्षे रूपं गोमुखैर्वाद्यविशेषैः हतः स्वेने शब्दितं भावे लिट् घण्टाः दीर्घं शिशिञ्जिरे उच्चैः शब्दितवत्यः पटहैर्भृशमत्यर्थं जह्रादे शब्दितं भावे लिट् ॥ ४ ॥ ज० म०

मृदङ्गा इत्यादि । मृदङ्गा धीरं गम्भीरं यथा स्यात्तथा आस्वेनुः शब्दञ्चक्रुः तृफलेत्यादिना स्वनेरत एत्वं खिलोपस्य चर्मणा नद्धवदनो मध्ये चैव पृथुर्भवेत् । मृत्तिकानिर्मितश्चैष मृदङ्ग इति कीर्त्तित इति भरतः । हतैस्ताडितैर्गोमुखैः स्वेने शब्दितं भावे ठौ घण्टा दीर्घमुच्चैः शिशिञ्जिरे शिजि न किङ् अस्फुटध्वनौ पटहैर्भृशमत्यर्थं जह्रादे शब्दितं ह्रादङ् च स्वने भावे रूपम् ॥ ४ ॥ भ०

संत्रस्ताः करभा रेटुश्चुकुवुः पत्तिपङ्क्तयः ॥ ५ ॥
तुरङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परम् ।
नार्य्यश्चुक्षुभिरे मम्लुर्मुमुहुः शुशुचुः पतीन् ॥ ६ ॥

हया इत्यादि । हया अश्वाः हर्षात् जिहेषिरे हेषितवन्तः हेष अव्यक्ते शब्दे भौवादिकोऽनुदात्तेत् अभ्यासस्य इति एत इङ्गवति गजा गम्भीरं मन्द्रञ्जगजुः गर्जितवन्तः गजम्टजीशब्दार्थौ करभा उष्ट्राः सन्त्रस्ताः नानावादित्रश्रवणात् रेटुः शब्दं कृतवन्तः रटपरिभाषण इति शब्दार्थः पत्तिपङ्क्तयः पदातिसंहतयः चुकुवुः शब्दितवत्यः गच्छत किन्तिष्ठतेति कुशब्द इत्युदात्तेत् ॥ ५ ॥ ज० म०

हया इत्यादि । हया अश्वा हर्षात् जिहेषिरे शब्दं चक्रुः हेषृङ्स्पर्धायां ङ्हेषृच स्वने अश्वानामिति चकारात् हेषृङपि अश्वानां स्वने गजा गम्भीरं यथास्यात्तथा जगजुः गर्जनं चक्रुः माद्यन्ति स्मेति वा गजमदे गजि च स्वने इति चकारात् गजस्वने करभा उष्ट्रा नानावाद्यश्रवणात् सन्त्रस्ताः सन्तः शब्दं चक्रुः रटं च वाचि तृफलेत्यादिना अत एत्वं खिलोपश्च पत्तिपङ्क्तयः पदातिसमूहाः चुकुवुः शब्दं चक्रुः कुङ्शब्दे कुल चेति चकारात् शब्दे किट्ठीढीपमिति अपिट्ठ्राः किन्त्वादगुणत्वे श्नुध्वोरस्वचीति उव् ॥ ५ ॥ भ०

तुरङ्गा इत्यादि । तुरङ्गा अश्वा भीता वादित्रश्रवणात् पुस्फुटुः स्फुटिताः भयादितस्ततो गताः स्फुटविसरणे वृषभाः परं पुस्फुरुः सुष्ठु वलिताः स्फुरवलने नार्य्यश्चुक्षुभिरे अस्माकमायातो वियोग इति क्षोभमुपगताः व्यस्तचित्ता जाता इत्यर्थः काश्चिदामम्लुः म्लै मात्रक्षये मुमुहुः काश्चिन्मोहमुपगताः पतीन् काश्चित् शुशुचुः शोचितवत्यः हा कष्टं नियतं विनष्टा इति ॥ ६ ॥ ज० म०

तुरङ्गा इत्यादि । गजादिदर्शनाद्भीतास्तुरङ्गाः पुस्फुटुरितस्ततो गताः स्फुटशिविकाशे वृषभाः परमत्यर्थं पुस्फुरुस्खलिताः स्फुरशिस्फूर्त्तौ चले नार्य्यश्चुक्षुभिरे पतिमरणशङ्कया क्षोभं प्रापुः क्षुभश्चङ्सञ्चले अतएव मम्लुः कान्तिरहिता बभूवुः म्लै कान्तिसंक्षये एचोऽशित्येति आ एश्चे-

जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परैः ।
बबन्धुरङ्गुलित्राणि सन्नेहुः परिनिर्ययुः ॥ ७ ॥
धनूंष्यारोपयाञ्चक्रुरारुरुहू रथादिषु ।

चीत्यालापः ततो मुमुहुः मोहं प्रापुः मुहवैचित्त्ये पतीन् शुशुचुः शोचितवत्यः शुचशोके ॥ ६ ॥ भ०

जगर्जुरित्यादि । शूरा जगर्जुः अस्माभिर्दृष्टाः शराः क यास्यन्तीति शब्दितवन्तः तथा जहृषुः तुष्टाः चिरमायातः समर इति हृषतुष्टौ अतएव रेजुः शोभन्ते स्म फणाञ्च सप्तानामित्येत्वाभ्यासलोपौ परैरन्यैस्तुष्टुविरे स्तुताः भवतामग्रतः समरे के तिष्ठन्तीति अङ्गुलित्राणि बबन्धुः बध्नन्ति स्म बधबन्धने तथा परे सन्नेहुः कवचानि बध्नन्ति स्म णहबन्धने परिनिर्ययुः निष्क्रान्ताः ॥ ७ ॥ ज० म०

जगर्जुरित्यादि । शूरा जगर्जुः जेष्याम इति शब्दं चक्रुः गर्जशब्दे तथा जहृषुः चिरात् प्राप्तः संग्राम इति मत्वा तुष्टाः हृषु हृष्यञ्जितुष्टौ रेजुः शुशुभिरे राजृ अदीप्तौ णित्त्वात् फणादिः तॄफलेत्यादिना अत एत्वं खिलोपश्च परैरन्यैस्तुष्टुविरे स्तुताः ष्टुञस्तुतौ कर्मणि ठौ खेराद्यच इत्यादिना शसादिखपान्तत्वात् खेरादिलोपः श्चादावादिष्ण इति षस्य सत्वात् किलादिति षः अङ्गुलित्राणि बबन्धुः बध्नन्ति स्म बन्धौग्बन्धक्बधक्बन्धे स्यात्द्यपित्किदेति कित्त्वाभावपक्षे ङङ्कलोपोऽणावित्यस्याप्रवृत्तेर्नलोपाभावः यद्वा स्यात्द्यपित्किद्वेत्यत्र वाशब्दो व्यवस्थावाची तेन मन्थादेर्विभाषया कित्त्वं बन्धादेस्तु कित्त्वाभाव एव तेन ममथुः ममन्थु सस्वजे सस्वञ्जे इत्यादिरूपद्वयं दृश्यते बबन्धुः बभञ्जुः ददंशुरित्यादयो नित्यम् । परे तु दन्भो लिटि च स्वञ्जो वेति नकारलोपार्थं सूत्रं कुर्वन्ति इन्धधातोरामि न स्यात् आमोऽभावपक्षे नित्यं नलोपः सनुजस्तुवा अन्यत्र ण्यां नलोपाभाव इति अङ्गुलिं त्रायत इति दृनन्नादिति डः सन्नेहुः सन्नाहं कृतवन्तः णहनञौ बन्धे परिनिर्ययुः निर्गताः याल्गतौ ॥ ७ ॥ भ०

धनूंषीत्यादि । धनूंषि आरोपयाञ्चक्रुः आरोपितगुणानि कृतवन्तः

अस्तीनुद्वद्रुर्दीप्तान् गुर्वीरुचिक्षिपुर्गदाः ॥८॥
शूलानि भ्रमयाञ्चक्रुर्वाणानाददिरे शुभान् ।
भ्रेमुश्च कुर्दिरे रेसुर्ववल्गुश्च पदातयः ॥ ६ ॥

रुहः पोऽन्यतरस्यामिति णौ पादेशः आरुरुहुरारोहन्ति स्म रथादिषु द्वितीया न कृता अधिकरणत्वेन विवक्षितत्वात् दीप्तान्निष्कलङ्कानसीन् वद्रुहुः कोशादाकृष्य उद्यतान् कृतवन्त. ऊह उद्यमने गुर्वीर्गदा उच्चिक्षिपुः उत्क्षिप्तवन्तः ॥ ८ ॥ ज० म० ॥

धनूंषीत्यादि । धनूंषि रथे हस्ते वा आरोपयाञ्चक्रुरारोपितवन्तः आरोपितगुणानि चक्रुरिति केचित् । जिरुहौजन्यां जिः रुहः पश्चेति पङ्गुणूर्धूङ इति गुणः त्यान्तत्वादाम् रथादिषु आरुरुहुः आरोहन्ति स्म कर्मणोऽप्याधारविवक्षया न द्वितीया दीप्तान् असीन् खड्गान् उद्वहुरुद्यतान् चक्रुः ऊह उद्यमे भ्भखथेत्यादिना खेर्हकारस्य अकारः गुर्वीर्महतीर्गदाश्चिक्षिपुः उत्क्षिप्तवन्तः क्षिपशऔक्षिप्यो तुदि खेराद्यच इत्यादिना खेः पकारस्य लोपः भ्भखथेत्यादिना खेः कस्य चत्वम् ॥८॥ भ०

शूलानीत्यादि । शूलानि भ्रमयाञ्चक्रुः भ्रमयन्ति स्म भान्तत्वान्मित्त्वे ह्रस्वत्वं बाणान् शुभान् युद्धयोग्यानाददिरे गृहीतवन्तः आजोदोनास्य विहरण इति तङ् पदातयश्च भ्रेमुः इतस्ततो याताः चुकुर्दिरे शस्त्रपाणयः क्रीडितवन्तः कुर्दखुर्दगुर्दक्रीडायामेव रेसुः भयकृते निनादान् कृतवन्तः रसशब्दे ववल्गुः प्लुताः वल्गतिरुख उखीत्यत्र पठ्यते ॥ ६॥ ज० म०

शूलानीत्यादि । शूलानि भ्रमयाञ्चक्रुः भ्रमयन्ति स्म भ्रमुजणचाले ञिः वृद्धिः घटादिजनीत्यादिना अमन्तत्वात् ह्रस्वः शुभान् शोभमानान् बाणान् आददिरे गृहीतवन्तः आङ्पूर्वौददातिर्ग्रहणे आदाञोऽस्यप्रचार इति सं पदातयो भ्रेमुः इतस्ततो गच्छन्ति स्म कुर्दिरे क्रीडन्ति स्म कुर्दङ्क्रीडायां रेसुः शब्दं चक्रुः रसशब्दे ववल्गुः धावन्ति स्म वल्गु अगिस्रगिव्रजे ॥ ६ ॥ भ०

समुत्पेतुः कशाघातैरश्मप्राकर्षैर्ममञ्जिरे।
अश्वाः प्रदुद्रुवुर्मोचे रक्तं निजगरुः श्रमे ॥ १० ॥
गजानां प्रददुः शारीन् कम्बलान् परितस्तरुः।
तेनुः कक्षां ध्वजांश्चैव समुच्छिश्रियुरुच्छिखान् ॥ ११ ॥

समुत्पेतुरित्यादि। कशाघातैः चर्मलताप्रहारैः अश्वाः समुत्पेतुः उत्प्लुताः रश्मप्राकर्षैः प्रग्रहाकर्षणैः ममञ्जिरे शोभन्ते स्म सङ्कोचितशोणत्वात् मस्जिमज्जने मोचे रश्मीनां प्रसारणे प्रदुद्रुवुः वेगेन गताः श्रमे सति खलीनप्रभवं रक्तं निजगरुः पीतवन्तः गृनिगरणे ऋच्छत्यृतामिति गुणः ॥ १० ॥ ज० म०

समुत्पेतुरित्यादि। अश्वादेस्ताडनी कशा तदभिघातैरश्वाः समुत्पेतुः उत्प्लुताः पतत्लजगत्यां रश्मप्राकर्षैः प्रग्रहाकर्षणैर्ममञ्जिरे शुशुभिरे संकुचितवेगत्वात् मस्जिङ्‌भूषे किरणप्रगहौ रश्मी इत्यमरः। मोचे रश्मिस्लथीकरणे प्रदुद्रुवुः धावन्ति स्म द्रुसुगतौ श्रमे सति खलीनप्रभवं रक्तं निजगरुः पीतवन्तः उज्जगरुरिति पाठे सृक्कणीभ्यां रक्तमुद्गीर्णवन्तः गृनिगरणे ऋतोगुः कित् स्यामिति गुणः ॥ १० ॥ भ०

गजानामित्यादि। गजानां शारीन् प्रददुः पृष्ठेषु आरोपितवन्तः शारीन् पल्याणानीत्यर्थात् तथा कम्बलान् नानावर्णविचित्रान् परितस्तरुः आस्तीर्णवन्तः कक्षां हेमादिमयीं तेनुः विस्तारितवन्तः उच्छिखान् उद्गतशिखान् ध्वजान् समुच्छिश्रियुः उत्क्षिप्तवन्तः ॥ ११ ॥ ज० म०

गजानामित्यादि। हस्त्यारोहा गजानां शारीन् युद्धोपकरणानि प्रददुः पृष्ठे आरोपितवन्तः शारिर्युद्धोपकरणे तथा शाकुनिकान्तरे इति विश्वः। कम्बलान् परितस्तरुः आस्तीर्णवन्तः कुथांश्चेति पाठे चित्रकम्बलानित्यर्थः कुथः स्याच्चित्रकम्बल इति विश्वः। स्तृञ् आच्छादने इत्यस्य ऋतो गुः कित्स्यामिति गुणः कक्षां उदराद्यवस्थितां रज्जुं तेनुर्विस्तारितवन्तः तनुञ् विस्तृतौ कक्ष्योदृष्याहालका काञ्चीप्रकोष्ठगजरज्जुष्विति विश्वः। उद्गतशिखान् ध्वजदण्डान् समुच्छिश्रियुः उत्क्षिप्तवन्तः श्रिञसेवने उत्पूर्वोऽयमुत्क्षेपणेऽपि स्नुश्र्वोरश्चीति इयः ॥ ११ ॥ भ०

विशिश्वासयिषाञ्चक्रुरालिलिङ्गुश्च योषितः ।
आजघ्रुर्मूर्द्धि बालांश्च चुचुम्बुश्च सुतप्रियाः ॥ १२ ॥
गम्भीरवेदिनः संज्ञां गजा जगृहुरक्षताः ।
ववृधे शुशुभे चैषां मदो हृष्टैश्च पुप्लुवे ॥ १३ ॥

विशिश्वासयिषाञ्चक्रुरित्यादि । योषितः आत्मीया विशिश्वासयिषाञ्चक्रुः विश्वासयितुमिष्टवन्तः मय्यन्यथा न भवनीयमिति श्वसन्तस्य रूपं आलिलिङ्गुश्च श्लिष्यन्ति स्म लिगिगत्यर्थः आङ्पूर्वः परिष्वङ्गे वर्त्तते बालान् शिशून् आजघ्रुः शिरसि आघ्रातवन्तः तथा चुचुम्बुश्च चुम्बितवन्तः सुत प्रयाः सुता प्रिया येषामिति ॥ १२ ॥ ज० म०

विशीत्यादि । योधा योषितः स्त्रियो विशिश्वासयिषाञ्चक्रुर्विश्वासयितुं शान्तयितुमिष्टवन्तः श्वसप्राणने ञिः सन् त्यान्तत्वादाम् तथा आलिलिङ्गुः आलिङ्गनञ्चक्रुः लिगिगतौ आङ्पूर्व्वं आश्लेषमाह सुताः प्रिया येषां ते बालान् मूर्द्धि आजघ्रुः शिरसि आघ्रातवन्तः घ्रागन्धग्रहणे भभस्येत्यादिना खेर्भस्मात अत्वं ततो जत्वं चुचुम्बुश्च चुम्बितवन्तश्च चुविकि चुम्बने स्त्रिय आ लङ्गा बालकानाभाष्य रणाय जग्मुरित्यर्थः ॥ १२ ॥ भ०

गम्भीरवेदिन इत्यादि । ये गजा मत्तत्वादङ्कुशैर्दृढमाहताः गम्भीरं विन्दन्तीति ते गम्भीरवेदिनः तस्मिन् काले संज्ञा युद्धोपयिकीर्जगृहुः गृहीतवन्तः अक्षताश्चोताङ्कुशैरनाहताः सन्तः हृष्टैश्च गजैः पुप्लुवे प्लुतं भावे लिट् हर्षादेषां मदो ववृधे वर्द्धते स्म शुशुभे च शोभते स्म ॥ १३ ॥ ज० म०

गम्भीरेत्यादि । अङ्कुशैर्दृढमाहन्यमाना अपि ये न विषीदन्ति ते गम्भीरवेदिनो गजा अक्षता अङ्कुशैरहता अपि संज्ञां युद्धोपयुक्तां जगृहुः युद्धकुशलत्वात् ग्रह उपादाने व्यथग्रहेत्यादिना खेर्जिः ऋकारस्य भभस्येत्यादिना अत्वं ग्रहस्वपाद्योरिति प्रकृतेर्जिः अक्षता इति क्षणुचिसुहुञवधे क्तो वनतनाद्यनिमानिति नलोपः । त्वग्भेदाद्रुधिरस्रावादन्तरव्यथनादपि । संज्ञां न लभते यस्तु गजो गम्भीरवेद्यसौ । एषां हस्तिनां

मृगाः प्रदक्षिणं सस्रुः शिवाः सव्यमवाशिरे ।
अवामैः पुस्फुरे देहैः प्रसेदे चित्तवृत्तिभिः ॥ १४ ॥
प्राच्यमाञ्जिहिषाञ्चक्रे प्रहस्तो रावणाज्ञया ।
द्वारं ररक्षतुर्याम्यं महापार्श्वमहोदरौ ॥ १५ ॥

मदो वहर्षे शुशुभे च हर्षकृष्टौ शुभलक्ष्मीप्तौ भर्त्तॄर्गर्जैर्हृष्टैः पुस्फुवे वेगेन गतं प्लुङ्सर्पणे भावे रूपम् ॥ १३ ॥ भ०

मृगा इत्यादि । एवं संनह्य चलतां मृगाः दक्षिणपार्श्वेन गताः सव्यमवाशिरे वामपार्श्वस्थाः शिवाः शब्दितवत्य इत्यर्थः वाशृशब्दे अवामैर्दक्षिणैर्देहैर्भुजादिभिः पुस्फुरे स्फुरितं भावे लिट् चित्तवृत्तिभिर्मनोवृत्तिभिः प्रसेदे प्रसन्नं पूर्व्ववत्सदेर्भावे लिट् ॥ १४ ॥ ज० म०

मृगा इत्यादि । मृगाः प्रदक्षिणं सस्रुर्गमनं चक्रुः सृगतौ शिवाः शृगालाः सव्यन्वामपार्श्वस्थाः सत्यो ववाशिरे शब्दं चक्रुः वाशृशब्दे वाशृङ्पीति अपि शब्दात् शब्दे शिवाशब्दः पुंशृगालेऽपि स्त्रीलिङ्ग एव अवामैर्दक्षिणैर्देहैर्भुजादिभिः पुस्फुरे स्फुरितं चित्तवृत्तिभिरपि प्रसेदे प्रसन्नं स्फुरस्फुर्च्छौ चले षदॢ विषादे शरणे गतौ प्रपूर्वः प्रसन्नतामाह भावे रूपद्वयम् ॥ १४ ॥ भ०

प्राच्यमित्यादि । एवं शुभनिमित्तोत्साहितः प्रहस्तो रावणाज्ञया प्राच्यं प्राचि भवं पूर्व्वद्वारं घुप्रागिति यत् आञ्जिहिषाञ्चक्रे गन्तुमिष्टवान् अहिगतावित्यस्योदात्तेतः सनीट् अजादेर्द्वितीयस्येति द्विर्वचनं नन्द्रेति नकारो न द्विरुच्यते आम्प्रत्ययवदित्यात्मनेपदं तथा महापार्श्वमहोदरौ राक्षसौ याम्यं द्वारं दक्षिणं यमो देवता अस्येति दित्यदित्येत्यत्र यमाच्चेति वक्तव्यमिति उक्तं तेन प्राग्दीव्यतीयेऽर्थे ण्यप्रत्ययः ररक्षतुः गतौ रक्षिगताविव्यस्य रूपम् ॥ १५ ॥ ज० म०

प्राच्यमित्यादि । एवं शुभनिमित्तं दृष्ट्वा प्रहस्तो रावणाज्ञया प्राच्यं द्वारं पूर्व्वद्वारं आञ्जिहिषाञ्चक्रे गन्तुमियेष अहिङ्गतौ सन् वसोऽरक्षेतोम् स्यादौ नन्द्रोऽग्रे नाजन्तादेरादिर्द्विरिति वचनात् सन् य-

प्रययाविन्द्रजित्प्रत्यगियाय स्वयमुत्तरम् ।
समध्यासिसिषाञ्चक्रे विरूपाक्षः पुरोदरम् ॥ १६ ॥
शुश्राव रामस्तत्सर्वं प्रतस्थे चससैनिकः ।
विस्फारयाञ्चकारास्त्रं बबन्धाथ च बाणधी ॥ १७ ॥

ऊर्त्तो द्विरिति द्विसभागस्यैव द्वित्वं त्यान्तत्वादाम् प्राच्यां भवमिति ढघेकादिति ष्णः महापार्श्वमहोदरौ याम्यं दक्षिणं द्वारं ररक्षतुः जग्मतुः रक्ष गत्यां यमोदेवता अस्येति विकारसङ्घेत्यादिना ष्णः ॥ १५ ॥ भ०

प्रययाविल्यादि । प्रत्यक् पश्चिमद्वारं इन्द्रजित् प्रययौ गतवान् प्रतीच्यान् द्वारमिति सप्तमीत्यादिना विहितस्यास्तातेरञ्चेर्लुक् भसंज्ञाभावात् अच इत्यकारलोपो निवर्त्तते चाविति दीर्घत्वञ्च स्वयमिति रावण उत्तरद्वारमियाय गतः विरूपाक्षो राक्षसः पुरोदरं पुरमध्यं समध्यासिसिषाञ्चक्रे समध्यासितुमिष्टवान् आस्तेरनुदात्तेतः सनि इटि अजादेः पूर्ववत्सन इत्यात्मनेपदं अनुप्रयोगस्याप्यात्मनेपदम् ॥ १६ ॥ ज० म०

प्रययाविल्यादि । इन्द्रजित् प्रत्यक् पश्चिमं द्वारं प्रप्रयौ यातगतौ आदाताडौरिति डौः टेर्लौ गोड्तितीत्यालोपः प्रतिपूर्वादञ्चतेः क्विवन्तात् दिक्शब्दात् दिग्देशकालेऽस्तादिनि सप्तम्याः स्तात् तस्य लोपः प्रतीच्यां दिशीत्यर्थः स्वयं रावण उत्तरं द्वारं इयाय गतः इणगतौ ज्वलित्यन्तेतिजि इ.ो खेर्यौ रेयुवण इतीः विरूपाक्षः पुरोदरं लङ्कामध्यभागं समध्यासिहमिष्टवान् जिलास उपवेशने समधिपूर्वात् सन् इम् विषभागस्य द्वित्वं त्यान्तत्वादाम् ॥ १६ ॥ भ०

शुश्रावेल्यादि । अथानन्तरं रामस्तत्सर्वं रावणचेष्टितं शुश्राव श्रुतवान् प्रतस्थे च गन्तुं प्रवृत्तः समवप्रविभ्यः स्य इ ति तङ् ससैनिकः सह योधैः सेनायां समवेता इति सैनया वेति पक्षे ठक् अस्त्रं धनुर्विस्फारयांचकार आरोप्याकृष्टवान् स्फुरतेश्चि स्फुरोणीविल्यात्वं बबन्ध च बाणधी तूणीरे बध्नाति स्म बाणा धीयन्तेऽस्मिन्निति कर्मण्यधिकरणे वेति किः ॥ १७॥ ज०म०

ईक्षाञ्चक्रेऽथ सौमित्रिमनुजज्ञे बलानि च ।
ननमस्कार देवेभ्यः पर्णतल्पं मुमोच च ॥ १८ ॥

शुश्रावेत्यादि । अथानन्तरं रामस्तत्रैव रावणचेष्टितं दूतद्वारा शुश्राव श्रुतवान् स्तुतौ सैनिकैः सह प्रतस्थे प्रस्थितः स्थास्थाने प्रपूर्व्वो गतिमाह प्रतिज्ञानिर्णयेत्यादिना मं सेनायां समवैतीति ढधेकादिति ष्णिक् सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते इत्यमरः। अस्त्रं धनुर्विस्फारयाञ्चकार आरोप्य कृष्टवान् स्फुरणि स्फूर्त्तौ चले ञि: क्रीजीङ्गेऽजाचिस्फुरेति पक्षे उकारस्यात्वं स्फुरधातो रूपं वा बाणधी तूणद्वयञ्च बबन्ध बाणा धीयन्ते यत्रेति ढाड्डे इति किः ॥ १७ ॥ भ०

ईक्षामित्यादि । सौमित्रिञ्च युद्धाय ईक्षाञ्चक्रे दृष्टवान् ईक्षेरनुदात्तेत् इजादेरित्याम् बलानि च अनुजज्ञे अनुज्ञातवान् अनुपूर्व्वो जानातिरनुज्ञाने वर्त्तते तस्य परस्मैपदित्वात् अनुपसर्गादिति वचनादात्मनेपदं उपसर्गेण युक्तत्वात् ननमस्कार देवेभ्यः नमः शब्दयोगे चतुर्थी पर्णतल्पं पर्णशयनीयं मुमोच मुक्तवान् ॥ १८ ॥ ज० म०

ईक्षाञ्चक्र इत्यादि । रामः सौमित्रिं ईक्षाञ्चक्रे ददर्श ईक्षङ् दर्शने व्यिंजादीत्याम् बलानि सैन्यानि च अनुजज्ञे अनुज्ञातवान् युद्धायेत्यर्थात् ज्ञागबोधने उपसर्गप्रतिरूपकोऽयमनुशब्दः तेन ञित्ङ्अन्तेत्यादिना मं किम्बा सौमित्रिं बलानि च ईक्षाञ्चक्रे अनुजज्ञे च अढादिति मं शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति कर्म्मविषयेऽपि कर्म्मानुक्तेः किम्बा अनुजज्ञे अनुज्ञातो रामेण विभक्तिव्यत्ययेन भावे रूपं देवेभ्यो ननमस्कार शक्तार्थेत्यादिना चतुर्थी ननु कथमत्र उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात् द्वितीया न स्यादिति चेन्न अत्र नमः शब्दस्य वाचकत्वं तेनैव कृञोऽन्वयान्न द्वितीयाप्राप्तिः यदा तु कृञः प्रणामार्थत्वं नमः शब्देन द्योत्यते तदा तन्न्यायात् द्वितीया यथा नारायणं नमस्कृत्येत्यादि पर्णैः तल्पं पल्लवरचितशय्यां मुमोच तत्याज पर्णशालमिति क्वचित्पाठः ॥ १८ ॥ भ०

चकासाञ्चक्रुरुत्तस्थु र्नेदुरानशिरे दिशः ।
वानरा भूधरान् रेधुर्बभञ्जुश्च ततस्ततः ॥ १९ ॥
ददाल भूर्नभो रक्तं गोष्पदप्रं ववर्ष च ।
मृगाः प्रसस्रुपुर्व्वासं खगाञ्चुकुविरेऽशुभम् ॥ २० ॥

चकासाञ्चक्रुरित्यादि । ततोऽनुष्ठानानन्तरं वानरा उत्तस्थुः उत्थिताः नेदुः शब्दितवन्तः दिश आनशिरे व्याप्ताः अश्नोतेश्चेत्यभ्यासस्य नोट् अत-आदेरिति दीर्घत्वं भूधरान् पर्वतान् रेधुः उन्मूलितवन्तः राधोहिंसाया-मित्येत्वाभ्यासलोपः ततश्च बभञ्जुः भग्नवन्तः एवञ्च ते चकासाञ्चक्रुः शोभन्ते स्म कास्यनेकाजग्रहणमित्याम् ॥ १९ ॥ ज० म०

चकासामित्यादि । ततोऽनन्तरं वानराश्चकासाञ्चक्रुः चकासृदीप्तौ विजादीत्याम् अनेकाचत्वात् उत्तस्थुः उत्थिताः नेदुः नदव्यक्तेशब्दे दिश आनशिरे व्याप्नुवन्ति स्म अश्नुङ्न व्याप्तिसंहत्यो स्मात्रादाद्दाद्यश्नोरिति खेरान् भूधरान् रेधुः उन्मूलितवन्तः राध्योसिद्धौ अस्य हिंसार्थे तृफलेत्यादिना पत्ते आत एत्वं खिलोपश्च ततश्च बभञ्जुः भञ्जोधौमोटने स्यात् यपिदिति पत्ते किद्वाभावान्नलोपाभावः ॥ १९ ॥ भ०

ददालेत्यादि । श्लोकद्वयं राघवयोर्भ्रातृबन्धसूचनार्थमनिमित्त-प्रदर्शनं भूर्ददाल विदीर्णा नभश्च रक्तं रुधिरं ववर्ष वृष्टवत् लिटः पित्ता-दकित्त्वे धातोर्गुणः कियत्प्रमाणं गोष्पदप्रं यावता गोष्पदं पूरयित्वा वर्ष-प्रमाणइत्यादिना णमुल् जलोपश्च मृगाः प्रसस्रुपुर्व्वासं वामपार्श्वेन गता इत्यर्थः खगाः पक्षिणोऽशुभान् अनिष्टांश्चुकुविरे शब्दितवन्तः कुङ् शब्दे अशुभमितिपाठान्तरं तत्र क्रियाविशेषणं वेदितव्यम् ॥ २० ॥ ज० म०

ददालेत्यादि । रामलक्ष्मणयोर्नागपाशबन्धनसूचनार्थं अमङ्गलं श्लोकद्वयेनोच्यते भूमिर्ददाल दलमिभेदे नभ आकाशं गोष्पदप्रं गोष्पदं पूरयित्वा रक्तं ववर्ष वृषु सेचने वृषुचेति चकारात् सेचने पूरीआप्यायने इत्यस्माद्वर्षप्रमाणे णमुल् जलोपश्चेति परः । समते गोष्पदं प्राति पूर-यतीति गोष्पदप्रं रक्तस्य विशेषणं गोष्पदपूरणेनैव रक्तवर्षप्रमाणं गम्यते आतपूर्त्तौ हनजनादिति डः मृगा वामं दिग्भागं प्रसस्रुपुर्गताः

उल्का ददृशिरे दीप्ता रुरुवुश्चाशिवं शिवाः ।
चच्माये च मही रामः शशङ्के चाशुभागमम् ॥ २१ ॥
रावणः शुश्रुवान् शत्रून् राचसानभ्युपेयुषः ।
स्वयं युयुत्सयाचक्रे प्राकाराग्रे निषेदिवान् ॥ २२ ॥
निरासू राक्षसा बाणान् प्रजह्नुः शूलपट्टिसान् ।

रूप्यपोर्गत्यां अशुभाः खगा उलूकादयः चुकुविरे कुङ्शब्दे अशुभमिति पाठे क्रियाविशेषणम् ॥ २० ॥

उल्का इत्यादि । दीप्ता उल्का ददृशिरे दृष्टाः अशिवा अनिष्टाः शिवा गोमायवः रुरुवुः शब्दितवन्तः मही च चच्माये कम्पिता च्मायी-विधूनन इत्यनुदात्तेत् रामश्चाशुभागममनिष्टप्राप्तिमाशशङ्के शङ्कते स्म चेतसः पर्याकुलत्वात् इदमप्यनिष्टमेव ॥ २१ ॥ ज० म०

उल्का इत्यादि । दीप्ता उल्का दृश्यन्ते स्म शिवाः शृगालाः अशुभं रवं चक्रुः अशुभा इति पाठे अनिष्टा इत्यर्थः अशिवमिति क्वचित्पाठः चलध्वनौ मही चच्माये कम्पिता च्मायृङ्विधूनने रामश्च अशुभस्यागमनं शशङ्के शङ्कितवान् अकुशलदर्शनेन पर्याकुलत्वात् शकिङ्त्वाशङ्कयोः ॥ २१ ॥ भ०

रावण इत्यादि । राचसानभ्युपेयुषोऽभिमुखमुपगतवन्तो ये शत्रवो रामादयस्तान् रावणः शुश्रुवान् स्वयञ्च प्राकाराग्रे निषेदिवान् निषण्णः सन् भाषायां सदवसेत्यादिना क्वसुः युयुत्सयाचक्रे योद्धुमिच्छन्तं प्रयोजितवानित्यर्थः सनन्तण्यन्तस्य रूपम् ॥ २२ ॥ ज० म०

रावण इत्यादि । राचसानभ्युपेयुषोऽभिमुखमागतान् शत्रून् रामादीन् शुश्रुवान् रावणः स्वयं प्राकारस्याग्रे निषण्णः सन् राचसान् योद्धुमिच्छां कारयामास युध्यौङ्युद्धे सन् ञिः आम् इणगतौ ठीपस-वदिति क्वसुः वसोर्वलेकाडिणात इति इम् यिणोऽच्यवाविति यः खेः त्रितीति दीर्घः वसोर्वसेमिति इमुत्कृहितस्य वस्य उत्वं सदेः क्वसौ तुफले-त्यादिना अतएत्वं खिलोपश्च ॥ २२ ॥ भ०

असींश्च वाहयाञ्चक्रुः पाशैश्चाचक्रुषुस्ततैः ॥ २३ ॥
भल्लैश्च विभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा ।
गदाभिश्चूर्णयाञ्चक्रुः शितैश्चक्रैश्च चिच्छिदुः ॥ २४ ॥
वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा ।
निरासुश्च गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा ॥ २५ ॥

निरासुरित्यादि । रावणप्रचोदिता राक्षसा बाणान्निरासुः क्षिप्तवन्तः शूलपट्टिसान् शूलसहितान् पट्टिसान् शाकपार्थिवादित्वात्तत्पुरुषः द्वन्द्वे तु जातिरप्राणिनामित्येकवद्भावः स्यात् । तान् प्रजह्रुः त्यक्तवन्तः ओहाक्त्यागे असींश्च खड्गान् वाहयाञ्चक्रुः व्यापारितवन्तः शयनस्य रूप माशैस्ततैर्विस्तृतैः आचकृषुः आकृष्टवन्तः किन्त्वे गुणप्रतिषेधः ॥२२ज०म०

निरासुरित्यादि । राक्षसा बाणान् निरासुः चिक्षिपुः असुक्षेपे शूलपट्टिसान् प्रजह्रुः शत्रोरुपरि त्यक्तवन्तः ओहाक्त्यागे शूलानि च पट्टिसाश्चेति इतरेतरद्वन्द्वः । परे तु शूलसहिताः पट्टिसा इति शाकपार्थिवादिः द्वन्द्वे हि अप्राणिजातित्वान्नपुंसकत्वं स्यादित्याहुः । असीन् खड्गान् वाहयाञ्चक्रुः वहेर्ज्ञोप्रापणे ञिः ततैर्विस्तृतैः पाशैराचकृषुराकृष्टवन्तः कृषौ आकर्षे ॥ २३ ॥ भ०

भल्लैरित्यादि । भल्लैर्विभिदुर्विदारितवन्तः तीक्ष्णैस्तथा तोमरैर्विविधुस्ताड़ितवन्तः व्यधेर्ग्रहिज्यादिना सम्प्रसारणं गदाभिश्च चूर्णयाञ्चक्रुः चूर्णितवन्तः सत्यापेत्यादिना णिच् चूर्णप्रेरणे इति चौरादिकत्वाद्वा चिच्छिदुः छिन्नवन्तः राक्षसयुद्धमेतत् ॥ २४ ॥ ज० म०

भल्लैरित्यादि । राक्षसास्तीक्ष्णैर्भल्लैर्विभिदुः भिदिर्जधौभिदि तथा तोमरैर्विविधुः व्यध्यौताड़े व्यथग्रहेति खेर्ञिः स्वहृत्पाद्योरिति प्रकृतेर्ञिः गदाभिश्चूर्णयाञ्चक्रुश्चूर्णितवन्तः चूर्णकृपेषे चूर्णशब्दाद्वा ञेः कृत्याख्याने ञिरिति ञिः शितैस्तीक्ष्णैश्चक्रैश्चिच्छिदुः छिदिरौञ् छेदे ॥ २४ ॥ भ०

वानरा इत्यादि । वानरा मुष्टिभिर्जघ्नुः हतवन्तः राक्षसानित्यर्थात् दशनैर्ददंशुः दष्टवन्तः गिरीन्निरासुः क्षिप्तवन्तः द्रुमान् विचकरुर्विक्षिप्त-

लाङ्गूलैर्लोठयाञ्चक्रुस्तलैर्निन्युश्च सङ्क्षयम् ।
नखैश्च चक्षतुः क्रुद्धाः पिपिषुश्च क्षितौ बलात् ॥ २६ ॥
संबभूवुः कबन्धानि प्रोद्धः शोणिततोयगाः ।
तेरुर्भटास्यपद्मानि ध्वजैः फेनैरिवाबभे ॥ २७ ॥

वन्तः कॄ विक्षेपे ऋच्छत्यॄतामिति गुणः ॥ २५ ॥ ज० म०

वानरा इत्यादि । एवं राक्षसेषु युध्यमानेषु वानरा मुष्टिभिर्ज-घ्नुः हतवन्तः राक्षसानित्यर्थात् हनलौगतौवधे हनगमित्युपधा लोपः तथा दन्तैर्ददंशुर्दशन्ति स्म दन्शीदंशने तद्वत् उच्चात् निरासुः क्षिप्तवन्तः तथा द्रुमान् वृक्षान् निचकरुः विक्षिप्तवन्तः कॄविक्षेपे ऋतो गुणः कित्-यामिति गुणः ॥ २५ ॥ भ०

लाङ्गूलैरित्यादि । लाङ्गूलैर्लोठयाञ्चक्रुः लाङ्गूलैर्व्यापादितवन्तः रुठलुठप्रतिघाते परस्मैपदिनो णयन्तस्य रूपं तलैर्हस्ततलैः सङ्क्षयं विना-शन्निन्युः नीतवन्तः नखैश्च चक्षतुरक्षिप्तवन्तः क्षतीच्छेदने क्रुद्धाः वानराः बलात् हठात् क्षितौ पिपिषुश्चूर्णितवन्तः ॥ २६ ॥ ज० म०

लाङ्गूलैरित्यादि । वानराः लाङ्गूलैः राक्षसान् ताडितवन्तः लुठ वादिवदितवत् वादिवदिति रुठधातोरर्थे प्रतीघाते उपघाते चेत्यर्थः धा-बतो हन्ति भाषायां अकितो वा चुरादय इत्युक्तेः स्वार्थे णिः तलैश्च-पेटैश्च संक्षयं निन्युः प्रापितवन्तः णीञ्प्रापणे स्नुध्वोरित्यादिना यत्वं नखैरपि चक्षतुः क्षतीषपक्षिदि क्रुद्धाः सन्तः बलात् क्षितौ पिपिषुः पीपिज्लृचूर्णने ॥ २६ ॥ भ०

संबभूवुरित्यादि । कबन्धानि संबभूवुः संभूतानि प्रतिपक्षस्य व्या-पादनात् कबन्धस्यैकस्योत्पादनात् शोणिततोयगाः शोणितनद्यः प्रोद्धः प्रकर्षेण प्रवृत्ताः वहेर्यजादित्वात् सम्प्रसारणं भटास्यपद्मानि योधमुख-पद्मानि तेरुः प्लुतानि तॄफलेत्यादिना एत्वाभ्यासलोपौ फेनैरिव ध्वजैः शोणितनदीषु आबभे शोभितं भावे च लिट् ॥ २७ ॥ ज० म०

संबभूवुरित्यादि । कबन्धानि संबभूवुः संभूतानि भूसत्तायां भुवोवुक्

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः ।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः ॥ २८ ॥
कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम् ।
षट्त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपम् ॥ २९ ॥

टीत्यचीति वन् भुवोऽड्याभिति खेरङ् कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्ध-कलेवरमित्यमरः । रक्तनद्यः प्रोहुः प्रवहन्ति स्म प्रवृत्ता इत्यर्थः । वहेर्ञौप्रापणे ऐदित्वाद्यजादिः व्ययमहेत्यादिना खेर्जिः ग्रहस्वपाद्योरिति मूलस्य जिः भटानां योधानां मुखपद्मानि अत्र नद्यां तेरुः प्लवन्ते स्म तृतरेऽभिभवे प्लुत्यां कृतौ णु तृफलेत्यादिना एत्वं खिलोपोऽपि पत्तिर्ध्वजैस्तत्र नद्यां फेणैरिव आबभे शोभितं भान्तषदीप्तौ भावे रूपम् ॥ २७ ॥ म०

रक्तेत्यादि । रक्तपङ्के गजाः सेदुः निषस्राः रक्तपङ्कस्य बहुलत्वात् तथा रथा न प्रचक्रमिरे न गन्तुमारब्धाः प्रोपाभ्यामित्यात्मनेपदं तुरङ्गा निममज्जुः निमग्नाः भटाश्च गन्तुं नोत्सेहिरे नोत्सहन्ते स्म ॥ २८ ॥ ज० म०

रक्तपङ्क इत्यादि । रक्तानां पङ्के गजा हस्तिनः सेदुरवसादं प्रापुः षद्लृजौ विषादे शरणे गत्यां तत्र रथा अपि गन्तुं न प्रारब्धाः क्रमुगतौ प्रोपादारम्भ इति मं तुरङ्गाश्च तत्र निमग्नाः मस्जौ शङ्के स्नाने झपझसोरिति सस्य दत्त्वे स्तुश्चुभिश्चुषात् भटा योधा गन्तुं न उत्सहन्ते स्म सहेस्तृफलेत्यादिना एत्वं खेर्लुक् च ॥ २८ ॥ म०

कोट्येत्यादि । द्विषामेकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुद्धं कर्मणि लिट् षट्त्रिंशद्धरिकोट्यः वानरकोट्यो वानराधिपं सुग्रीवं निवव्रुः आवृत्य स्थिताः ॥ २९ ॥ ज० म०

कोट्येत्यादि । द्विषां राक्षसानां एकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुद्धं रुधिर्ञौञि आवृतौ कर्मणि ठी षट्त्रिंशद्वानरकोट्यः वानराधिपं सुग्रीवं निवव्रुरावृतवन्तः वृञवृतौ संख्यामात्रवृत्तित्वात्

तस्तनुर्जज्वलुर्मम्लुर्जग्लुर्लुलुठिरे क्षताः।
मुमूर्च्छुर्ववमू रक्तं तत्टषुश्चोभये भटाः॥ ३०॥
सम्पातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च॥ ३१॥

तस्तनुरित्यादि। उभये भटा रामरावणसम्बन्धिनो योधाः क्षताः सन्तस्तस्तनुः स्तनितवन्तः जज्वलुः चलिताः ज्वलज्वलचलने मम्लुः म्लानाः म्लै गात्रक्षये जग्लुः हर्षक्षयङ्गताः लुलुठिरे भूमौ लुठन्ति स्म रुठलुठति-प्रघाते तुदादावात्मनेपदी पद्यते मुमूर्च्छुः मोहमुपगताः रक्तं ववमुः गीर्णवन्तः तत्टषुः तृष्यन्ति स्म एतत् सङ्कुलयुद्धमाह॥ ३०॥ ज० म०

तस्तनुरित्यादि। उभये भटा रामरावणसम्बन्धिनः क्षताः सन्तः स्तनन्ति स्म स्तनशब्दे जज्वलुः कोपेनेत्यर्थात् ज्वलज्वलचलनविधोः मम्लुः म्लै कान्तिसंक्षये जग्लुः ग्लै क्लमे लुलुठिरे भूमौ लुठन्ति स्म मुमूर्च्छुः मोहं गताः मूर्च्छा संमोहे उच्छ्राये समुच्छ्रुरिति क्वचित्पाठः रक्तं ववमु-र्वमन्ति स्म टवमु उद्गिरणे तृफलेत्यादिना विभाषया एत्वं खिलोपश्च तट-भावपक्षे रूपमिदं तत्टषुः तृषहृषि तृट् पिपासा तत्रसुरिति पाठे त्रासं गताः तस्युभये उभय इति सङ्कुलयुद्धमुक्तम्॥ ३०॥ भ०

सम्पातिनेत्यादि। प्रजङ्घो नाम राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युध्यते स्म असौ प्रजङ्घो द्रुमाहतश्चकम्पे कम्पते स्म अतीव अत्यर्थं चुक्रोश क्रोशति स्म जीवनाशं ननाश जीवेन विनष्टः कर्तृकर्मण-ग्रहणयोर्नशिवहो इति णमुल्॥ ३१॥ ज० म०

सम्पातिनेत्यादि। प्रजङ्घनामा राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युद्धं कृतवान् युध्यौङ् युद्धे असौ प्रजङ्घो द्रुमेणाहतः सन् चकम्पे कपिङ्चालने अतीव अत्यर्थं चुक्रोश शब्दं चकार क्रुशञ्जौ रोदे हृतौ जीवनाशं ननाश जीवन् सन्नष्टः नश्त्वयूनाशे कर्तृकृषाञ्जी-वान्नश्ये गतार्थं णमिति परः समते जीवनस्य नाशोऽदर्शनं यस्मादिति नाशक्रियाविशेषणम्॥ २१॥ भ०

उच्चखाते नलेनाजौ स्फुरत्प्रतपनाक्षिणी ।
जम्बुमाली जहौ प्राणान् ग्राव्णा मारुतिना हतः ॥२२॥
भिन्नघ्नस्य प्रचुक्षोद गदयाङ्गं विभीषणः ।
सुग्रीवः प्रघसं नेभे बहून्रामस्ततर्द च ॥ २३ ॥
वज्रमुष्टेर्विशिश्लेष मैन्देनाभिहतं शिरः ।
नीलस्यकर्त्तचक्रेण निकुम्भस्य शिरः स्फुरत् ॥ २४ ॥

उच्चखाते इत्यादि । स्फुरन् चलन् प्रतपनो नाम राक्षसः तस्याक्षिणी स्फुरतीव प्रतपनस्याक्षिणी नयने नलेन वानरेण उच्चखाते उत्खाते कर्मणि लिट् गमहनेत्युपधालोपः मारुतिना हनूमता ग्राव्णा पाषाणेन हतो जम्बमाली राक्षसः प्राणान् जहौ त्यक्तवान् ॥ २२ ॥ ज० म०

उच्चखाते इत्यादि । नलनाम्ना वानरेणाजौ युद्धे स्फुरतः प्रतपननाम्नो राक्षसस्य अक्षिणी चक्षुषी उच्चखाते उत्खाते खनुञ् विदारे कर्मणि रूपं हनगमित्युङ्लोपः जम्बुमाली राक्षसो मारुतिना हनूमता ग्राव्णा प्रस्तरेण हतः सन् प्राणान् जहौ त्यक्तवान् ओहाक्त्यागे ॥ २२ ॥ भ०

भिन्नघ्नस्येत्यादि । भिन्नघ्नस्य राक्षसस्य अङ्गं गदया विभीषणः प्रचुक्षोद प्रघसन्नाम राक्षसं सुग्रीवो नेभे हिंसितवान् नभतुभहिंसायामित्युदात्तेत् रामस्य बहून् राक्षसान् ततर्द हिंसितवान् उतृदीहिंसानादरयोः ॥ २३ ॥ ज० भ०

भिन्नघ्नस्येत्यादि । विभीषणो गदया भिन्नघ्नस्य राक्षसस्य अङ्गं प्रचुक्षोद चूर्णयामास क्षौधौर्जुदिर्जुदि क्षुत् संपेषणं सुग्रीवः प्रघसं राक्षसं नेभे जघान नभतुभस्तृङ् चेति चकाराद्धिंसे त्वङौ भेरप्यनुवन्धौ रामस्य बहून् राक्षसान् ततर्द जघान तर्दे हिंसे तृदुअधिर्नादरेत्यस्य वा रूपम् ॥ २३ ॥ भ०

वज्रेत्यादि । वज्रमुष्टे राक्षसस्य शिरो मैन्देन वानरेण अभिहतं सत् विशिश्लेष विश्लिष्टं निकुम्भस्य शिरः स्फुरत् चलत् नीलो वानरस्वकेण चकर्त्त छिन्नवान् ॥ २४ ॥ ज० म०

विरूपाक्षो जहे प्राणैस्तृढः सौमित्रिपत्त्रिभिः ।
प्रमोचयाञ्चकारासून् द्विविदस्त्वशनिप्रभम् ॥ ३५ ॥
गदा शक्रजिता जिघ्ये तां प्रतीयेष वालिजः ।
रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गदः ॥ ३६ ॥

वज्रमुष्टेरित्यादि । वज्रमुष्टे राक्षसस्य शिरो मैन्देन वानरेणाभिहतं सत् विशिश्लेष विश्लिष्टं श्लिषीयत्लिङ्गिस्ले विपूर्वः पृथग्भावमाह नीलो वानरो निकुम्भस्य राक्षसस्य स्फुरत् शिरस्तदीयेन चक्रेण चकर्त्त चिच्छेद कृती च्छेदने ॥ ३४ ॥ भ०

विरूपाक्ष इत्यादि । विरूपाक्षो राक्षसः सौमित्रिपत्त्रिभिर्लक्ष्मणशरैः तृढः हत इत्यर्थः तृहहिंसार्थः इति तौदादिकस्योदित्वाच्छिष्ठायामितीट्प्रतिषेधः प्राणैर्जहे त्यक्तः कर्मणि लिट् द्विविदो वानरः अशनिप्रभं राक्षसं प्राणान् प्रमोचयाञ्चकार त्याजितवान् मुचेर्ण्यन्तस्य लिटि रूपम् ॥ ३५ ॥ ज० म०

विरूपाक्ष इत्यादि । सौमित्रेः पत्त्रिभिर्बाणैस्तृढो हतो विरूपाक्षः प्राणैर्जहे त्यक्तः ओहाक्त्यागे कर्मणि रूपं तृहधजहिंसे क्तः होढः ढभास्तयोरिति धः ष्टुभिरिति ढः ढोढ़ीति ढलुक् तत्र ऋकारवर्जनाच्च दीर्घः द्विविदो वानरः अशनिप्रभं राक्षसं असून् प्राणान् प्रमोचयाञ्चकार त्याजितवान् मुचॢमोक्षणे मोक्षे ज्यन्तः अत्र मुचिर्मोचनपूर्विकायां गतौ वर्त्तमानत्वेन धोऽभ्यौरित्यादिना प्रयोज्यस्य कर्मत्वं योगविभागाद्वा आपिशलिस्तु गत्यर्थादिषु कर्मैव नीखाद्यादिषु कर्त्ता ॥ ३५ ॥ भ०

शेषेषु कर्मकर्त्ता वा यथासम्भवमिष्यत इत्याह

गदेत्यादि । शक्रजिता इन्द्रजिता गदा जिघ्ये प्रहिता हिनोतेः कर्मणि लिट् हेरचङीति कुत्वं तां गदां वालिजोऽङ्गदः प्रतीयेष प्रतीष्टवान् इषेरभ्यासस्यासवर्णे इतीयङ् ततोऽनन्तरं अस्य शक्रजितो रथं सहयं साश्वं शाखिना तरुणा ममन्थ चूर्णितवान् मथिहिंसासंक्लेशयोः ॥ ३६ ॥ ज० म०

तत्कर्म्म वालिपुत्रस्य दृष्ट्वा विश्वं विसिस्मिये ।
संत्रेसू राक्षसाः सर्व्वे बहु मेने च राघवः ॥ ३७ ॥
सुग्रीवो मुमुदे देवाः साध्वित्यूचुः सविस्मयाः ।
विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः ॥ ३८ ॥
ह्री चित्रं लक्ष्मणेनोचे रावणिश्च तिरोदधे ।
विचकार ततोरामः शरान् संतत्रसुर्द्विषः ॥ ३९ ॥

गदेत्यादि । इन्द्रजिता गदा जिघ्ये प्रेषिता हिगत्वद्धने गतौ हेः-खेरनङ्विधिः अध्वोरित्यादिना यत्वं वालिजोऽङ्गदस्तां गदां प्रतीयेष अपाहृ इषेः खेर्यौरियुवर्णौ इति इय् ततोऽनन्तरं शाखिना वृक्षेण अङ्गदोऽस्य शक्रजितः सहयं रथं ममन्थ चूर्णितवान् ॥ ३६ ॥ भ०

तत्कर्म्मेत्यादि । तत्कर्म रथस्य चूर्णनं दृष्ट्वा विश्वं त्रैलोक्यं विसिस्मिये विस्मितं राक्षसाः सर्वे त्रेसुः राघवश्च बहु मेने अङ्गदं श्लाघितवानित्यर्थः ॥ ३७ ॥ ज० म०

तत्कर्मेत्यादि । वालिपुत्रस्य अङ्गदस्य तत्कर्म गदामन्थनरूपं दृष्ट्वा विश्वं त्रैलोक्यं विसिस्मिये विस्मितं स्मिङोऽस्नुध्वोरितीय् सर्वे राक्षसाः संत्रेसुः संत्रस्ताः त्रस त्रसीणभये तृफलेत्यादिना एत्वं खिलोपश्च राघवश्च बहु मेने अङ्गदं श्लाघितवान् मनदङ् बोधे मन्यौङ् च ॥ ३७ भ०

सुग्रीव इत्यादि । सुग्रीवो मुमुदे हृष्टवान् देवाः साध्वित्यूचुः वचिस्वपीति सम्प्रसारणं विभीषणोऽभितुष्टाव अभिष्टुतवान् स्तुञ् स्तुतौ उपसर्गादित्यादिना षत्वं प्लवङ्गमाः प्रशशंसुः प्रशंसां कृतवन्तः ॥ ३८ ॥ ज० म०

सुग्रीव इत्यादि । तत्कर्म दृष्ट्वा सुग्रीवो मुमुदे मिमुदङ् हर्षे देवाः साध्वित्यूक्तवन्तः विभीषणोऽभितुष्टाव अभिमुखीभूय स्तुतिं कृतवान् ष्टुञ्स्तुतौ णौकःस्तुस्तुभेति षत्वं वानराः प्रशशंसुः शंसुहिंसास्तुत्योः ॥ ३८ ॥ भ०

ह्री चित्रमित्यादि । ह्रीति विस्मये चित्रमाश्चर्य्यमिति लक्ष्मणेनोचे उक्तं वदेर्भावे लिट् यजादित्वात्सम्प्रसारणं रावणिः इन्द्रजित् रा-

विभिन्ना जुघुरुर्घोरं जक्षुः क्रव्याशिनो हतान् ।
चुश्च्योत व्रणिनां रक्तं छिन्नाश्चेलुः क्षणं भुजाः ॥ ४० ॥
कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यजे ।
पलायाञ्चक्रिरे शेषा जिह्रियुः शूरमानिनः ॥ ४१ ॥

वणस्यापत्यं अभीतइज् तिरोदधे अदृश्योऽभूत् ततः अदर्शनानन्तरं रामः शरान् विचकार विक्षिप्तवान् कॄ विक्षेपे द्विषतः संततस्तुः संत्रस्ताः ॥ ३९ ॥ ज० म०

ह्रीत्यादि । ह्री विस्मये लक्ष्मणेन चित्रमिदं कर्मेंद्रजिच्च रावणपुत्र इन्द्रजित् तिरोदधे मायया अदृश्यो जातः रावणस्यापत्यमिति वाह्वाद्यत इति णिः ततोऽनन्तरं रामः शरान् विचकार विक्षिप्तवान् कॄ शवि-क्षेपे द्विषः संततसुः सन्त्रस्ताः; तृफलेत्यादिना विभाषया एत्वविधानादत्र तदभावः ॥ ३९ ॥ भ०

विभिन्ना इत्यादि । शरैर्विभिन्ना जुघुरुः घोरं भीमशब्दं कृतवन्तः घुरभीमार्थशब्दयोः क्रव्याशिनः शृगालादयो हतान् विनष्टान् जक्षुः भक्षितवन्तः लिट्यन्यतरस्यामित्यादेर्घस्लृ उपधालोपः खरि चेति चर्त्वं व्रणिनां शरैः क्षतवतां रक्तं चुश्च्योत व्रणादित्यर्थात् कर्त्तरि लिटः पित्त्वादकित्त्वे गुणः भुजाश्छिन्नाः सन्तः क्षणमात्रं चेलुश्चलिताः ॥ ४० ॥ ज० म०

विभिन्नेत्यादि । द्विषो रामबाणैर्विभिन्नाः सन्तो घोरं जुघुरुः शब्द-श्चक्रुः घुरशब्दनौ भीमार्थे क्रव्याशिनः शृगालादयो हतान् द्विषो जक्षुः भक्षितवन्तः अदुलौभवे घस्लृ इति घसादेशः भक्षेलृघसौ चेत्यस्य वा रूपं हनगमित्याङ् लोपः शासिवसिघसीनां चेति षस्य कत्वे किलादिति षः व्रणिनां शरैः क्षतानां द्विषां रक्तं चुश्च्योत श्चुतिरक्षरणे भुजाश्छिन्नाः सन्तः क्षणं चेलुः चल गमने ॥ ४० ॥ भ०

कृत्तैरित्यादि । वीरवक्त्रैः शूरमुखैः कृत्तैरपि छिन्नैरपि दृढो घनः क्रोधो न तत्यजे न त्यक्तः दष्टौष्ठभ्रूकुट्यादीनां तथावस्थानात् कर्मणि

राघवो न दयाञ्चक्रे दधुर्धैर्य्यं न केचन ।
मम्रे पतङ्गवद्वीरैर्हाहेति च विचुक्रुशे ॥ ४२ ॥
तिरोबभूवे सूर्य्येण प्रापे च निशयास्पदम् ।
जग्रसे कालरात्रीव वानरायाक्षसांश्च सा ॥ ४३ ॥

लिट् पलायाञ्चक्रिरे पलायिताः दयायासश्चेत्याम् उपसर्गस्यायताविति लत्वं शेषा ये न पलायिताः ते शूरमानिनः मन इति णिनिः जिह्रियुः लज्जन्ते स्म ॥ ४१ ॥ ज० म०

क्षतैरित्यादि । शूराणां सुखैश्छिन्नैरपि दृढक्रोधो न ततुजे न त्यक्तः सन्दष्टाधरत्वकुट्यादीनां तथैव विस्फारात् त्यजोहानौ कर्मणि रूपं केचित् पलायाञ्चक्रिरे पलायिताः अयङ् गतौ परापूर्वः विजादीत्याम् ढौरल इत्यल योगविभागात् लत्वमभिधानात् शेषा ये न पलायितास्ते शूरमानिनो जिह्रियुः ह्रीलज्जे श्लुवोरित्यादिना इय् शूरं अर्थादात्मानं मन्यत इति मह्यादित्वाण्णिन् ॥ ४१ ॥ भ०

राघव इत्यादि । राघवो न दयाञ्चक्रे न दयांकृतवान् पूर्ववदाम् न केचन न केचित् धैर्य्यं दधुः धारितवन्तः सर्व एव अहमहमिकया प्रवृत्ताः यदि वा न केचन केचिद्धैर्य्यं न दधुः अपितु दधुरेव पतङ्गवत्पतङ्गैरिव वीरैर्मम्रे मृतं भावे लिट् हाहेति च विचुक्रुशे रुदितम् ॥ २४ ॥ ज० म०

राघव इत्यादि । रामो न दयाञ्चक्रे अदयग्रहणे गतौ बधे दानेऽदनेर्विजादीत्याम् केचित् धैर्य्यं न दधुः धृतवन्तः सर्व एव व्याकुला इत्यर्थः डुधाञ् धारणे उश्चेचीत्यालोपः वीरैः पतङ्गवत् शलभैरिव मम्रे मृतं मृङ्प्राणत्यागे भावे रूपं हाहेति च विचुक्रुशे रुदितं क्रुशजौरोदे हूतौ भावे रूपम् ॥ ४२ ॥ भ०

तिर इत्यादि । सूर्य्येण तिरोबभूवे तिरोभूतं अस्तङ्गतमित्यर्थः भावे लिट् निशा निशया च आस्पदं प्रतिष्ठामिति निपातनं प्रापे प्राप्तं कर्मणि लिट् सा च निशा कालरात्रीव कालः कृतान्तस्तेन प्रयुक्ता

चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रं चाजुहाव सः ।
आजुह्वे तिरोभूतः परानीकं जहास च ॥ ४४ ॥
बबाधे च बलं कृत्स्नं निजग्राह च सायकैः ।
उत्ससर्ज शरांस्तेऽस्य सर्पसाच्च प्रपेदिरे ॥ ४५ ॥

रात्रिरिति शाकपार्थिवत्वात्समासः रात्रेश्चाजसाविति ङीप् वानरान् राक्षसांश्च जघसे घसते स्म भक्षितवतीत्यर्थः ॥ ४३ ॥ ज० म०

तिर इत्यादि । सूर्येण तिरोबभूवे अस्तं गतं भावे रूपं भुवोऽङ्ख्यामिति पक्षे खेरङ् निशया आसदं स्थानं प्रापे प्राप्तं कर्मणि रूपं आङः पदे क्वुट् आसदं स्थाने प्रभुत्वे चेति परः स्वमते मनीषादित्वात् सा निशा कालरात्रिरिव वानरान् राक्षसांश्च जघसे भक्षितवती घस्लृसङ् भक्षे कालोयमस्तेन प्रयुक्ता रात्रिः कालरात्रिः शाकपार्थिवादिरिति परः स्वमते सम्बन्धविवक्षया षष्ठीसमासः पाक्षोनादीत्यादिना पक्षे ईप् ॥ ४३ ॥ भ०

चुकोपेत्यादि । रामव्यापारं दृष्ट्वा इन्द्रजित् तिरोहितः सन् चुकोप कुपितवान् अत्याग्रञ्च सर्पास्त्रं सर्पमस्त्रमिव आजुहाव आहूतवान् आह्वयते शब्दे वर्त्तमानस्य अभ्यस्तस्य चेति द्विर्वचनात् प्राक् सम्प्रसारणं ततो द्विर्वचनं परानीकञ्च रामबलं आजुह्वे स्पर्द्धते स्म स्पर्द्धयामास इत्यात्मनेपदं पूर्ववत् सम्प्रसारणं यजादित्वाद्वा तत उवङादेशः जहास च विहसितवान् ॥ ४४ ॥ ज० म० ॥

चुकोपेत्यादि । रामपराक्रमदर्शनात् इन्द्रजित् चुकोप कुप्यइर कोपे इत्युग्रं सर्परूपमस्त्रं आजुहाव आहूतवान् तिरोभूतः सन् परानीकं शत्रुसैन्यं आजुह्वे स्पर्द्धितवान् स्पर्द्धयामास इति मं ह्वेञ् स्पर्द्धे शब्दे च उभयत्र व्ययमहेति खेर्जिः जहास च हसितवांश्च हसे हासे ॥ ४४ ॥ भ०

बबाध इत्यादि । बबाधे च अभिभूतवान् बाध विलोडने निजग्राह च निगृहीतवान् सायकैः लोहयुक्तैः सर्पास्त्रैः उत्ससर्ज शरान्

आचिचाय स तैः सेनामाचिकाय च राघवौ ।
बभाण च न मे मायां जिगायेन्द्रोऽपि किं नृभिः ॥४६॥
आचिक्याते च भूयोऽपि राघवौ तेन पन्नगैः ।
तौ मुमुहतुरुद्विग्नौ वसुधायाञ्च पेततुः ॥ ४७ ॥

क्षिप्तवान् ते उत्सृष्टाः शरा अस्य बलस्य सर्पसात् कार्त्स्न्ये सातिः सम्पेदिरे सम्पद्यन्ते स्म ॥ ४५ ॥ज०म०

बबाध इत्यादि । स इन्द्रजित् सर्वं रामबलं बबाधे अभिभूतवान् आष्टङ्गविहतौ सायकैः शरैर्निष्टृहीतवांश्च असौ यान् शरान् उत्ससर्ज क्षिप्तवान् सृजोङ् विसर्गेऽयसृजौशचेति चकाराद्विसर्गे ते शराः अस्य रामबलस्य सर्पसात् सर्पाभूताः प्रपेदिरे सम्पद्यन्ते स्म कार्त्स्न्ययोत्यो-रिति चसात् यौपदङ्गतौ तफलेति अत एत्वं खिलोपश्च ॥ ४५ ॥म०

आचिचायेत्यादि । स इन्द्रजित् सर्पास्त्रैर्वानराणां सेनामाचिचाय छन्नवान् विभाषा चेति अकुत्वपक्षे रूपं राघवौ च रामलक्ष्मणावाचि-काय कुत्वपक्षे रूपं बभाण च भणति स्म मम मायामिन्द्रोऽपि न जि-गाय न जितवान् सन्लिटोर्जेरिति कुत्वं किं नृभिः न किञ्चित्प्रयोज-नमित्यर्थः ॥ ४६ ॥ज०म०

आचिचायेत्यादि । स इन्द्रजित् तैः शरै रामसेनां आचिचाय राघवौ रामलक्ष्मणौ चाचिकाय आच्छादितवान् चिनचिञ्चित्यां चेः-किर्वासिनञ्चोरिति विभाषया किः एवञ्च बभाण उक्तवान् रूभणचेति च-कारात् शब्दे किं बभाणेत्याह मम मायां इन्द्रोऽपि न जिगाय नृभि-र्मनुष्यैः किं न किञ्चित्प्रयोजनमित्यर्थः जेर्गिःसन्लिटोरिति ग्यादेशः ॥ ४६ ॥ म०

आचिक्यात इत्यादि । तेनेन्द्रजिता भूयोऽपि राघवावाचिक्याते छन्नौ कर्मणि लिट् तौ पाशबद्धौ मुमुहतुः मोहं गतौ उद्विग्नौ समीहिता-निष्पत्तेः वसुधायाञ्च पेततुः पतितौ बन्धपरवशीकृतत्वात् ॥ ४७ ॥ज०म०

आचिक्याते चेत्यादि । तेन इन्द्रजिता भूयः पुनरपि पन्नगैः सर्पास्त्रैः राघवौ आचिक्याते आच्छादितौ कर्मणि चिञो रूपं च पाद-

ततो रामेति चक्रन्दुस्त्रेसुः परिदिदेविरे ।
निशश्वसुश्च सेनान्यः प्रोचुर्धिगिति चात्मनः ॥ ४८
मन्युं प्रशेकुर्न ते रोद्धुं नास्रं संरुरुधुः पतत् ।
विविदुर्नेन्द्रजिन्मार्गं परीयुश्च प्लवङ्गमाः ॥ ४९ ॥

पूरणे वक्ष्यमाणक्रियापेक्षया समुच्चये वा तौ च तत उद्विग्नौ व्याकुलौ मुमुहतुः मोहं प्रापतुः मुहवैचित्त्ये भूमौ च पेततु पतॢ गत्याम् ॥ ४७ ॥ भ०

तत इत्यादि । ततः पतनादनन्तरं सेनान्यः सुग्रीवादयः एरनेकाच इति यण् रामेति नामग्राहं चक्रन्दुः रुदितवन्तः त्रेसुः भीताः परिदिदेविरे परिदेवनं कृतवन्तः देवृ देवने अनुदात्तेत् निशश्वसुः कोष्णं निश्वासाहृतवन्तः आत्मनश्च धिगिति प्रोचुः गर्हितवन्तः । धिगयोगाद्द्वितीया ॥ ४८ ॥ ज०म०

ततइत्यादि । पतनानन्तरं सेनापतयो नीलादयो रामेति चक्रन्दुः शब्दं चक्रुः क्रदि रोदने आह्वाने त्रेसुर्भयं प्रापुः त्रस त्रसीभये परिदिदेविरे परिदेवनं चक्रुः देवङ् देवने अभ्यस्यकर्मेति खेरेकारस्य ह्रस्वइकारः एचोयुक् इत्यादि वचनात् निशश्वसुः निश्वासं व्यक्तवन्तः श्वस प्राणने आत्मनो धिगिति च प्रोचुः उक्तवन्तः धिक् समनेति द्वितीया ॥४८॥ भ०

मन्युमित्यादि । मन्युं शोकं रोद्धुं वारितुं न शेकुः पारितवन्तः अस्रञ्च लोचनेभ्यः पतत् न संरुरुधुः न संरुद्धवन्तः इन्द्रजितो मार्गं न विविदुः न ज्ञातवन्तः क्वासौ तिष्ठति इति प्लवङ्गमाश्च परीयुः समन्ताद्गतवन्तः क्वासावगमदिति ॥ ४९ ॥ ज० म०

मन्युमित्यादि । ते वानरसेनान्यः मन्युं शोकं रोद्धुमावरीतुं न शेकुर्न शक्ताः शक्लृ शक्तौ रुधिर्घौ आवरणे पतदस्रं रोदनजलं न संरुरुधुः न वारितवन्त इन्द्रजितो मार्गं पन्थानं न विविदुः न जानन्ति स्म कुतो गत इति विदज्ञानौ प्लवङ्गमाः परीयुः सर्व्वतोगताः क्वासावगमदिति इणगतौ ॥ ४९ ॥ भ०

दधावाद्भिस्ततश्चक्षुः सुग्रीवस्य विभीषणः ।
विदाञ्चकार धौताक्षः स रिपुं खे ननर्द च ॥ ५० ॥
उज्जुगूरे ततः शैलं हन्तुमिन्द्रजितं कपिः ।
विहाय रावणिस्तस्मादानंहे चान्तिकं पितुः ॥ ५१
आचचक्षे च वृत्तान्तं प्रजहर्ष च रावणः ।

दधावेत्यादि । ततोऽनन्तरं विभीषणः सुग्रीवस्य मन्त्रपूताभिरद्भि-श्चक्षुर्दधाव प्रक्षालितवान् सुग्रीवः धौताक्षः प्रक्षालितचक्षुः बहुव्रीहौ सक्थ्यक्ष्णोरिति समासान्तष्टच् रिपुमिन्द्रजितं खे स्थितं विदाञ्चकार ज्ञातवान् उषविदेत्यादिना आम् ननर्द च शब्दितवान् क्वेदानीं यास्य-सीति ॥ ५० ॥ ज० म०

दधावेत्यादि । ततोऽनन्तरं विभीषणः सुग्रीवस्य चक्षुरद्भिर्जलै-र्दधाव प्रक्षालितवान् धावुजवे स्वजि सुग्रीवः धौताक्षः प्रताक्षः प्रक्षा-लितचक्षुः सन् खे आकाशे स्थितं रिपुमिन्द्रजितं विदाञ्चकार ज्ञात-वान् डाम्बाम्यामिति डाम् ननर्द च क्वेदानीं यास्यसीति नर्दशब्दे ॥ ५० ॥ म०

उज्जुगूर इत्यादि । ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं हन्तुं शैलमुज्जुगूरे उत्क्षिप्तवान् गूरहिंसागत्योरिति दैवादिकोऽनुदात्तेत् तस्य गतौ वर्त्तमानस्य रूपं रावणिरिन्द्रजित् विहाय अर्थाद्युद्धं विहाय तस्मादाकाशात्पितुरन्तिकमानंहे गतः अहिगतौ तस्मात् इदित्त्व इति नुट् ॥ ५१ ॥ ज० म०

उज्जुगूरे इत्यादि । ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं हन्तुं शैलं उज्जुगूरे उत्क्षिप्तवान् गूरीयङ्वधेगत्यां उत्पूर्वं उत्क्षेपणेऽपि वर्त्तते शिगेरङ्कउद्यमइत्यसौ तु ह्रस्वोपधः रावणपुत्रस्तस्माद्विभाय भयं प्राप ञिभीञिभीतय्रां भीतः सन् पितुरन्तिकं समीपं आनंहे गतः अहिङ्गतौ स्वान्तादादीति खेरात् विभावेत्यत्र विहायेति पाठे युद्धं त्यक्त्वा तस्मादाकाशात् पितुरन्तिकमानंहे इत्यर्थः ॥ ५१ ॥ भ०

गाढं चोपजुगूहैनं शिरस्युपशिशिङ्क्ष च ॥ ५२ ॥
ध्वजानुद्दुधुवुस्तुङ्गान् मांसं चेमुर्जगुः पपुः ।
कामयाञ्चक्रिरे कान्तास्ततस्तुष्टा निशाचराः ॥ ५३ ॥
दर्शयाञ्चक्रिरे रामं सीतां राक्षस शासनात् ।

आचचक्ष इत्यादि । नागपाशेन राघवौ बद्धाविति वृत्तान्तमाचचक्षे आख्यातवान् रावणः प्रजहर्ष तुष्टवान् एनञ्च रावणिञ्च उपजुगूह दृढ-मालिष्टवान् अत्र क्रियाफलस्याविवक्षितत्वात् तङ् न भवति ऊदुपधाया-गोह इत्यूत्वं शिरसि उपशिशिङ्क्ष आघ्रातवान् शिघि आघ्राणे ॥ ५२ ॥ ज० म०

आचचक्षेत्यादि । स इन्द्रजिद्रामलक्ष्मणरूपं वृत्तान्तं आचचक्षे पितरमितर्थात् चक्षिङ्नबद्धे श्राविति पक्षे कशाङ्ख्यादेशाभावः राव-णश्च प्रजहर्ष प्रकृष्टहर्षं प्राप हृष्यतिरतुष्टौ एनं पुत्रं गाढं उपजुगूह च आलिङ्गितवांश्च गुहू संवरणे उपपूर्व्वआलिङ्गनमाह गुहोगोहूरिति दीर्घत्वं शिरसि उपशिशिङ्क्ष च आघ्रातवांश्च स्त्री हाविस्कारोऽयं शिघिआ-घ्राणे ॥ ५२ ॥ भ०

ध्वजानित्यादि । ततो निशाचरा अपि श्रुत्वा तुष्टाः सन्तः ध्व-जांस्तुङ्गानुद्दधुवु उत्क्षिप्तवन्तः मांसञ्चेमुः खादितवन्तः चमुच्छमुअदने जगुर्गीतवन्तः पपुः मद्यं पीतवन्तः कान्ताः कामयाञ्चक्रिरे कमेर्णिङ-न्तादाम् ॥ ५३ ॥ ज० म०

ध्वजानित्यादि । निशाचरा अपि रामबन्धनात्तुष्टाः सन्तः तुङ्गान् ध्वजान् उद्दधुवुः उत्क्षिप्तवन्तः धुञ कम्पने धूधिक् कम्पे धूनगिधूञ-चेत्यस्य वा रूपं मांसं चेमुः भक्षितवन्तः चमूचमछमजमजिमभक्षणे जगुर्गानं कृतवन्तः गै गाने पपुर्मद्यादिकं पीतवन्तः पा पाने कान्ताः कामयाञ्चक्रिरे कामितवन्तः कमुकङ् स्पृहि वाऽरे इति पाक्षिकोणिः त्यान्तत्वादाम् ॥ ५३ ॥ भ०

दर्शयामित्यादि । तथाभूतं रामं दृष्ट्वा सीता मम विधेया स्यादि-

तस्या मिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे ॥ ५४ ॥
प्राणा दध्वंसिरे गात्रं तस्तम्भे च प्रिये हते ।
उच्छश्वास चिराद्दीना रुरोदासौ ररास च ॥ ५५ ॥
लौहबन्धैर्बबन्धे नु वज्रेण किं विनिर्ममे ।
मनो मे न विना रामाद्यत्स्फोटं सहस्रधा ॥ ५६ ॥

त्यभिप्रायवतो राज्ञो रावणस्य आज्ञया राक्षसाः अशोकवनिकातः पुष्प-कमारुह्य सीतां रामं दर्शयाञ्चक्रिरे दर्शितवन्तः अभिवादिदृशोरात्मने-पदउपसङ्ख्यानमिति विकल्पेन द्विकर्मकता तस्याः सीताया नेत्रे मिमीलतुः निमीलिते मील निमेषणे पुष्पकोदरे पुष्पकमध्ये मूर्च्छया लुलुठे लु-ठिता ॥ ५४ ॥ ज० म०

दर्शयामित्यादि । तादृशं पतिं दृष्ट्वा सीता ममानुकूला स्यादित्य-भिप्रायं कुर्वतो राज्ञः रावणस्य शासनादाज्ञया राक्षसाः पुष्पके आरोप्य सीतां रामं दर्शितवन्तः षोऽञ्जोऽजैरित्यादिना प्रयोज्यस्य कर्मत्वं तस्याः सीतायाः नेत्रे मिमीलतुः मुद्रणं प्रापतुः मील निमेषे सीता पुष्पक-रथमध्ये लुलुठे पतिता लुठङ् प्रतीघाते ॥ ५४ ॥ भ०

प्राणा इत्यादि । प्रिये रामे हते प्राणा वायवः दध्वंसिरे ध्वस्ताः गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत् ष्टभिस्कभि प्रतिबन्धे चिरा-दुच्छश्वास उच्छसितवती असौ लब्धसंज्ञा दीना दुःखिता रुरोद रुदितवती ररास च वक्ष्यमाणञ्च विलापं कृतवती ॥ ५५ ॥ ज० म०

प्राणा इत्यादि । प्रिये रामे हते सति तस्याः प्राणा दध्वं-सिरे ध्वस्ताः ध्वन्सु ङ् गतौ भ्रंशे गात्रञ्च तस्तम्भे काष्ठवत् निश्चल-मभूत् स्तभिङ् स्तम्भे चिरादुच्छश्वास श्वासं त्यक्तवती श्वसघ्लु प्राणने ततो दीना दुःखिता रुरोद क्रन्दितवती रुद रोदे ररास च वक्ष्यमाणं वि-लापं चकार रस शब्दे ॥ ५५ ॥ भ०

लौहेत्यादि । लोहस्येमे लौहाः तैर्बन्धैर्मनो हृदयं मम बबन्धे बद्धं कर्मणि लिट् नुशब्दो वितर्के उत वज्रेण विनिर्ममे निर्मितं माङ् मान

उत्तेरिथ समुद्रं त्वं मदर्थेऽरीन् जिहिंसिथ ।
ममथ चातिघोरां मां धिग्जीवितलघूकृताम् ॥ ५७ ॥
न जिजीवासुखी तातः प्राणता रहितस्त्वया ।
मृतेऽपि त्वयि जीवन्त्या किं मयानकभार्य्यया ॥ ५८ ॥

इत्यस्मात्कर्मणि लिट् आतो लोपस्य द्विर्वचने चेति स्थानिवद्भावात् द्विर्वचने ह्रस्वत्वे च रूपं यद्यस्मात् विना रामात् रामेण विना पृथग्विनेति पञ्चमी न पुस्फोट न स्फुटितं सहस्रधा सङ्ख्यायाविधार्थे धा ॥५६॥ज०म०

लौहबन्धैरित्यादि । लोहविकारैर्बन्धैर्मम मनः किं बबन्धे बद्धं अर्थात् विधात्रा बन्धौ गबन्धक्बधक् बन्धे नु वितर्के किंवा वज्रेण तन्निर्मितं मानमाने कर्मणि रूपद्वयं यस्माद्रामेण विना सहस्रप्रकारेण न स्फुटितं स्फुटिर्विसरणे विशब्दो रहितार्थः अन्यारस्येति पञ्चमी संख्याया धाच् प्रकारे इति धाच् ॥ ५६ ॥ भ०

उत्तेरिथेत्यादि । मदर्थं मन्निमित्तं समुद्रमुत्तेरिथ उत्तीर्णोऽसि तॄफलेत्यादिना एत्वाभ्यासलोपौ तथा अरीञ्जिजङ्घिथ निहतवानसि घन्ति रूपं यतो मदर्थं ममाथ मरणावस्थाङ्गतोऽसि अतोऽतिघोरामतिरौद्रां मान्धिक् जीवनलघूकृतां जीवन्त्याजितमहत्त्वात् ॥ ५७ ॥ ज० म०

उत्तेरिथेत्यादि । हे प्रिय ! मदर्थं मत्प्रयोजननिमित्तं त्वं समुद्रं उत्तीर्णवान् तॄतरेऽभिभवे प्लुत्यां तॄफलेति अतएत्वं खिलोपश्च इतोवृक्-इत्यत्र अठीढीपसेरित्यतक्तेरिमोदीर्घाभावः अरीन् निजघ्निथ हतवानसि हनलो गतौ बधे स्वजहत्यच पाठात्त्वत इति पक्षे इम् हनगमित्यादौ अणावित्यस्य क्वचिद्व्यभिचाराडुकोलोपः जिहिंसिथेति पाठे हिसर्धकि हिंसे इत्यस्य रूपं ममथ च मृतोऽप्यसि मङ्मृतौ मङ्टीर्घोमसिति नियमादन्यत्र पं नेमृतस्यपोऽट्टम्लुरित्यनेन नेमतुमित्यादिना प्राप्तइम् प्रतिषेध्यते मदर्थं इति सर्वत्र योज्यं अतोऽतिघोरां स्वामिघातकत्वेन मां धिक् जीवनेन लघूकृतां स्वामिनाशेऽपि जीवनाल्लघुत्वम् ॥ ५७ ॥ भ०

न जिजीवेत्यादि । त्वया प्राणता जीवता अन प्राणने रहितो वियुक्तस्तातो दशरथो न जिजीव न जीवितः त्वयि मृतेऽपि जीवन्त्याः

सा जुगुप्सां प्रचक्रेऽसून् जगर्हे लक्षणानि च ।
देहभाञ्जि ततः केशान् लुलुञ्च लुलुठे मुहुः ॥ ५९ ॥
जग्लौ दध्यौ वितस्तान क्षणं प्राण न विव्यथे ।
दैवं निनिन्द चक्रन्द देहे चातीवमन्युना ॥ ६० ॥

मया न किञ्चित्प्रयोजनं अनकभार्य्यया पापायक इति सः ॥५८॥ज०म०

न जिजीवेत्यादि । हे प्रिय ! प्राणता जीवतापि त्वया रहितः सन् वियुक्तः सन् तव तातो दुःखितो न जीवितवान् जीवक्षप्राणने त्वयि म्रुतेऽपि जीवन्त्या अनकभार्य्यया कुत्सितभार्य्यया मया किं प्रयोजनमित्येवं ररास चेति पूर्वेण सम्बन्धः कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समा इत्यमरः ॥ ५८ ॥ भ०

सा जुगुप्सामित्यादि । सा सीता पूर्व्वोक्तकारणादेव असून् प्राणान् जुगुप्सानं प्रचक्रे निन्दितान् कृतवती जुगुप्सप्रन्त इति घञ् तदन्तस्य सनि रूपं आमि प्रत्यये तु प्रचक्रइत्यनुप्रयोगो न घटते देहभाञ्जि शरीरस्थान लक्षणानि अवैधव्यसूचकानि च जगर्हे गर्हते स्म गर्हगल्भ कुत्सने मुहुः केशान् लुलुञ्च अपनीतवती यथा लुलुठे पतिता ॥ ५९ ॥ ज० म०

सेत्यादि । सा सीता प्राणान् निनिन्द प्रियेण विनावस्थानात् गुपुङ् गोपनकुत्सयोः कित्तिजगुप इति सन् इसोभावस्य क्रमादेतेऽत्वेत्यादिना अर्थनिन्दार्थनियमः त्यान्तत्वादाम् सोपसर्गस्य कृञोऽनुप्रयोगः किं वा जुगुप्सामात्मनो निन्दां प्रचक्रे संस्थाद इति अः असून् लक्षणानि च जगर्हे इत्यनेनान्वयः देहस्थितानि अवैधव्यचिह्नानि निन्दितवती गर्हङ् कुत्सने मुहुर्व्वारं वारं केशानुत्पाटितवती लुञ्चापनयने गतौ तथा लुलुठे पतिता ॥ ५९ ॥ भ०

जग्लावित्यादि । शोकभारात् जग्लौ ग्लानिङ्गता दध्यौ ध्यातवती पुनः किं मया द्रष्टव्योऽसीति तस्तान पीड़या शब्दं कृतवती स्तन शब्दे न प्राण न मूर्च्छिता न जिजीव निःसंज्ञत्वात् अन प्राणने अन आदेरिति दीर्घत्वं विव्यथे लब्धसंज्ञा पीड़िता व्यथोलिटीत्यभ्यासस्य सम्प्रसारणं दैवं निनिन्द निन्दितवती दैवविरूपमाचरितं त्वयेति चक्रन्द रुदिता

आश्वासयाञ्चकाराथ त्रिजटा तां निनाय च ।
ततः प्रजागराञ्चक्रुर्वानराः सविभीषणाः ॥ ६१ ॥
चिचेत रामस्तत्कृच्छ्रमोपाञ्चक्रे शुचाथ सः ।
मन्युश्चास्य समापिप्ये विरुराव च लक्ष्मणम् ॥ ६२ ॥

पुनर्मन्युना शोकेन देहे दग्धा कर्मणि लिट् ॥ ६० ॥ ज० म०

जग्लावित्यादि । सा जग्लौ ग्लानिं प्राप ग्लै क्षये दध्यौ चिन्तितवती ध्यै चिन्तने नितस्तान शब्दं चक्रे स्तनमि शब्दे क्षणं न प्राण मूर्च्छया निःस्पन्दत्वाच्च जीवितवती अनप्लु प्राणने प्राण्वयोग इत्यादिना पाक्षिकं णत्वं विव्यथे लब्धसंज्ञा सती दुःखं प्राप व्यथष्कङ दुःखे चालने व्यथ्यथेति खेज्जिः दैवं निनिन्द निन्दितवती णिदि कुत्सने चक्रन्द रुरोद मन्युना शोकेन अत्यर्थं देहे दग्धा दहौ दाहे कर्मणि रूपम् ॥ ६० ॥

आश्वासयामित्यादि । अथानन्तरं त्रिजटा रावणभगिनी तां सीतामाश्वासयाञ्चकार आश्वासितवती विष्णुरसौ दाशरथिः कथमस्य विरूपं भविष्यतीति निनाय च तस्मात् प्रकाशान्नीतवती तत उत्तरकालं वानरा विभीषणेन सह प्रजागराञ्चक्रुः आलोचनां कृतवन्तः कृञानुप्रयोगे नात्मनेपदं पूर्वस्यानात्मनेपदित्वात् ॥ ६१ ॥ ज० म०

आश्वासयामित्यादि । अथानन्तरं रावणस्य भगिनी त्रिजटा राक्षसी तां सीतां आश्वासयाञ्चकार तव प्रियो न मृत इति अशोकवनिकां नीतवती च ततोऽनन्तरं विभीषणेन सह वानरा जाग्रति स्म राघवयो-रक्षार्थमालोकयाञ्चक्रुरित्यर्थो जागृ जागरे दरिद्राकाशकासजागृभ्य इति पाक्षिक आम् ॥ ६१ ॥ भ०

चिचेतेत्यादि । तत्कृच्छ्रं शरबन्धदुःखं रामश्चिचेत ज्ञातवान् चिती संज्ञाने इत्युदात्तेत् शुचा शोकेन ओपाञ्चक्रे कर्मणि लिट् उषविदेत्याम् स च मन्युः शोकः अस्य रामस्य समापिप्ये वृद्धिङ्गतः ओप्यायी वृद्धौ तस्य लिटि प्यायः पीति पीभावः एरनेकाच इति यण् लक्ष्मणश्च विरुराव शब्दितवान् वत्स ! जीवसीति ॥ ६२ ॥ ज० म०

समीहे मर्त्तुमानर्च्चे तेन वाचाखिलं बलम् ।
आपप्रच्छे च सुग्रीवं स्वं देशं विससर्ज्ज च ॥ ६३ ॥
आदिदेश स किष्किन्धां राघवौ नेतुमङ्गदम् ।
प्रतिजज्ञे स्वयञ्चैव सुग्रीवो रक्षसां बधम् ॥ ६४ ॥

चिचेतेत्यादि । रामस्तत्कृच्छ्रं नागपाशबन्धनरूपं चिचेत ज्ञातवान् चिती संज्ञाने अथानन्तरं शुचा शोकेन स रामः ओषाञ्चक्रे दग्धः उषु दाहे दरिद्राकाशकासियाम् अस्य रामस्य मन्युः शोकः समापिप्ये संवृद्धः आप्यायीङ् वृद्धौ प्यायः पीर्यङ्ल्योः लक्ष्मणञ्च विरराव आहूतवान् रुत्र ध्वनौ ॥ ६२ ॥ भ०

समीह इत्यादि । मर्त्तुं प्राणांस्त्यक्तुं समीहे इच्छति स्म तेन रामेणाखिलं समस्तं बलं वाचा आनर्च्चे पूजितं भवद्भिः साध्वनुष्ठितं अस्मद्भाग्यमत्वापराध्यतीति कर्मणि लिट् तस्मान्नुट्द्विहल इति नुट् सुग्रीवञ्चापप्रच्छे अपृच्छति स्म आमन्त्रितवानित्यर्थः एहि तावद्दर्शनं मे देहि परिष्वजस्वेति आङिनुप्रच्छोरुपसंख्यानमिति तङ् स्वञ्च देशं किष्किन्ध्यां विससर्ज प्रहितवान् ॥ ६२ ॥ ज० भ०

समीहे इत्यादि । तेन रामेण मर्त्तुं समीहे समीहितं ईहङ् चेष्टे भावे रूपं कर्त्तरीत्यनेन गुर्व्विजादेरामोऽनित्यत्वं ये वदन्ति तन्मते रूपमिदं समीहे ईहिषे समीहिरे इत्यादयश्चिन्त्या इति केचित् क्वचिद्व- चनादिति केचित् । न्यासकृदादयोऽपि गुर्विजादे रामोऽनित्यत्वमाहुः समीषेइति पाठे इष्टुववाञ्छे तेन रामेण वाचा बलं आनर्च्चे पूजितं मत्कृते भवद्भिः किं न कृतं मद्भाग्यात्तु सर्व्वं निष्फलमभूदिति अर्च्चक्- पूजे अर्च्च चेति चकारात् पूज स्यान्तादादीति खेरान् कर्मणि रूपं रामः सुग्रीवं आपप्रच्छे आमन्त्रितवान् एहि मित्र ! मां परिष्वजस्वेति प्रच्छीश ज्ञीप्से विपराजीति मं च्यां नवेप्रच्छामिति जिनिषेधः स्वदेशं किष्किन्ध्रां विससर्ज्ज सुग्रीवं प्रस्थापयितुमारेभे इत्यर्थः सृजीशच विसर्गे । ६२ ॥ भ०

आदिदेशेत्यादि । सुग्रीवो राघवौ किष्किन्ध्रां नेतुमङ्गदमादिदेश

नागास्त्रमिदमेतस्य विपक्षस्तार्क्ष्यसंस्मृतिः ।
विभीषणादिति श्रुत्वा तं निदध्यौ रघूत्तमः ॥ ६५ ॥
ततो विजघटे शैलैरुद्वेलं पुप्लुवेऽम्बुधिः ।
वृक्षेभ्य उच्च्युते पुष्पैर्विरेजुर्भासुरा दिशः ॥ ६६ ॥

स्वयं च रक्षसां विनाशं प्रतिजज्ञे अहमेव व्यापादयामीति सम्प्रतिभ्या-मिति तङ् सकर्मकार्थं वचनम् ॥ ६४ ॥ ज० म०

आदिदेशेत्यादि । स सुग्रीवो राघवौ किष्किन्धां नेतुं अङ्गदं आदिदेश उक्तवान् दिशङ् प्रोचे चकाराद्दाने वर्त्तते आनुपूर्व्यः कथनार्थः मनोरमाकृत्तु दिश अतिसर्जने इति पठित्वा व्याचष्टे अतिसर्जनं दानं विज्ञानं कथनं वेति स्वयञ्च रक्षसां वधं प्रतिज्ञातवान् ज्ञा अवबोधने स-म्प्रतेरस्मृताविति सम् ॥ ६४ ॥ भ०

नागास्त्रमित्यादि । नागास्त्रमिदं न शराः एतस्य च विपक्षः शत्रु-स्तार्क्ष्यसंस्मृतिः गरुडसंस्मरणं यत् संस्मरणादेवास्य शान्तिरिति एवं विभीषणाच्छ्रुत्वा राघवस्तार्क्ष्यं दध्यौ ध्यातवान् ॥ ६५ ॥ ज० म०

नागास्त्रमित्यादि । इदं नागास्त्रं एतस्य नागास्त्रस्य शत्रुर्गरुड-स्मरणं इति विभीषणात् श्रुत्वा राघवस्तं गरुडं प्रदध्यौ चिन्तितवान् ॥ ६५ ॥ भ०

तत इत्यादि । ततो ध्यानानन्तरं तदागमनवायुवेगाच्छैलैर्विजघटे विघटितं भावे लिट् अम्बुधिरुद्वेलं वेलामतिक्रम्य पुप्लुवे गतः वृक्षेभ्यः सकाशात् पुष्पैरुच्च्युते च्युतं दिशश्च भासुराः सुपर्णपक्षप्रभाभिः-प्रभासनशीलाः सत्यो रराजुः शोभन्ते स्म फणाञ्च सर्पाणामित्येतत्पक्षे रूपं तत्र वेत्यनुवर्त्तते ॥ ६६ ॥ ज०म०

तत इत्यादि । ततो ध्यानानन्तरं तत्पक्षवायुवेगात् शैलैर्विजघटे वि-घटितं घटिष्वङ्क चेष्टे विपूर्व्वो विश्लेषमात्रे भावे रूपं अम्बुधिः समुद्रो वेलामतिक्रम्य पुप्लुवे गतः प्लुङ् च सर्पणे वृक्षेभ्यः पुष्पैरुच्च्युते स्खलितं च्युतच्युतिरक्षरे भावे रूपं स्वर्णपक्षप्रभाभिर्भासनशीला दिशो राजन्ते

जगाहिरेऽम्बुधिं नागा ववौ वायुर्मनोरमः।
तेजांसि शंशमाञ्चक्रुः शरवन्या विशिश्लिषुः॥ ६७॥
भ्रेजिरेऽक्षतवद्योधा लेभे संज्ञाञ्च लक्ष्मणः।
विभीषणोऽपि वभ्राजे गरुत्मान् प्राप चान्तिकम्॥६८॥

च राज्, भ्रणदोप्तौ तृफलेति पत्ते एत्वाभावः॥ ६६॥ भ०

जगाहिरे इत्यादि। नागा भयादम्बुधिं जगाहिरे प्रविष्टाः वायु-स्तत्प्रभवो ववौ वाति स्म तेजांसि रत्नादीनां शंशमाञ्चक्रुः अत्यर्थं प्रशा-न्तानि शमेर्यङ्लुगन्तस्य रूपं एवञ्च कृत्वा अनुप्रयोगे परस्मैपदं शरव-न्या विशिश्लिषुः विश्लिष्टाः दूरत एव तत्प्रभावात्॥ ६७॥ ज० म०

जगाहिरे इत्यादि। नागा भयादम्बुधिं प्रविष्टाः गाहू विलोडे मनोरमो वायुस्तत्प्रभवः शुभसूचकः स्वाभाविको वा वाति स्म वालगन-स्थियो रत्नादीनां तेजांसि तत्तेजसा सह शान्तानि शमुष्यङ्शमे सूत्र-स्थले ति यङ्यङोलुक् द्वित्वं अमजपेति खेर्नुग् त्यान्तत्वादाम् शम-शाञ्चक्रुरिति पाठे गरुड़स्य तेजांसि नागान्निवारयन्ति स्मेत्यर्थः शराणां वन्या विश्लिष्टाः तत्प्रभावात्॥ ६७॥ भ०

भ्रेजिर इत्यादि। अक्षतवत् अक्षता इव योधा भ्रेजिरे दीप्यन्ते स्म फणाञ्च सन्नानामित्येत्वपक्षे रूपं संज्ञाञ्चेतनां लक्ष्मणो लेभे प्राप्तवान् विभीषणोऽपि वभ्राजे सम्पन्ना मे मनोरथा इति अनेत्वपक्षे रूपं अन्ति-कञ्च रामलक्ष्मणयोर्गरुत्मान् प्राप गरुतः पक्षिणस्तेऽनुजीवितयास्य स-न्तीति मतुप् यवादेराकृतिगणत्वात् मय इति वत्वं न भवति॥६८॥ज०म०

भ्रेजिरे इत्यादि। योधा अक्षता इव भ्रेजिरे शोभन्ते स्म भ्रा-जृभ्रणटुच चकाराद्भासि तृफलेत्यादिना पाक्षिकमेत्वं विस्तोपस्य संज्ञां चेतनां लब्धवान् लभडोड्प्राप्तौ विभीषणोऽपि वभ्राजे समीहितं मे सम्पन्नमिति एत्वाभावपक्षे रूपं गरुत्मान् गरुड़ो राघवस्यान्तिकं समीपं प्राप गरुतः पक्षिणोऽनुजीविनः प्रशस्ता वा पक्षाः सन्त्यस्येति गरुत्मान् क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् मोङ्मपाइतुरित्यस्य विषयेऽपि मतुरस्त्यर्थे इत्यस्याभिनिवेशः वसोर्नः सेमप्युर्मतुप्योरिति ज्ञापकात्

संपस्पर्शाथ काकुत्स्थौ जज्ञाते तौ गतव्यथौ ।
तयोरात्मानमाचख्यौ ययौ चाथ यथागतम् ॥ ६९ ॥
स्वेनुस्तित्विषुरुद्येमुरुच्चख्नुः पर्वतांस्तरून् ।
वानरा दद्रुवुश्चाथ संग्रामं चाशशंसिरे ॥ ७० ॥
डुढौकिरे पुनर्लङ्कां बुबुधे तान्दशाननः ।

सोऽङ्मभ्यपाद्दतुरित्यस्य क्वचिद्व्यभिचार इति देवीदासचक्रवर्त्तिनोक्तम् । अवादिभ्यो मतुरिति परः नदंतसाविति पदत्वनिषेधात् न नत्वम् ॥६८॥भ०

संपस्पर्शेत्यादि । अनन्तरं गरुत्मान् काकुत्स्थौ राघवौ पस्पर्श स्पृष्टवान् तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ तयोः काकुत्स्थयोरात्मानमाचख्यौ गरुत्मानहमिति कथितवान् वा लिटीति चक्षिङः ख्याङ् ययौ चापि यथागतं तथा गतवान् ॥ ६९ ॥ ज०म०

संपस्पर्शेत्यादि । अथानन्तरं स गरुत्मान् काकुत्स्थौ संपस्पर्श स्पृशशौ स्पृशितौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ जनीस्यङ् जनने हनगमित्यङ्लोपः स्तुश्चुभिः श्चसादिति नस्य ञः तयोः काकुत्स्थयोः स्थाने आत्मानं आचख्यौ कथितवान् अहं गरुड़ इति ख्यात्व गतौ चक्षिङः ख्याञादेशो वा यथागतं तथा ययौ गतः ॥ ६९ ॥ भ०

स्वेनुरित्यादि । अथानन्तरं वानराः हृष्टाः स्वेनुः शब्दितवन्तः तित्विषुः शोभिताः त्विषदीप्तौ उद्येमुः उद्योगं चक्रुः पर्वतानुच्चख्नुः उत्खातवन्तः दद्रुवुः इतस्ततो भ्रान्ताः द्रुमहमयोर्गतौ संग्रामञ्च शशंसिरे अभीष्टवन्तः आङः शसि इच्छायां आदादिकोऽनुदात्तेत् ॥७०॥ज०म०

स्वेनुरित्यादि । अथानन्तरं वानराः स्वेनुर्जयशब्दं चक्रुः स्वनश्चेति चकारात् शब्दे तृफलेति पत्ते एत्वं तित्विषुः दीप्यन्ते स्म त्विषौञ्भासे उद्येमुः उद्यमं चक्रुः यमोऽङ्विरतौ पर्वतान् तरूंश्च उच्चख्नुः खनुञ् विदारणे हनगमित्यङ्लोपः दद्रुवुः शत्रून् प्रतिजग्मुः द्रुगतौ संग्रामञ्च आशशंसिरे इच्छन्ति स्म शनुस्तु हिंसास्तुत्योः आङ्पूर्व इच्छामाह यदुक्तं आशंसतिः स्यादिच्छायां शंसतीति स्तुतौ पदमिति ॥ ७० ॥ भ०

जीवतश्च विवेदारीन् वभ्रंशेऽसौ धृतेस्ततः ॥ ७१ ॥
सस्रंसे शरबन्धेन दिव्येनेति वुबुन्द सः ।
बभाजाथ परं मोहमूहाञ्चक्रे जयं न च ॥ ७२ ॥
धूम्राक्षोऽथ प्रतिष्ठासाञ्चक्रे रावणसम्मतः ।
सिंहास्यैर्युयुजे तस्य वृकास्यैश्च रथः खगैः ॥ ७३ ॥

डुढौकिर इत्यादि । पुनर्भूयो लङ्कां डुढौकिरे जग्मुः तान् वानरान् ढौकितान् दशाननो बुबुधे बुद्धवान् जीवतश्चारीन् रामादीन् विवेद ज्ञातवान् अन्यथा कथं वानरा ढौकिता इति ततश्च धृतेः सकाशाद्बभ्रंशे भ्रष्टः ॥ ७१ ॥ ज० म०

डुढौकिरे इत्यादि । वानराः पुनर्लङ्कां डुढौकिरे जग्मुः ढौकृतौकृटिङ्ङ् गत्यां खेरौकारस्य ह्रस्वउकारः दशाननस्तान् बुबुधे ज्ञातवान् बुध्यीङ्वेदने अरींश्च रामादीन् जीवतो विवेद जानाति स्म विदलमतौ ङास्वाभ्यामित्यस्याभावपक्षे रूपं तत धृतेः सकाशात् असौ भ्रष्टः स्त्रभ्रंश्यचेति चकारादधःपाते ॥ ७१ ॥ भ०

सस्रंस इत्यादि । दिव्येन शरबन्धेन सस्रंसे स्रस्तं भावे लिट् इत्येवं दशाननो वुबुन्द स्मृतवान् वुदि निशामने अथानन्तरं महामोहं मूर्च्छाकरं बभाज सेवते स्म न च जयमूहाञ्चक्रे वितर्कितवान् ॥ ७२ ॥ ज० म०

सस्रंसे इत्यादि । दिव्येन शरबन्धेन सस्रंसे स्रस्तमिति स दशाननो वुबुन्द स्मृतवान् स्त्रन्सुङ्भ्रंशे बुन्दिंर्लनिशामने अथानन्तरं परं मोहं मूर्च्छां बभाज भज ञ्ऒभागसेवयो; स्वकीयञ्च जयं न ऊहाञ्चक्रे ऊहङ् वितर्कौर्विजादीत्याम् ॥ ७२ ॥ भ०

धूम्राच इत्यादि । अथ धूम्राक्षो रावणसम्मतो रावणेनानुज्ञातः सन् भूते निष्ठान दृष्ट्वा प्रतिष्ठासाञ्चक्रे गन्तुमिच्छां कृतवान् प्रपूर्वात्तिष्ठतेः समवप्रतिभ्यः स्थ इति तङ् उपसर्गादित्यादिना षत्वं तस्य च गन्तुमिच्छतो रथः खगैः आकाशगामिभिर्यानैः सिंहमुखैर्वृकमुखैश्च युयुजे युक्तः कर्मणि लिट् ॥ ७३ ॥ ज० म०

त्वक्त्रैः संविव्ययुर्देहान् वाहनान्यधिशिश्यिरे ।
आनर्जुर्नृभुजोऽस्त्राणि ववञ्चुश्चाहवक्षितिम् ॥ ७४ ॥

धूम्राक्ष इत्यादि । अथानन्तरं धूम्राक्षो राक्षसो रावणेन सम्मतोऽनुज्ञातः सन् प्रस्थातुमिच्छां चक्रे प्रतिज्ञानिर्णयेत्यादिना प्रपूर्वस्याधातोर्भे क्तिबादिति पत्वं स्तनः पत्वाभावात् ञिस्तोः खेः सः ष इति न नियमः त्यान्तत्वादाम् तस्य रथः सिंहमुखैर्वृकमुखैश्च खगैराकाशगामिभिर्युयुजे युक्तः युजिर्योगे च युजौ कर्मणि रूपं कोक ईहामृगो वृक इत्यमरः ॥ ७३ ॥ म०

त्वक्त्रैरित्यादि । धूम्राक्षसम्बन्धिनो नृभुजो राक्षसाः त्वक्त्रैः सन्नाहैः त्वचं त्रायन्त इति देहान् संविव्ययुः छादितवन्तः व्येञ् संवरण इत्यस्य न व्योलिटीत्यात्वप्रतिषेधः लिट्यभ्यासस्योभयेषामिति सम्प्रसारणं वाहनान्यधिशिश्यिरे आरूढवन्तः एरनेकाचोऽयङ् अधिशीङ्ति कर्मसंज्ञा अस्त्राण्यानर्जुः गृहीतवन्तः अर्ज प्रतियत्ने अत आदेरिति दीर्घः तस्मान्नुड्द्विहलः आनर्चुरिति पाठान्तरं पूजितवन्तः आहवक्षितिञ्च रणभूमिं ववञ्चुर्गताः वञ्चु गतौ ॥ ७४ ॥ ज० म०

त्वक्त्रैरित्यादि । नृभुजो राक्षसा धूम्राक्षसम्बन्धिनः त्वक्त्रैः सन्नाहैर्देहान् संविव्ययुराच्छादितवन्तः व्येञ्ः व्ययस्येति खेर्जिः जिगन्त्यः कितीति पक्षे जेरभावः नाव्येञ्चामिति आनिषेधः तेन एचोऽजिस्या इत्यस्य न प्रवृत्तिः यब्रायनायाव इत्ययादेशः त्वचं त्रायत इति हनजनादिति डः एचोऽञ्चिया इत्यत्र अधितीति विषयसप्तमी तेनादन्तत्वात् वाहनानि अश्वादीनि अधिशिश्यिरे आरूढवन्तः शीङ्लजिस्त्रे अधिपूर्वं आरोहणेऽपि श्रुध्वोरित्यादिना यत्वं कर्मेत्यादिना क्रियाव्याप्यत्वेन टत्वे द्वितीया आरोहणार्थस्य सकर्मकत्वात् शीङोऽभिशेतेऽहिमित्यादौ आरोहणार्थे तात्पर्याभावादाधारस्य न मत्वं अस्त्राणि आनर्जुः जगृहुः अर्ज्ज अर्जने स्नानादादीनः खेरत् आनर्जुरिति

अध्युवास रथं तेये पुराच्चुक्षाव चाशुभम् ।
संश्रावयाञ्चकाराख्यां धूम्राक्षस्तत्वरे तथा ॥ ७५ ॥
निलिल्ये मूर्द्ध्नि गृध्रोऽस्य क्रूरा ध्वाङ्क्षा ववाशिरे ।
शिशीके शोणितं व्योम चचाल क्ष्मातलं तथा ॥ ७६ ॥

पाठे अर्द्धधातो रूपं आडवर्त्तितं रणभूमिं ववल्गुर्गमवन्तः वल्गु गत्याम् ॥ ७४ ॥ भ०

अध्युवासेत्यादि । धूम्राक्षो रथमध्युवास आरूढ़ः उपान्वध्याङ्वस इति कर्मसंज्ञा पुरात् लङ्कातः तेये निष्क्रान्तः अयपयतयेत्यादिषु तयिरनुदात्तेत् चुक्षाव च शब्दं कृतवान् अशुभं भयानकं क्षुशब्दे आख्यां आत्मीयं नाम संश्रावयाञ्चकार श्रावितवान् तथा तत्वरे त्वरते स्म युद्धाय ॥ ७५ ॥ ज० म०

अध्युवासेत्यादि । धूम्राक्षो रथमध्युवास आरूढ़ः वसे रनिवासे व्ययश्चेति खेर्ज्जिः कर्मक्रियेत्यादिना आधारस्य कर्मत्वं पुराल्लङ्कायास्तेये गत. तयङ्गतिरक्षयोः तृफलेत्यादिना एत्वं खिलोपश्च अशुभमशोभनं चुक्षाव क्षुतं क्षु लटुक्षुते आख्यां स्वनाम श्रावितवान् वानरानित्यर्थात् श्रुलगतौ श्रुतौ ञिः त्यान्तत्वादाम् तथा युद्धाय त्वरां चक्रे ञित्वर्षमङ्सदे ॥ ७४ ॥ भ०

निलिल्य इत्यादि । अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि गृध्रो निलिल्ये निलीनः एरनेकाचो यण् ध्वाङ्क्षाः क्रूराः अशुभशंसिनः ववाशिरे वाशन्ते स्म व्योम कर्तृ शोणितं शिशीके चरितवत् शीक सेचने इत्यनुदात्तेत् तथा क्ष्मातलं पृथ्वीतलं चचाल चलितम् ॥ ७६ ॥ ज० म०

निलिल्ये इत्यादि । अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि गृध्रो निलीनः लीञय श्लिषि श्रुध्वोरिति यत्वं क्रूरा अशुभशंसिनो ध्वाङ्क्षाः काका ववाशिरे वाश्रङ्ङ्पि अपिशब्दात् शब्दे व्योम आकाशं कर्तृ शोणितं शिशीके ववर्ष शीकङ् सेके क्ष्मातलं तथा चचाल चलति स्म चलगतौ ॥ ७६ ॥ म०

ततः प्रजघटे युद्धं शस्त्राशस्त्रि परस्परम् ।
वव्रश्चुराजुघूर्णुश्च स्वेमुश्चुकूर्दिरे तथा ॥ ७७ ॥
रुरुजुर्भेजिरे फेणुर्बहुधा हरिराक्षसाः ।
वीरा न विभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान् ॥ ७८ ॥

तत इत्यादि । ततो निमित्तादनन्तरं युद्धं प्रजघटे घटितं ते हरिराक्षसाः वक्ष्यमाणाः शस्त्राशस्त्रि क्षिप्तवन्तः परस्परं वव्रश्चुः छिन्नवन्तः आजुघूर्णुः चक्रवद्भ्रान्ताः घूर्णतिरनुदात्तेत् स्वेमुः शब्दं कृतवन्तः स्वमेः फणादित्वादेत्वं चुकूर्दिरे क्रीडितवन्तः ॥ ७७ ॥ ज० म०

तत इत्यादि । अनन्तरं युद्धं प्रजघटे प्रवृत्तं घटष्चेष्टे परस्परं शस्त्राणि आशु चिक्षिपुः हरिराक्षसा इत्यग्रिमश्लोकेनान्वयः अस्य इतिरूपे परस्परं वव्रश्चुः ओव्रश्चू छेदे ऋतां नवेप्रश्चामिति जिनिषेधः आजुघूर्णुश्चक्रवद्भ्रमन्ति स्म घूर्णघुर्णभ्रमणे जुघूर्णिरे च वव्रश्चुरिति क्वचित्पाठः स्वेमुः शब्दं चक्रुः स्यमुस्वनध्वनने णित्वात् फणादिः तृफलेत्यादिना पाक्षिकमेत्वं खिलोपश्च चुकूर्दिरे क्रीडितवन्तः कूर्दखुर्दक्रीडायाम् ॥ ७७ ॥ भ०

रुरुजुरित्यादि । रुरुजुर्भग्नवन्तः भेजिरे शोभिताः बहुधा बहुप्रकारं फेणुर्गताः फणगतौ वीराः सात्त्विका न विभयाञ्चक्रुः न बिभ्यति स्म भीह्रीभृहुवांश्लुवच्चेत्याम् बिभेतेः परस्मैपदित्वात् अनुप्रयोगे परस्मैपदं परान् शत्रून् शौर्यगुणयुक्ताः प्रयोजकाः भीषयाञ्चक्रिरे भीषयन्ते स्म अत्र भीस्म्योर्हेतुभय इति तङ् अनुप्रयोगेऽपि ॥ ७८ ॥ ज० म०

रुरुजुरित्यादि । हरयो वानरा राक्षसाश्च परस्परं रुरुजुः भग्नवन्तः रुजोभङ्गे भेजिरे शुशुभिरे भाजृङ्दीप्तौ चेति चकाराद्भ्राजि तृफलेति पाक्षिकमेत्वं खिलोपश्च बहुभिः प्रकारैः फेणुः फणनिगतौ वीराः शत्रून् विभयाञ्चक्रुः बिभ्यति स्म ञिभीतिभीत्यां प्रयां वाभीह्रीति पाक्षिकः प्रश्नाम् श्लीत्वात् ह्वादीरेद्विः णुर्भूङ इति गुणः परान् शत्रून् भीषयन्ते स्म भीभीषु वेति भीषादेशो मश्च त्वान्तत्वादाम् ॥ ७८ ॥ भ०

रक्तं प्रचुश्चुतुः क्षुण्णाः शिश्वियुर्व्वाणविक्षताः ।
अस्यतां शुशुवुर्व्वाणान् भुजाः साङ्गुष्ठमुष्टयः ॥ ७९ ॥
रणे चिक्रीड धूम्राक्षस्तं ततर्जानिलात्मजः ।
आददे च शिलां साश्वं पिपेषास्य रथं तया ॥ ८० ॥
पपात राक्षसो भूमौ रराट च भयङ्करम् ।
तुतोद गदया चारिं तं दुद्रावाऽद्रिणा कपिः ॥ ८१ ॥

रक्तमित्यादि । केचित् क्षुण्णाः खण्डिताः सन्तो रक्तं प्रचुश्चुतुः प्रक्षरिताः केचित् शिश्वियुः विभाषाश्वेरित्यसम्प्रसारणपक्षे रूपं वाणा-नस्यतां क्षिप्यतां योधानां भुजाः साङ्गुष्ठमुष्टयः अङ्गुष्ठमुष्टिसहिताः शरविक्षताः शरभिन्नाः शुशुवुः गताः गत्यर्थे इष्टव्यं सम्प्रसारणपक्षे रूपम् ॥ ७९ ॥ ज० म०

रक्तमित्यादि । केचित् क्षुण्णाः खण्डिताः सन्तो रक्तं क्षरन्ति स्म श्चुतिरक्षरे केचित् विक्षिप्ताः सन्तः शिश्वियुः शोथयुक्ता बभूवुः ट्वायो-श्विगतिवृद्ध्योः वाणान् अस्यतां क्षिप्यतां योधानां अङ्गुष्ठमुष्टिना सहिता भुजाः शरविक्षताः सन्तः शुशुवुः गताः पतिता इत्यर्थः श्वेर्जिर्वायङ्-योरिति पाक्षिको जिः ॥ ७९ ॥ भ०

रण इत्यादि । धूम्राक्षो रणे चिक्रीड क्रीडति स्म तमनिलात्मजो हनूमान् ततर्ज्ज भर्त्सितवान् शिलामाददे च गृहीतवान् तया शिलया अस्य धूम्राक्षस्य साश्वं रथं पिपेष चूर्णितवान् ॥ ज० म०

रण इत्यादि । धूम्राक्षो रणे क्रीडितवान् क्रीड़ खेले अनिला-त्मजो हनूमान् तं धूम्राक्षं ततर्ज तर्जभर्त्से शिलामाददे जग्राह च आङ्पूर्वो दाञग्रहणे तया शिलया अस्य धूम्राक्षस्य अश्वेन सहितं रथं पिपेष धौपिषॢचूर्णने ॥ ८० ॥ भ०

पपातेत्यादि । राक्षसो धूम्राक्षो भूमौ पपात पतितः सन् भयङ्करं रराट रटितवान् ततोऽरिं हनूमन्तं गदया तुतोद आहतवान् तं राक्षसं स कपिः अद्रिणा दुद्राव व्यापादितवान् ॥ ८१ ॥ ज० म०

अकम्पनस्ततो योद्धुं चकमे रावणाज्ञया ।
स रथेनाभिदुद्राव जुघुरे चातिभैरवम् ॥ ८२ ॥
पस्पन्दे तस्य वामाक्षि सस्वनुश्चाशिवाः खगाः ।
तान् वव्राजावमत्यासौ बभासे च रणे शरैः ॥ ८३ ॥

पपातेत्यादि । धूम्राक्षो राक्षसो भूमौ पपात पतनजगव्याज रराट शब्दं चक्रे रट वाचि ततः उत्थितः सन् गदया च अरिं हनूमन्तं तुतोद पीड़ितवान् तदशक्तौव्यग्रे कपिर्हनूमान् पर्वतेन तं राक्षसं दुधाव मारितवान् धुशिकम्पे अनेकार्थत्वाद्धिंसायामपि जघानेति कचित्पाठः दुद्रावेति क्वचित् ॥ ८१ ॥ भ०

अकम्पन इत्यादि । ततो धूम्राक्षविनाशानन्तरं अकम्पनो राक्षसः रावणाज्ञया युध्यस्वेति युद्धं चकमे इष्टवान् आयादय आर्द्धधातुके वेति णिङभावपक्षे रूपं सोऽकम्पनः रथेनाभिदुद्राव अभिमुखं गतः जुघुरे च शब्दं कृतवान् अतिभैरवं अतिभयानकं घुरभीमार्थशब्दयोरित्यनुदात्तेत् ॥ ८२ ॥ ज० म०

अकम्पन इत्यादि । ततोऽनन्तरं अकम्पनो राक्षसो रावणस्याज्ञया योद्धुं चकमे इष्टवान् कमु कङ्क्षायां हि वारे इत्यनेन णिङोऽभावपक्षे रूपं सोऽकम्पनो रथेनाभिदुद्राव अभिमुखं गतः द्रुगतौ गतौ अतिभैरवं अतिभयङ्करं जुघुरे शब्दञ्चकार घुर्ण्डीर्हिंसाज्यान्योः अनेकार्थत्वात् शब्देऽपि घुरशब्दनो भीमार्थ इत्यस्य भावे रूपं वा तेनेति विभक्तिव्यत्ययेन सम्बन्धः क्वचित्परस्मैपदिनोऽप्यात्मनेपदित्वात् कर्त्तरि रूपं वा शब्दार्थघुरधातुरप्यात्मनेपदीति जयमङ्गला जुघोरेति केचित्पठन्ति ॥ ८२ ॥ भ०

पस्पन्द इत्यादि । तस्याकम्पनस्यानिमित्तत्वसूचकं वामाक्षि पस्पन्दे स्पन्दितं अशुभास्य अशिवसूचकाः खगाः सस्वनुः शब्दं कृतवन्तः अनेत्वपक्षे रूपं तान् खगान् अवमत्यावज्ञायासौ वव्राज गतः रणे शरैश्च बभासे शोभितम् ॥ ८३ ॥ ज० म०

खमूयुर्वसुधामूवुः सायका रज्जुवत्तताः ।
तस्माद्बलैरपत्रेपे पुप्रोथास्मै न कश्चन ॥ ८४ ॥
स भस्मसाच्चकारारीन् दुद्राव च कृतान्तवत् ।
चुक्रोध मारुतिस्तालमुच्चखे च महाशिखम् ॥ ८५ ॥

पस्पन्द इत्यादि । अकुशलसूच्यते तस्याकम्पनस्य वामं चक्षुः स्पन्दते स्म स्फुरति स्म इत्यर्थः अशुभसूचकाः खगाः पक्षिणः शब्दं चक्रुः स्वनशब्दने तृफलेत्यादेरप्रवृत्तिपक्षे रूपं अथावकम्पनस्तान् खगान् अवजत्य अवज्ञाय वव्राज जगाम रणे शरैश्च बभासे भास्वद्दीप्तौ ॥ ८३ ॥ भ०

खमित्यादि । तेन सायका रज्जुवत्तता विस्तृताः सन्तः खमाकाशमूयुराच्छादयन्तः वसुधाञ्च ऊवुरुच्छादितवन्तः वेञ् तन्तुसन्ताने तस्य लिटि वयिरादेशः वश्चास्यान्यतरस्यामिति यकारस्य वकारादेशः तस्मादिति तमकम्पनं वीक्ष्य ल्यप्लोपे पञ्चमी त्रेपे लज्जितं भावे लिट् तृफलेत्यादिना एत्वाभ्यासलोपौ अस्मै अकम्पनाय न कश्चित् पुप्रोथ न प्रभवति स्म प्रोथ पर्य्याप्ताविति स्वरितेत् अत्र कर्त्तुः क्रियाफलायोगान्नात्मनेपदं नमःस्वस्तीत्यत्र अलंशब्दस्य पर्य्याप्तार्थग्रहणात् तदर्थयोगे चतुर्थी ॥ ८४ ॥ ज० म०

खमूयुरित्यादि । तेन रज्जुवत्तता विस्तृताः सायकाः खमाकाशमूयुः वसुधाञ्च ऊवुः आच्छादयन्तः ऐङ् वेञ्तौ वेञोवयवेति पाक्षिको वयादेशः व्ययश्चेत्यादौ वयग्रहणात् अानवेप्रच्छामित्यस्याप्रवृत्तिः तेन व्ययश्चेत्यादिना खेञ्जिः ग्रहखपाद्योरिति प्रकृतेर्ञ्जि यवः किरतीत्यस्य पक्षद्वये रूपं तस्मात्तमकम्पनं वीक्ष्य वानरसैन्यैरपत्रेपे लज्जितं त्रपूषलिङ् त्रियि तृफलेत्यादिना एत्वं खिलोपश्च भावे रूपं तस्मादिति अन्यारस्येत्यादिना यवर्थे पञ्चमी अस्मै अकम्पनाय कश्चन वीरो न पुप्रोथ न समर्थः प्रोथृञ् पर्य्याप्तौ खेरोकारस्य ह्रस्व उकारः शक्तार्थेत्यादिना चतुर्थी ॥ ८४ ॥ भ०

स भस्मसादित्यादि । सोऽकम्पनः अरीन् भस्मसाच्चकार कात्स्न्येन

यमायाकम्पनं तेन निरवाप महापशुम् ।
बभञ्ज निहते तस्मिन् शोको रावणमग्निवत् ॥ ८६ ॥
स विभ्रेष प्रचुचोद दन्तैरोष्ठं चखाद च ।
प्रगोपयाञ्चकाराशु यत्नेन परितः पुरम् ॥ ८७ ॥

भस्मभूतान् कृतवान् कृतान्तवत् यम इव दुदाव दुदु पीड़ितवान् टुदु उपतापे तं दृष्ट्वा मारुतिश्चुक्रोध क्रुद्धः तालञ्च उच्चं महाशिखमत्युच्छ्रायं उच्चखे उत्खातवान् अत्र क्रियाफलयोगात् तङ् ॥ ८५ ॥ ज० म०

स भस्मसादित्यादि । सोऽकम्पनोऽरीन् कार्त्स्न्येन भस्मीभूतांश्चकार कार्त्स्न्यायत्तयोरित्यादिना चसात् कृतान्तवत् यम इव दुदाव पीड़ितवान् टुदु उपतापे तं दृष्ट्वा मारुतिर्हनूमान् चुक्रोध क्रुद्धः क्रुधक्रौधोकोपे महाशिखमतिदीर्घं तालवृक्षञ्च उत्खातवान् खनुज विदारणे हनगमित्युपधालोपः ॥ ८५ ॥ म०

यमायेत्यादि । तेन तालेन स चाकम्पनं महापशुमिव यमाय निरुवाप दत्तवान् निरुपूर्वोऽवपिर्दाने वर्त्तते तत्र धातोर्यजादित्वात् सम्प्रसारणं न भवति अकित्त्वात् अभ्यासस्य लिटि भवत्येव तस्मिन्निहते शोकोऽग्निरिव रावणं बभञ्ज दग्धवान् ॥ ८६ ॥

यमायेत्यादि । तेन तालवृक्षेण हनूमान् अकम्पनं महापशुमिव यमाय निरुवाप दत्तवान् वपोञ् बीजसन्तानवीजोत्थोः निरुपूर्वो दाने वर्त्तते व्ययमहेति खेर्ज्जिः तस्मिन्नकम्पने निहते सति शोकोऽग्निरिव रावणं बभञ्ज ददाह भ्रस्जभौगपाके भूष्भलोरिति सस्य दत्वे स्तुश्चुभिश्चु शादिति जः अवृजोऽरेणौ भर्ज्जवेत्यस्याप्रवृत्तिपक्षे रूपम् ॥ ८६ ॥ म०

स विभ्रेत्यादि । स राजा विभ्रेष चलितः भ्रेष चलने स्वरितेत् प्रचुचोद क्रोधाल्लोष्टादीन् चूर्णितवान् ओष्ठञ्च दन्तैश्चखाद दष्टवान् पुरं लङ्कां समन्तात् यत्नेन प्रगोपयाञ्चकार रक्षितवान् गुपू रक्षण इत्यादात्तेत् आयप्रत्ययान्तत्वादाम् ॥ ८७ ॥ ज० म०

स विभ्रेषेत्यादि । स रावणो विभ्रेष चलितः धैर्यादित्यर्थात्

प्रहस्तमर्थयाञ्चक्रे योद्धुमद्भुतविक्रमम् ।
किं विचारेण राजेन्द्र! युद्धार्थां वयमित्यसौ ॥ ८८ ॥
चक्राणाशङ्कितो योद्धुमुत्सेहे च महारथः ।
नियेमिरेऽस्य योद्धारश्चक्लृपे चाश्वकुञ्जरम् ॥ ८९ ॥

श्वेपृ अचलने क्रोधात् प्रचुक्षोद लोष्टादीन् चूर्णितवान् अधौद्युदिरञ्जुदि दन्तैरोष्ठं चखाद दष्टवान् खादृभक्षणे खद स्थैर्ये बधे वा पुरं लङ्कां परितः समन्तात् आशु शीघ्रं यत्नेन प्रगोपयाञ्चकार रक्षितवान् गुपू-रक्षे वाऽरे इति दार्त्तिक आयः तत्रान्तत्वादाम् ॥ ८७ ॥

प्रहस्तमित्यादि । अद्भुतविक्रमं प्रहस्तं रावणो योद्धुं युध्यस्वेत्यर्थयाञ्चक्रे प्रार्थितवान् अर्थ उपयाच्ञायामिति चौरादिक आत्मनेपदी वचनात् असौ प्रहस्तः प्रार्थितश्चक्राण वभाणेति वक्ष्यमाणेन सम्बन्धः हे राजेन्द्र ! युद्धार्थां वयं युद्धप्रयोजनाः ततश्च किं विचारेणेति ॥ ८८ ॥ ज० म०

प्रहस्तमित्यादि । रावणः अद्भुतविक्रमं प्रहस्तं योद्धुं प्रार्थितवान् अर्थत्कङ्याचने असौ प्रहस्त इति चक्राणेति वक्ष्यमाणेन सम्बन्धः किं चक्राणेत्याह हे राजेन्द्र ! किं विचारेण यतो वयं युद्धप्रयोजना एव ॥ ८८ ॥ भ०

चक्राणेत्यादि । उक्ता च स महारथो योद्धा अशङ्कितो निर्भयः सन् योद्धुमुत्सेहे उत्साहं कृतवान् अस्य योद्धारो रावणेन नियेमिरे नियमिता अन्येन सह एतावद्भिर्योद्धव्यमिति कर्म्मणि लिट् अश्वकुञ्जरं चक्लृपे सज्जीकृतं पशुद्वन्द्वे कवद्भावः कृपेरोलः ॥ ८९ ॥ ज० म०

चक्राणेत्यादि । पूर्व्वोक्तं चक्राण उक्तवान् कण च शब्दे उक्ता महारथोऽसौ निःशङ्कः सन् योद्धुमुत्सहते स्म अस्य प्रहस्तस्य अनुजीविनो योद्धारो रावणेन नियेमिरे नियमिताः प्रहस्तेनैव सह एतावद्भिर्योद्धव्यमिति यमौ उपरतौ निपूर्व्वो नियममाह कर्म्मणि रूपं अश्वकुञ्जरं चक्लृपे सज्जीकृतं कृपूङ् चकल्पने कृपः कृपोऽक्कपादौ अश्वाश्च कुञ्जराश्चेति समाहारद्वन्द्वः सेनाङ्गत्वात् समाहार इति परः ।

युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः ।
आनर्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशंसिरे ॥ ९० ॥
ऊहिरे मूर्द्ध्नि सिद्धार्था गावश्चालेभिरे भटैः ।
प्रचुक्षुवुर्महास्त्राणि जिघ्रासाञ्चक्रिरे हयान् ॥ ९१ ॥

महान् रथो यस्य स तथा महारथशब्दः पारिभाषिकोऽप्यस्ति तथाच रथेनैकेन यो वीरः शास्ति शत्रुकुलं महत् । महारथः स विज्ञेयः संग्रामेषु परायण इति ॥ ८९ ॥ भ०

युयुजुरित्यादि । स्यन्दनान् रथान् अश्वैर्युयुजुः युञ्जन्ति स्म पुरोहिताः देवानीजुः पूजितवन्तः यजादित्वात्सम्प्रसारणं ब्राह्मणानानर्चुः पूजितवन्तः ते च पूजिताः आशिषः आशशंसिरे उक्तवन्तः आङः शासु इच्छायामनुदात्तेत् शास इत्वे आङ्शासोः क्वौ उपसङ्ख्यानमित्याशीः ॥ ९० ॥ ज० म०

युयुजुरित्यादि । अश्वैः स्यन्दनान् रथान् युयुजुः सङ्घट्टयन्ति स्म सारथय इत्यर्थात् युजिर्ङ्योगे युज समाधौ इत्यस्य श्यादिपक्षे वा रूपं पुरोहिता देवान् यजन्ति स्म यजेर्जौ देवार्चादानसङ्गतिकरणे कर्त्तुः फलवत्त्वाभावात् पं व्यथप्रहेति खेर्जिः यजस्वपाद्योरिति भूतस्य जिः ब्राह्मणांश्च पूजयन्ति स्म स्वान्तादादीति अर्च : खेरान् ते ब्राह्मणा अर्च्चिताः सन्तः आशिषश्च आशशंसिरे इच्छन्ति स्म आङः शासु इच्छायां आशशासिरे इति पाठे आङः शास इच्छायामपि ॥ ९० ॥ भ०

ऊहिरे इत्यादि । भटैर्योधैः सिद्धार्थाः सर्षपाः मूर्ध्नि ऊहिरे ऊढाः गावश्चालेभिरे स्पृष्टाः कर्मणि लिट् महास्त्राणि प्रचुक्षुवुः तेजितवन्तः तथा तैर्योद्धुं पार्य्यत इति क्षुणु तेजने भटाः हयान् जिघ्रासाञ्चक्रिरे घातुमिच्छां कृतवन्तः किमेते योद्धुं क्षमा नेति घ्रातुमिच्छायां सन इत्यात्मनेपदित्वादनुप्रयोगेऽपि तङ् ॥ ९१ ॥ ज० म०

ऊहिरे इत्यादि । भटैर्योधैर्मूर्द्ध्नि सिद्धार्थाः श्वेतसर्षपा ऊहिरे धृता मङ्गलार्थं वहेर्ञौप्रापणे व्यथप्रहेति खेर्जिः यजस्वपाद्योरिति

ललुः खड्गान् समार्ज्जुश्च ममृजुश्च परश्वधान् ।
अलञ्चक्रे समालेभे ववसे बुभुजे पपे ॥ ९२ ॥
जहसे च क्षणं यानैर्निर्जग्मे योद्धृभिस्ततः ।
विप्रान् प्रहृष्ट आनर्च्च जुहाव च विभावसुम् ॥ ९३ ॥

प्रकृतेर्जि : गावश्च आलेभिरे स्पृष्टाः लभङ्‌चौङ्‌ प्रप्राप्तौ आङ्‌पूर्व्वः स्प-र्शनेऽपि कर्म्मणि रूपं महास्त्राणि प्रचुक्ष्णुवुः तेजितवन्तः भटा इति विभ-क्तिव्यत्ययेनानुषज्यते क्ष्णु तेजने हयान् ज्ञातुमिच्छां चक्रुः किमेते युद्ध-कुशला न वेति ज्ञा अवबोधने सन्नन्तस्य प्रयोग इति मम् ॥ ९१ ॥ भ०

ललुरित्यादि । खड्गान् ललुर्गृहीतवन्तः ला आदाने समार्ज्जुश्च विशुद्धान् कृतवन्तः तथा परश्वधान् परशून् शोधितवन्तः मृजेरजादौ संक्रमे विभाषा वृद्धिः योद्धृभिर्वक्ष्यमाणैः अलञ्चक्रे अलङ्कृतं समालेभे समालब्धं ववसे छादितं वस आच्छादने बुभुजे भुक्तं पपे पीतं भावे लिट् ॥ ९२ ॥ ज म०

ललुरित्यादि । भटाः खड्गान् गृहीतवन्तः लल धृते समार्जुः खड्गान् शुद्धान् चक्रुः तथा परश्वधान् परशून् ममृजुः शोधितवन्तः मृजलशुद्धौ मृजोऽकङिति विभाषेति रूपद्वयं अलञ्चक्रे योद्धृभिरिति वक्ष्य-माणेन सम्बन्धः समालेभे अनुलेपनं कृतं ववसे आच्छादनं कृतं वसलस्तृतौ बुभुजे भुक्तं भुजधोतरणे भव्ये पपे पीतं पापाने सर्व्वत्र भावे ठी ॥ ९२ ॥ भ०

जहस इत्यादि । क्षणं जहसे हसितं यानैः करणभूतैः निर्जग्मे निर्गतं ततः प्रहृष्टः विप्रान् गोसुवर्णादिदानेन आनर्च्च पूजितवान् विभावसुं चाग्निं आज्यादिना जुहाव प्रीणितवान् ॥ ९३ ॥ ज० म०

जहसे इत्यादि । योद्धृभिः क्षणं जहसे हसितं यानैः रथादि-भिर्निर्जग्मे योद्धृ निर्गतं ततोऽनन्तरं प्रहृष्टो विप्रान् आनर्च्च पूजितवान् विभावसुं अग्निं जुहाव प्रीणितवान् हुलिहोमेऽदने च इहानेकार्थत्वात् प्रीणनेऽपि ॥ ९३ ॥ भ०

संवर्गयाञ्चकाराप्तान् चन्दनेन लिलेप च ।
चचाम मधु माध्वीकं त्वक्त्राञ्चाचकचे वरम् ॥ ९४ ॥
उष्णीषं मुमुचे चारु रथञ्च जुजुषे शुभम् ।
आललम्बे महास्त्राणि गन्तुं प्रवदृते ततः ॥ ९५ ॥
आजघ्नुस्तूर्य्यजातानि तुष्टुवुश्चानुजीविनः ।
रजः प्रववृते घोरं घोषश्च व्यानशे दिशः ॥ ९६ ॥

संवर्गयामित्यादि । आप्तान् विश्वासिनः संवर्गयाञ्चकार कटकादि-प्रदानेन संवर्गितवान् संवर्गं करोतीति णयन्तस्य रूपं चन्दनेन लिलेप समालब्धवान् मृद्वीका द्राक्षा तस्या विकारः मार्द्वीकं मधु चचाम त्वक्त्राञ्च सन्नहनं परं श्रेष्ठं आचकचे बद्धवान् कच बन्धने इत्यनुदात्तेत् ॥ ९४ ॥ ज० म०

संवर्गयामित्यादि । प्रहृष्टः आप्तान् जनान् संवर्गयाञ्चकार सम्भावितवान् सजातीयसमुदायो वर्गः दक्षिणहस्तादिदानेन शपथपूर्वकं संवर्गितवान् सम्बद्धीकृतवानित्यर्थो वा संवर्गं करोतीति णिः चन्दनेन लिलेप लेपनं कृतवान् लिलिपौशपञ्लेपे मधु माध्वीकं मद्यं चचाम वरं श्रेष्ठं त्वक्त्रं कवचं आचकचे बद्धवान् कचङ्बन्धदीप्त्योः ॥ ९४ ॥ भ०

उष्णीषमित्यादि । उष्णीषं शिरस्त्राणं मुमुचे रथञ्च जुजुषे जुषिरनुदात्तेत् महास्त्राणि आललम्बे गृहीतवान् लवि अवस्रंसने इत्यनुदात्तेत् तत उत्तरकालं गन्तुं प्रवदृते प्रवृत्तः ॥ ९५ ॥ ज० म०

उष्णीषमित्यादि । चारु उष्णीषं शिरस्त्राणं मुकुटं वा मुमुचे परिदधे मुचॢशमञ्मोक्षे परिधानेऽपि दृश्यते उष्णीषञ्च शिरोवेष्टे किरीटे लक्षणान्तर इति विश्वः। शुभं शोभमानं रथं जुजुषे सेवितवान् आरूढ़ इत्यर्थः। शङीजि जुषसुदिसेवे महास्त्राणि आललम्बे जग्राह लविङ्स्रंसने च ततोऽनन्तरं गन्तुं प्रवृत्तः वृतङ्वृत्त वर्त्तने ॥ ९५ ॥ भ०

आजघ्नुरित्यादि । तूर्य्यजातानि वाद्यसमूहान् आजघ्नुः ताड़ितवन्तः तन्नियुक्ता इत्यर्थात् आङोयमहन इति तङ् न भवति

तं यान्तं ददृशुरुग्राः क्रव्यादश्च सिषेविरे ।
आववुर्वायवो घोराः खादुल्काश्च प्रचस्कदुः ॥ ९७ ॥
सस्यन्दे शोणितं व्योम रथाङ्गानि प्रजज्वलुः ।
रथाः प्रचस्खलुः साश्वा न ररंहाश्वकुञ्जरम् ॥ ९८ ॥

सकर्मकत्वात् अनुजीविनश्च तुष्टुवुः जय जीवेति स्तुवन्ति स्म पदक्षोभाद्घोरं रजः प्रवव्रधे वर्द्धते स्म घोषश्च कलकलशब्दः दिशो व्यानशे व्याप्तवान् ॥ ९६ ॥ ज० म०

आजघ्नुरित्यादि । तूर्य्यसमूहान् आजघ्नुः वाद्यकारास्ताडितवन्तः आङाङ्गठादित्यस्याविषयः आङाङ्गकर्म्मकत्वाभावात् हनगमित्यग्लोपः अनुजीविनो जय जयेति स्तुवन्ति स्म स्तुवस्तुनौ कित्वादिति षत्वे ष्टुभिरिति टः घोरं भीषणं रजो वर्त्तते स्म प्रवव्रध इति कचित्पाठः घोषः कोलाहलश्च दिशो व्याप्तवान् अश्रूङ्व्याप्तिसंहतयोः स्वान्तादादीति खेरान् ॥ ९६ ॥ भ०

तं यान्तमित्यादि । तं प्रहस्तं यान्तं अशुभसूचकाः दद्दशुर्गतवन्तः क्रव्यादश्च शृगालाः सिषेविरे सेवितवन्तः वायवो घोराः पांशुव्याहिणः आववुः समन्ताद्वान्ति स्म उल्काश्च तदा तस्मिन् काले प्रचस्कदुः पतिताः कर सञ्चलन इत्यकर्मकः ॥ ९७ ॥ ज० म०

तं यान्तमित्यादि । उग्रा अशुभसूचकाः पक्षिणस्तं यान्तं गच्छन्तं प्रहस्तं ददृशुर्गतयन्तः दुद्रुवुरिति पाठे द्रुस्रुगतौ क्रव्यादः शृगालाः सेवितवन्तः सेटङ् सेवने खेरेकारस्य ह्रस्वइकारः घोराः प्रतिकूला वायवः सर्वतो वान्ति स्म वालगमनहिंसयोः तदा तस्मिन् काले उल्काः प्रचस्कदुः आकाशात् पतन्ति स्म कर सञ्चलने ॥ ९७ ॥ भ०

सस्यन्द इत्यादि । व्योम कर्तृ शोणितं सस्यन्दे सिञ्चति स्म स्यन्दिः सकर्म्मकः रथाङ्गानि खड्गादीनि जज्वलुः ज्वलन्ति स्म साश्वाः सहाश्वैः रथाः प्रचस्खलुः स्खलन्ति स्म अश्वकुञ्जरं न ररंह न गतम् ॥ ९८ ॥ ज० म०

प्रतोदा जगलुर्वाममानञ्चुर्यज्ञिया मृगाः ।
ददाल भूः पुपूरे द्यौः कपीनामपि निःस्वनैः ॥९९॥
सिषेह रक्तं हस्त्यश्वं राक्षसाश्च नितिष्ठिवुः ।
ततः शुशुभतुः सेने निर्दयञ्च प्रजघ्नतुः ॥१००॥
दिदिविषुर्दुद्रुवुश्चुक्रुशुश्चक्लमुः सुषुपुर्हताः ।

सस्यन्द इत्यादि । व्योम आकाशं कर्तृ शोणितं स्रवति स्म स्यन्दूङ् स्रुतौ रणाङ्गानि खड्गादीनि ज्वलन्ति स्म ज्वलजमचलत्विषोः अश्वैः सह रथाः स्खलन्ति स्म स्खलसञ्चये चक्रे अश्वकुञ्जरं कर्तृ न रराह न जगाम रहि गत्यां नेहाञ्चक्रे इति पाठे न चेष्टते स्मेत्यर्थः ॥९८॥ भ०

प्रतोदा इत्यादि । प्रतोदाः जगलुः हस्तेभ्यो गलिताः गल अदने अनेकार्थत्वात्पतनेऽपि मृगाः यज्ञियाः यज्ञार्हाः कृष्णसाराः यज्ञर्त्विग्भ्यां घखञौ वाममङ्गमानञ्चुः गतवन्तः अत आदेरिति दीर्घः तस्मा-नुड्द्विहलः भूर्ददाल विदीर्णा जजालेति पाठान्तरं चचालेत्यर्थः कपिनिःस्वनैर्द्यौराकाशं पुपूरे पूर्णा दिवः पूरणनिमित्तं यतः कपयो हर्षाद्विनाशसूचका एवमाचरन्ति ॥ ९९ ॥ ज० म०

प्रतोदा इत्यादि । सारथिहस्तात् प्रतोदास्ताडनदण्डाः गलिताः गलभक्षे अनेकार्थत्वात् पतनेऽपि यज्ञार्हा मृगाः कृष्णसारादयो वामं भागं गताः अञ्चु गतौ आनञ्जुरिति पाठे अनञ्जुः अञ्जू व्यक्ति-गतिम्रक्षणे भूमिर्ददाल विदीर्णा दल विभेदे जज्वालेति पाठे ज्वल चाले कपीनां निःस्वनैः द्यौराकाशं पुपूरे पूर्णा तथाशुभं दृष्ट्वा कपीनां हर्ष-निःस्वनो जात इति भावः परोक्षपत्तौ ॥ ९९ ॥ भ०

सिषेहेत्यादि । हस्त्यश्वं कर्तृ रक्तं सिषेह मूर्च्छितवदित्यर्थः षिह सेचने राक्षसाश्च स्वरक्तं नितिष्ठिवुः निरस्तवन्तः ततो दुर्निमित्तादनन्तरं ते सेने सन्नद्धे शुशुभतुः शोभितवत्यौ निर्दयं प्रजघ्नतुः प्रहृतवत्यौ ॥ १०० ॥ ज० म०

चिखादिरे चखादुश्च विलेपुश्च रणे भटाः ॥ १०१ ॥
प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा ।
वानराः कर्म सेनानी रक्षसां चक्षमे न तत् ॥ १०२ ॥
ऊर्णुनाव स शस्त्रौघैर्वानराणामनीकिनीम् ।
शशास च बहून् योधान् जीवितेन विवेच च ॥ १०३ ॥

मिमेहेत्यादि । हस्तग्रस्तं कर्ण्टं रक्तं मिमेह सूत्रितवत् मिहौ सिचि राक्षसाय रक्तं निष्ठीवन्ति स्म ष्ठिवु निरसने ष्ठिवजाद्योरिति पाक्षिकः खेत्कारः तत देहशामङ्गजनिमित्तानन्तरं द्वे सेने शुशुभतुः शुभशुन्-भदीपनहिंसयोरित्यस्य रूपं शुभ्लङ् दीप्तौ क्वचिदात्मनेपदिनोऽपि परस्मै पदित्वमिति केचित् । निर्दयञ्च प्रहारं चक्रतुः हन्ज हृतग्राम् ॥१००॥ भ०

दिद्विषुरित्यादि । रणे भटाः दिद्विषुः परस्परं द्विरवन्; द्विष अप्रीतौ दुद्युवुः अभिमुखं गतवन्तः द्यु अभिगमने चच्छुः छिन्नवन्तः छा छेदने हताश्चक्रुः मूर्च्छां गतवन्तः सुषुपुः भूमौ पतिताः वच्यादिना सम्प्रसारणं चखादिरे खादिताः कर्म्मणि लिट् चखादुः खादितवन्तः विलेपुश्च विलेपं कृतवन्तः अत एकहलमैत्वम् ॥ १०१ ॥ ज०म०

दिद्विषुरित्यादि । भटा रणे द्वेषं चक्रुः द्विषौ जवैरे दुद्युवुः अभिमुखं जग्मुः द्युलभिसर्पणे चच्छुश्छिन्नवन्तः छो लूनौ हताः सन्तश्चक्रुः मोहं गताः ञिक्लस्यक्लभिर्ग्लानौ सुषुपुर्भूमौ पतिताः स्वपौञिश्रये अनेन पतनं लक्ष्यते व्ययग्रहेति खेञ्जिः यह्स्वपाद्योरिति प्रकृतेञ्जिः चखादिरे अन्यैः खादिताः चिखिदिरे इति पाठे दैन्यं गताः खिदङ् धौ दैन्ये चखादुश्च अन्यान् खादितवन्तः खाऽङ् भक्षणे विलेपुर्विलापं चक्रुः व्यक्तभाषे विपूर्वः परिदेवने ॥ १०१ ॥ भ०

प्रहस्तस्येत्यादि । अमात्यान् सचिवान् प्रहस्तस्य पुरोऽग्रतः वानरा जिहिंसुर्हतवन्तः तथा दधृषुः परिभूतवन्तः ञिधृषाप्रागल्भ्ये तच्च कर्म्म वानरैर्यत्कृतं रक्षसां सेनानीः प्रहस्तः न चक्षमे न क्षमते स्म ॥१०२॥ ज० म०

आससञ्ज भयं तेषां दिद्युते च यथा रविः ।
नाययास द्विषां देहैर्जगाहे च दिशो दश ॥ १०४ ॥
केचित् सञ्चुकुटुर्भीता लेजिरेऽन्ये पराजिताः ।

प्रहस्तस्येत्यादि । वानराः प्रहस्तस्य पुरोऽग्रतोऽसातप्रान् हिंसन्ति स्म हिसधिकिहिंसे अमा सहार्थे तत्प्राहर्याचरेत्यादिना त्वः तथा दधृडुः अभिप्रान प्रागल्भ्ये तद्वानरैः कृतं कर्म्म एव्वसां सेनानीः प्रहस्तो न क्षमते स्म चमूड् अमर्षे ॥ १०२ ॥ भ०

जर्णुनावेत्यादि । स सेनानीर्वानराणामनीकिनीः सेनाः शस्त्रैरूर्णु-नाव च्छादितवान् ऊर्णोतेर्णुवद्भावादितीजादेरित्याम् न भवति शशास च योधान् शसु हिंसायां जीवितेन च विवेच च पृथकृतवान् विचिर् पृथग्भावे इति रुधादौ स्वरितेत् ॥ १०३ ॥ ज०भ०

जर्णुनावेत्यादि । स प्रहस्तो वानराणां अनीकिनीं सेनां शस्त्रसमूहैः प्रोर्णु-नाव आच्छादितवान् ऊर्णुञ् आच्छादने विजादीत्यादौ ऊर्णु वर्ज्जनान्नाम् नाजन्तादेरादिर्द्वि; स्वादौ नवद्रोय इति वचनात् नोरेव द्वित्वं बहून् योधान् शशास जघान उशसवधे जीवितेन च विवेच पृथक् कृत-वान् विचिर्लिधौत्त्वपृथक्त्वे ॥ १०३ ॥ भ०

आससञ्जेत्यादि । तेषां योधानां युयुत्सूनां भयमाससञ्ज आलग्नं सञ्जसङ्ग इत्यकर्मकः प्रहस्तश्च रविरिव दिद्युते द्योतते स्म द्युतिस्वाप्योः सम्प्रसारणमित्यभ्यासस्य सम्प्रसारणं नाययास युध्यमानो नायस्यति स्म यसुप्रयत्ने द्विषद्देहैश्च शत्रुकायैः करणभूतैः दश दिशो जगाहे अवष्ट-ब्धवान् ॥ १०४ ॥ ज०भ०

आससञ्जेत्यादि । प्रहस्तस्तेषां वानराणां भयं आससञ्ज आरो-पितवान् सञ्जोर्णिजर्थे अन्तर्भूतणार्थोऽत्र बोध्यः सञ्जेरकर्मकत्वात् किं वा भयं कर्तृ आससञ्ज आसक्तवत् प्रहस्तो रविरिव द्योतते स्म द्युतल्वङपि अपिशब्दात् द्युत्यां द्युतस्वाप्योः खेजिरिति जिः बध्यमा-नोऽपि नाययास नायासं प्राप द्वयसुयतने आङ्पूर्वः अमे द्विषां देहैः कपिशरीरैः करणभूतैः दश दिशो जगाहे विष्टब्धवान् ङगाहूविलोडने

संग्रामाद्बभ्रशुः केचित् ययाचुश्चापरेऽभयम् ॥ १०५ ॥
एवं विजिग्ये तां सेनां प्रहस्तोऽतिदद्दर्प च ।
शशाम न च संक्रुद्धो निर्जुगोप निशाचरान् ॥ १०६ ॥

केचिदित्यादि । केचिद्भीताः सन्तः सञ्चुकुटुः सङ्कुटिताः निश्च-यत्नाः स्थिता इत्यर्थः कुटकौटिल्ये अन्ये पराजिताः सन्तः लेजिरे भर्त्सिताः प्रहस्तेन मृगा इव कातरा यूयमिति लज्जाजिभर्त्सने कर्मणि लिट् केचित् संग्रामाद्बभ्रशुः पलायिताः भ्रशुभ्रंशु अधः पतने अपरे चाभयं ययाचुः याचितवन्तः ॥ १०५ ॥ ज० म०

केचिदित्यादि । केचन भीताः सन्तः सञ्चुकुटुः कौटिल्यं प्रापुः कुटिलयुद्धाश्रयणात् कुटशिकौटिल्ये अन्ये पराजिताः लेजिरे प्रहस्तेन भर्त्सिताः लजभर्त्सने कर्मणि रूपं केचित् संग्रामाद्बभ्रशुः पलायिताः ध्वंसुभ्रंशुभ्रंसु च चकारादधःपाते अपरे चाभयं देहीति याचितवन्तः टुडुयाचृञ याचने ॥ १०५ ॥ भ०

एवमित्यादि । एवमुक्तेन प्रकारेण प्रहस्तस्तां सेनां विजिग्ये जितवान् विपराभ्यां जेरिति तङ् संलिटोर्जेरिति कुत्वं अतिदद्दर्प च सुष्टु हृष्टवान् दृपहर्षविमोचनयोः न च शशाम न च शमनं गतः निशाचरान् स्वीयानमात्यान् निर्जुगोप रक्षितवान् आयाभावपक्षे रूपम् ॥ १०६ ॥ ज० म०

एवमित्यादि । उक्तप्रकारेण प्रहस्तस्तां कपिसेनां विजितवान् जिजये विपराजीति मं जेर्गिः सन्नुचोः अत्यर्थं दृप्तोऽपि जातः दृप्यङ्हर्षगर्वयोः दृपकिसन्दीपन इत्यस्य वा जेरभावपक्षे रूपं संक्रुद्धः सन् न शान्तो बभूव शमु दर्शने निशाचरान् निर्जुगोप गुपूरक्षे वाऽरे इति पक्षे आयस्याभावः ॥ १०६ ॥ भ०

चुक्रुध इत्यादि । तत्र तस्मिन् संग्रामे नीलेन चुक्रुधे क्रुद्धं भावे लिट् तरुश्चोच्चिक्षिपे उत्क्षिप्तः कर्मणि लिट् तेन तरुणा उन्मूलितेनाभिहतः सन् प्रहस्तो बाणान् विससृजे क्षिप्तवान् सृज विसर्गे इति दैवादिकोऽनुदात्तेत् ॥ १०७ ॥ ज० म०

चुक्रुधे तत्र नीलेन तरुश्चोच्चिक्षिपे महान् ।
प्रहस्तोऽभिहतस्तेन बाणान् विससृजे बहून् ॥ १०७ ॥
सेहे कपीरथाश्वांश्च रिपोस्ततर्द शाखिना ।
धरित्रीं मुषली तेये प्रहस्तश्चिखिदे न च ॥ १०८ ॥
संदुधुक्षे तयोः कोपः पस्फाये शस्त्रलाघवम् ।
नुनोद शाखिनं नील आवव्रे मुषली तरुम् ॥ १०९ ॥

चुक्रुधे इत्यादि । तत्र प्रहस्तविषये नीलेन चुक्रुधे क्रोधः कृतः क्रुध्कोपे भावे रूपं महान् तरुश्च तस्योपरि उच्चिक्षिपे उत्क्षिप्तः क्षिपशब्दौ क्षिपि कर्मणि रूपं तेन नीलेन तरुणा वा अभिहतः प्रहस्तो बहून् बाणान् विससृजे त्यक्तवान् सृज्धौव्विसर्गे ॥ १०७ ॥ भ०

सेहे कपिरित्यादि । कपिर्नीलो बाणान् सेहे सोढवान् रथानश्वांश्च रिपोः प्रहस्तस्य शाखिना तरुणा ततर्द हतवान् तृहहिंसि हिंसायां हतरथाश्वश्च प्रहस्तो मुषली गृहीतमुषलः धरित्रीं तेये गतवान् अयपये-लत तयिरनुदात्तेत् न च चिखिदे खिन्नः खिददैन्य इत्यनुदात्तेत् ॥ १०८ ॥ ज० भ०

सेहे इत्यादि । कपिर्नीलः सेहे सोढवान् तद्बाणवृष्टिमितर्थात् रिपोः प्रहस्तस्य रथमश्वांश्च शाखिना ततर्द तर्द हिंसे ततः प्रहस्तो मुष-लान्वितः सन् धरित्रीं तेये गतः तयङ्गतिरक्षयोः न च चिखिदे खेदं प्राप्तः खिदङ्ध्यौदैन्यके ॥ १०८ ॥ भ०

सन्दुधुक्ष इत्यादि । तयोर्नीलप्रहस्तयोः कोपः सन्दुधुक्षे वृद्धिं गतः अस्त्रलाघवमस्त्रकौशलं पस्फाये वृद्धिं गतः नुनोद शाखिनं प्रेरितवान् मुषली प्रहस्तः तरुमावव्रे मुषलेनावृतवान् ॥ १०९ ॥ ज०भ०

संदुधुक्षे इत्यादि । तयोर्नीलप्रहस्तयोः कोपः संदुधुक्षे संप्रदीप्तः धिचधुक्षङ्सन्दीपने क्लेशे जीवे अस्त्रविषये लाघवं शीघ्रता वर्द्धते स्म स्फायीङ्संवृद्धौ नीलः शाखिनं नुनोद नुदञ्प्रेरणे मुषली प्रहस्तस्तरुं निवारितवान् वृञ्वरणे ॥ १०९ ॥ भ०

वियत्यानभ्रतुर्भूमौ मण्डलानि विचेरतुः ।
प्रदुद्रुवतुरन्योन्यं वीरौ शश्रमतुर्न च ॥ ११० ॥
समीरयाञ्चकाराथ राक्षसस्य कपिः शिलाम् ।
क्षतस्तया ममारासावाशिश्राय च भूतलम् ॥ १११ ॥
तुतुषुर्वानराः सर्वे नेशुश्चित्रा निशाचराः ।
जेरुराशा दशास्यस्य सैन्यं नीलं तुनाव च ॥ ११२ ॥

वियतीत्यादि । वीरौ तौ वियति आकाशे आनभ्रतुः गतौ अभ्र-बभ्रेति गत्यर्थः वियतोऽधिकरणत्वेन विवक्षितत्वात् द्वितीया न कृता भूमौ च मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुः आचरितवन्तौ अन्योन्यं प्रदुद्रुवतुः उपतापितवन्तौ न च शश्रमतुः श्रान्तौ ॥ ११० ॥ ज० म०

वियतीत्यादि । तौ नीलप्रहस्तौ वीरौ वियति आकाशे गतौ अभ्रगत्यां ख्यात्यादादीति खेरात् भूमौ मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुर्विहितवन्तौ अन्योन्यं प्रदुद्रुवतुः उपतापितौ द्रुणोपतापे द्रु-गतौ नतु शश्रमतुः श्रान्तौ श्रमुच्यञ्जिदूर् तपःखेदयोः ॥ ११० ॥ भ०

समीरयामित्यादि । अथानन्तरं कपिः राक्षसस्य शिलां समीर-याञ्चकार क्षिप्तवान् ईरक्षेप इति चौरादिक उदात्तेत् असौ राक्षसस्तया शिलया क्षतः सन् ममार मृतवान् भूतलञ्च शिश्राय आश्रितवान् पतित इत्यर्थः ॥ १११ ॥ ज० म०

समीत्यादि । अथानन्तरं कपिर्नीलो राक्षसस्य प्रहस्तस्य शिलां समीरयाञ्चकार विक्षिप्तवान् ईक्षि गतौ तुदि तया शिलया क्षतस्ताड़ि-तोऽसौ प्रहस्तो मृतः मृङ्प्रोद्यमसिति नियमात् प भूतलञ्च आश्रित-वान् श्रिञसेवने ॥ १११ ॥ भ०

तुतुषुरित्यादि । वानराः सर्वे तुतुषुः तुष्टाः निशाचरा नेशुः पलायिताः विचित्राः नानाप्रकाराः दशास्यस्य आशाः मनोरथा जेरुः जीर्णाः वा जृभ्रष्ट इतेगत्वं सैन्यञ्च कर्त्त नीलं तुनाव स्तौति स्म ॥११२ ॥ ज० म०

यदा न फेलुः क्षणदाचराणां मनोरथा रामबलाभियोगे ।
लङ्कां तदा भेजुरुदीर्णदैन्या व्याचख्युरुच्चैश्च हतं प्रहस्तम् ॥११३॥

इति भट्टिकाव्ये तिङ्काण्डे लिङ्विलसितो नाम
प्रथमः काव्यस्य चतुर्दशः सर्गः ॥

तुतुपुरित्यादि । ततः सर्वे वानरास्तुष्टाः तुप्तृप्यौप्रीञ्ज चकारा-न्तौ तुम्पुरिति पाठे नीलमिति योज्यं चिता नानाप्रकारा निशाचरा नेशुः पलायिताः यश्चल्यूनार्थे दशास्यस्य आशा मनोरथा जीर्णाः जृ गिकिश्यानौ क्रतोगुः कितुषां तृफलेत्यादिना पाक्षिकमेत्वं खिलो-पश्च गेलुरिति पाठे गलभक्षे अनेकार्थत्वात् गतावपि सर्वमेव सैन्यं कर्तृ नीलं तुनाव तुलस्तुतौ नूशिस्तवने वा ॥ ११२ ॥ भ०

यदेत्यादि । क्षणदाचराणां रामबलाभियोगे मनोरथा वाञ्छितानि यदा न फेलुः न फलिताः प्रहस्तस्य व्यापादितत्वात् तदा लङ्कां भेजुः ते गतवन्तः उदीर्णदैन्याः उदीर्णं महद्दैन्यं दीनभावो येषामिति प्रहस्तञ्च हतं व्हतमुच्चैराचख्युः आख्यातवन्तः रावणायेत्यर्थात् ॥११२॥ ज०म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लिङ्वि-लसितो नाम प्रथमः परिच्छेदः काव्यस्य चतुर्दशः सर्गः ।

यदा नेत्यादि । रामबलस्य हनने क्षणदाचराणां राक्षसानां मनोरथा यदा न फेलुः फलनिष्पत्तौ तृफलेति एत्वं खिलोपश्च तदा निशाचरा लङ्कां भेजुः सेवितवन्तः भजञ्जीभागसेवयोः हतं प्रहस्तमुच्चै-राख्यातवन्तश्च रावणमित्यर्थात् ख्यालख्यातौ चक्षिङः ख्याङ् वा उदीर्णं महद्दैन्यं येषां कृगिगत्यां क्तः ॥ ११३ ॥ भ०

इति वद्यवैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेन-विरचितायां मुग्धबोधिन्यां भट्टिटीकायां शरबन्धो नाम चतुर्दशः सर्गः ।

# पञ्चदशः सर्गः ।



राक्षसेन्द्रस्ततोऽभैषीदैक्षिष्ट परितः पुरम् ।
प्रातिष्ठिपच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥ १ ॥
तेऽभ्यगुर्भवनं तस्य सुप्तं चैक्षिषताथ तम् ।

इतःप्रभृति लुङमधिकृत्य तद्विलसितमाह तत्र भूतसामान्ये लुङ् ततोऽन्यत्रापि दर्शयिष्यति

राक्षसेत्यादि । ततः प्रहस्तवधश्रवणानन्तरं ईदृशोऽपि व्यापादित इति अभैषीत् सिचि वृद्धिः परितः समन्तात् पुरं लङ्कामैक्षिष्ट दृष्टवान् किमत्र शक्यते स्यातुं न वेति कुम्भकर्णस्य सुप्तस्य बोधनार्थं राक्षसान् प्रातिष्ठिपत् प्रस्थापितवान् तिष्ठतेश्चङ् परे णावुपधाह्रस्वापवादः तिष्ठतेरिदितीत्वं द्विर्वचनमभ्यासकार्य्यं धातोरादेशः षत्वं ष्टुत्वञ्च ॥ १॥ज०म०

अथ टीमधिकृत्य तद्विलसितमुच्यते पाणिनिमते लुङिति संज्ञा

राक्षसेन्द्र इत्यादि । राक्षसेन्द्रो रावणः ततः प्रहस्तवधादभैषीत् भीतः ञिभीञ्भिभीत्यां भवद्भूतभव्ये त्रिशः इति भूतसामान्ये टी षीटीधीष्वमिति धातोरादौ सिस्वादम् ध्यां षिः नेमेकाजादिति इमोभावः अजवदेत्यादिना ञ्रिः वदाद्यस्त्रिसेरिति ईम् क्षितादिति षः परितः समन्तात् पुरं लङ्कां वीक्षितवान् किमत्र स्यातुं शक्यते न वेति ईक्षङ् दर्शने भूयोऽमजादेरिति अमि कृते पुनरम् आदिगेचोरिति सन्धिः वसोऽरस्येतीम् षत्वं ष्टुभिरिति तस्य टः राक्षसान् कुम्भकर्णस्य बोधार्थं प्रस्थापितवांश्च ष्ठा स्थाने ञिःप्रेरणे ह्रीव्लीत्यादिना आदन्तत्वात्पन् ञिम्निदुश्चम इति अङ् स्थोञोञग्ङौरितीत्वं धुद्विश्चङि ञेर्लोपः ॥१॥भ०

व्याहार्षुस्तुमुलान् शब्दान् दण्डैश्चावधिषुर्द्रुतम् ॥ २ ॥
केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वचिक्रमन् ।
शीतैरभ्यषिचंस्तोयैरलातैश्चाप्यदक्षिषुः ॥ ३ ॥
नखैरकर्त्तिषुस्तीक्ष्णै रदाङ्कुर्दशनैस्तथा ।

तेऽभ्यगुरित्यादि । ते राक्षसास्तस्य कुम्भकर्णस्य भवनं गृहं अभ्यगुः गताः इणोगेति लुङि विषयभूते गादेशः गातिस्थेति सिचोलुक् तस्य पदान्तादिति पररूपत्वं ते च सुप्तमैक्षिषत दृष्टवन्तः अथानन्तरं प्रबोधार्थं तुमुलान्महतो ध्वनीन् व्याहार्षुः व्याहृतवन्तः नेटीति वृद्धिप्रतिषेधः हृ-समुदायपरिग्रहणाद्वृद्धेः प्राप्तत्वात् ॥ २ ॥ ज०म०

तेऽभ्यगुरित्यादि । ते राक्षसास्तस्य कुम्भकर्णस्य भवनं गृहं अभ्यगुर्गतवन्तः इणोगतौ गा आमिति इणोगादेशः अनुस्विद्धेः भूस्थापिबदेण इति सेर्लुक् उस्येतीत्याल्लोपः सुप्तं तं कुम्भकर्णं ऐक्षिषत दृष्टवन्तः सान्तोऽदन्तः अथानन्तरं प्रबोधार्थं तुमुलान् महतः शब्दान् व्याहार्षुः व्याहृतवन्तः चक्रुरित्यर्थः । हृञ् हृतौ नेमेकाजादिति इणनिषेधः व्रजवदेत्यादिना सिः अनुस्विद्धेः दण्डैश्च द्रुतमावधिषुः हनवधटीति बधादेशः हृषादेः सेन इत्यादौ बधवर्ज्जनान्न त्रिः॥ २ ॥ भ०

केशानित्यादि । तस्य केशानलुञ्चिषः उत्पाटितवन्तः गात्रेषु गजानचिक्रमन् क्रमयन्ति स्म क्रमेर्मान्तत्वान्मित्संज्ञायां ह्रस्वत्वं चङि स्वाङ्गावादभ्यासस्य सन्वत इति इत्वं शीतैस्तोयैरभ्यषिचन् सिञ्चन्ति स्म अत्र सिचिरभ्युक्षणे वर्त्तते तेनोदकस्य करणत्वं सिपिविचिक्रमेत्यङ् प्राक्सितादड्व्यवायेऽपीति षत्वं अलातैरङ्गारैश्चाप्यदक्षिषुः दग्धवन्तः अनेकार्थत्वाद्धातूनाम् ॥ ३ ॥ ज०म०

केशानित्यादि । ते राक्षसास्तस्य कुम्भकर्णस्य केशान् अलुञ्चिषुः उत्पाटितवन्तः लुञ्चापनयने गात्रेषु हस्तिनो भ्रमयन्ति स्म भ्रमुजणचाले ञि: चङ् द्वित्वं न्याङ्ग्रङ् इत खः षटादीत्यादिना वा खेःसन्वत् व्यस्येत्वन् अचिक्रमन्निति पाठे क्रमुगतौ शीतैस्तोयैरभिषिञ्चन्ति स्म

घ्रितैरतौत्सुः शूलैश्च भेरीश्चावीवदन् शुभाः ॥ ४ ॥
स तान्नाजीगणत्सर्वानिच्छयाबुद्ध च स्वयम् ।
अबूबुधत कस्मान्मामप्राक्षीच्च निशाचरान् ॥ ५ ॥
तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर ! ।

पिचपशौच्चवरणे अभिपूर्वः प्रोक्षणमाह तेन तोयानां करणत्वं वक्षाग्र-स्येत्यादिना क्तः लोपोतोदेचोः गीक इत्यादिना षत्वं ज्वलातैरङ्गारैरपि अदम्भिषुर्दग्धवन्तः दन्भु न दम्भे अनेकार्थत्वाद्दाहार्थः ॥ ३ ॥भ०

नखैरित्यादि । तीक्ष्णैर्नखैरकर्त्तिषुश्छिन्नवन्तः तथा दंशमैस्तीक्ष्णै-रदाङ्क्षुः दशन्ति स्म दंशेरनिटोहलन्तलक्षणा वृद्धिः व्रश्चेत्यादिना षत्वं षढोः कः सि शीतैस्तीक्ष्णैः स्थूलैरतौत्सुः व्यथयन्ति स्म तुदेरनिटोहलन्त-लक्षणा वृद्धिः भेरीश्च शुभाः उच्चैः शब्दा अवीवदन् वादितवन्तः सन्वल्ल-घुनीति सन्वद्भावादभ्यासस्येत्वं दीर्घोलघोरिति दीर्घत्वम् ॥ ४ ॥

नखैरित्यादि । तीक्ष्णैर्नखैश्छिदुः कृतीशपछिदि तथा तीक्ष्णैर्दन्तै-र्दशन्ति स्म दनुशो दंशने थांक्षिः औदित्त्वान्नेम् अनिमत्वात् व्रजवदे-त्यादिना व्रिः शक्षाजति षङ् षढोः कः स्नोनुः अमुनोः क्लिलादिति पः अतुक्षिदेः घ्रितैस्तीक्ष्णैः स्थूलैरपि व्यथयन्ति स्म तुदशजौव्यथे अनि-मत्वाद्वृद्धिः भग्भोरिति दस्य तः शुभाः शोभनाः उच्चैः शब्दा भेरी-र्वादितवन्तः वदेर्णिः कर्त्तुः फलवत्त्वाविवक्षायां पं वदक्वाक्सन्देशयोरि-त्यस्मात् चुरादेर्णाताद्दाजिरङ् ह्वित्वं अ, ङा, ङ-स्वः सन्वत् ज-लौपः ॥ ४ ॥ ज० म०

स तानित्यादि । कुम्भकर्णः तान् सर्वान् उपद्रुतान् नाजीगणत् नं गणयति स्म न वेदितवानित्यर्थः । गणेः स्वार्थिकणच तस्यादन्तस्याभ्यासस्य ईच गण इतीत्वं स्वयं चात्मन इच्छयाबुद्ध बुध्यते स्म झलोझलीति सि-चोलोपः निशाचरांश्चाप्राक्षीत् पृष्टवान् हलन्तलक्षणा वृद्धिः व्रश्चेत्यादिना षत्वं षढोः कः सि कस्मान्मामबूबुधत यूयं प्रबोधितवन्तः बुधेर्ण्यन्तस्य मध्यमपुरुषबहुवचने णौ चङ्युपधाया ह्रस्वत्वं अभ्यासस्य दीर्घो लघो-रिति दीर्घत्वम् ॥ ५ ॥ ज०म०

सोऽस्नासीद्व्यलिपन्मांसमघासीद्वारुणीमपात् ॥ ६ ॥
न्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतत् गृहात् ।
राजा यान्तं तमद्राक्षीदुदस्थाच्च सदासनात् ॥ ७ ॥
अतुषत् पीठमासन्ने निरदिक्षच्च काञ्चनम् ।

स तानित्यादि । स कुम्भकर्णस्तान् तुमुलशब्दादीन् न गणयति स्म गण-त्क्षसंख्याने चुर्य्यौञिः अदन्तत्वात् ञिश्यन्तेजुङ्तोरित्यस्य न विषयः कृशाल्लोपोऽशितत्रयोरितत्रकारलोपः वेङ्गणकथेति पाञ्चिकः खेरीङ् स्वयमिच्छया च प्रबुद्धः बुध्यौङ्वेदने पदस्तनीणधेय्यायेतत्रस्याप्रवृत्तिपक्षे षि; तस्य दृगुङुर्मढीश्यनिभिति क्वित्वात् गुणाभावः झसस्वादिति सेर्लोपः ढभात्तयोरिति धः झपक्षसोरिति घस्य दः खेःतन्विदिति दीर्घः प्रक्षौश-ज्ञीप्से अनिसत्वाद्वृद्धिः षढोः कः ॥ ५ ॥ भ०

त इत्यादि । ते राक्षसा यथोक्ताः सन्तः अभाषिषत भाषितवन्तः हे क्षणदाचर ! राजा रावणस्त्वां दिदृक्षुः द्रष्टुमेषणशील इति न लोकेति षष्ठीप्रतिषेधः स कुम्भकर्णः श्रुत्वा अस्नासीत् स्नातवान् यमरमेत्यादिना सगिटौ व्यलिपत् समालिप्तवान् लिपिसिचित्याङ् मांसमघासीत् भक्षणं वारुणीमपात् पीतवान् गातिस्थेति सिचोलुक् ॥ ६ ॥ ज०भ०

तेऽभाषिषतेत्यादि । ते दृष्टा निशाचरा भाषितवन्तः भाषङ् वाचि कान्तोऽदन्तः किमित्याह हे क्षणदाचर ! राजा रावणस्त्वां द्रष्टुमिच्छुः ढधेङ्क्तीत्यादौ उदन्तक्षइर्जनात् न कर्मणः षष्ठी स कुम्भकर्णः स्नातवान् ष्णालशोधने श्वाद्यादीति षस्य सत्वे तन्निमित्तस्य णस्य नत्वं ञ्यांसिः स्नाद्यस्तीति इम् यमरमेति इमुसनौ झसस्वाज्झसीति सेर्लोपः ष्टै वेष्टे अनेकार्थत्वात् स्नानमप्याहेत्यन्ये, स्नातः सन् व्यलिपत् चन्दनानुलेपनं कृतवान् ञिलिपौशपलेपे वक्त्रस्येत्यादिना ङः मांसं अघासीत् भक्षितान् ष्मालभक्षणे वारुणीं मदिरामपात् पापाने भूस्थापिवेति सेर्लुक् ॥ ६ ॥ भ०

न्यवसिष्टेत्यादि । ततो रावणं द्रष्टुं न्यवसिष्ट सर्वनिवसितं वसनं त्यक्त्वा अन्यवस्त्रं परिदधाति स्म गृहात्स्वालयात् प्रवृत्तः

असेष्ट कुम्भकर्णोऽथ समुपाविक्षदथान्तिके ॥ ८ ॥
अवादीन्मां किमित्याह्वो राज्ञा च प्रत्यवादि सः ।
मा ज्ञासीस्त्वं सुखी रामो यदकार्षीत् स रक्षसाम् ॥ ६ ॥
उदतारीदुदन्वन्तं पुरं नः पर्यरोऽरुधत् ।

घुष्योर्लुङीति परस्मैपदं पुषादित्वादङ् तमायान्तं राजाद्राक्षीत् दृष्टवान् ऋजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः आसनाच्च ईषदुदस्थात् उत्थितः अकर्मकत्वादात्मनेपदं न भवति ॥ ७ ॥ ज० म०

न्यवेतत्यादि । कुम्भकर्णो न्यवसिष्ट राजदर्शनोचितवस्त्रं परिहितवान् वसलङ् स्तृतौ ततोऽनन्तरं स्वकीयाद्गृहात् रावणं द्रष्टुं प्रवृत्तः वृतङ्वर्त्तने शासलिहुद्रादिति द्युतादित्वात् ङः तेनैव पं राजा रावणस्तमागच्छन्तमद्राक्षीत् दृष्टवान् दृश् शौ प्रेक्षे इरित्वात् पाक्षिकोङ; तदभावे ज्ञासि: ऋशसोऽनिमिजुङ् इत्यादौ इशवर्जनान्न सक् वृद्धौऽकिति रुद्रः अनिम्त्वादृजवदेति .म्र: शच्छाजिति षङ् षढोः कः क्लिलादिति यः दृष्ट्वा आसनादीषदुत्थितः उत्पूर्वतिष्ठतेरूर्द्ध्वचेष्टायां पं उदोऽनूर्द्ध्वे इत्यनोः भूस्थापिवेति सेर्लुक् ॥ ७ ॥ भ०

अतुषदित्यादि । दृष्ट्वा चातुषत् तुष्टः पुषादित्वात् ङः आसन्ने चात्मनः काञ्चनं पीठं निरदिशत् आदिष्टवान् दिशेः शल इगुपधादनिटः क्स इति क्सः अथानन्तरं कुम्भकर्णः असेष्ट ईषद्धसितवान् स चाथोयेनायमादर इति अन्तिके चास्य काञ्चनं पीठमध्यास्य पीठे उपाविक्षत् उपविष्टः पूर्ववत् क्सः ॥ ८ ॥ ज० म०

अतुषदित्यादि । दृष्ट्वा कलम्त् तुष्टोऽभूत् तुषर्षयोञ्जि च चकारात् तुष्टौ पुषादित्वात् ङ. स्मितोऽङ्कष्टोमेद्गरितस्तु वेतत्यमेनैवेदसिद्धौ पूर्व्वाचार्य्यक्रमदर्शनात् शासजिद्युतपुषादेरित्यादिसूत्रस्य तथाकरणे मुग्धबोधस्य कविकल्पद्रुमात्माक् कृतत्वात् गौरवं न वाच्यं एतदन्यत्राप्यवधेयं आसन्ने आत्मन आसन्ने समीपदेशे काञ्चनं पीठमादिष्टवान् दिशेः इगमोऽनिमिजुङ् इति सक् षढोः कः से काञ्चनस्य विकार इति विकारस्यैवेति ष्णः अनन्तरं कुम्भकर्णोऽस्मयसेष्ट स्मितं चकार स्मिङ् स्मिते

अद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम् ॥ १० ॥

यद्यपि स्मितमीषद्धसनं तथापि राजसान्निध्ये स्मितस्याप्यनौचित्यादल्प-
मलक्ष्यमानहसनायाल्पमित्युक्तं हासमात्रेऽपि स्मितमिति केचित् । स्मितो-
त्पत्तिः कार्य्यवशात्तादृशादरदर्शनात् नेमेकाजादिति इम्निषेधः अन्तिके
रावणसमीपे उपविष्टवान् । अर्थात्काञ्चनपीठे विद्यासागरस्तु अल्पं रावण-
पीठापेक्षया स्वल्पं काञ्चनपीठमुपाविक्षदित्याह तन्न साधु आधारप्रसङ्गात्
शौनिशप्रवेशे उपपूर्व आसने ॥ ८ ॥ भ०

अवादीदित्यादि । तत उपविश्य तमवादीदुक्तवान् व्रजेत्यादिना
वृद्धिः किमिति कस्मात् कारणात् मामाह्वः आहूतवान् लिपिसिचिह्वश्चे-
त्यङ् आतोलोपः राज्ञा च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः कर्मणि लुङ्
चिण्भावकर्मणोरिति चिण् चिणोलुगिति तलोपः सुखी त्वं येन रामो
रक्षसां यदकार्षीत् तत्त्वं नाज्ञासीः न ज्ञातवानसि यमरमेति सगिटौ
॥ ९ ॥ ज० म०

अवादीदित्यादि । उपविश्य कुम्भकर्णो रावणमवादीत् उक्तवान्
वदव्रजेति व्रिः किमवादीदित्याह किमिति कस्मात् कारणात्
त्वं मां आह्वः आहूतवान् ह्वः अस्यर्द्धे वक्ताख्येति ङः एचोऽशित्या उश्चे-
चीत्यालोपः राज्ञा रावणेन च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः रलोर्य-
णिणाविनीण् अणिव्यन्तेजुङत इति व्रिः इणस्तनलोपः स महात्मा रामो
रक्षसां यत् कृतवान् भयमित्यर्थात् तत्सर्वं सुखी त्वं न ज्ञातवान् ज्ञागवो-
धने यमरमेति इमुसनौ कञ्कृतौ कञ्जदडुकृतौ वा नेमेकाजिति इम्-
निषेधः व्रजवदेत्यादिना व्रिः ॥ ९ ॥ भ०

उदतारीदित्यादि । स उदन्वन्तं समुद्रमुदतारीत् उत्तीर्णः सिचि
वृद्धिः सोऽस्माकं पुरं परितः समन्तादरुधत् आवृतवान् इरितोवेत्यङ्
रणे शस्त्रैरद्योतिष्ट द्योतितवान् द्युतादेर्लुङीति विकल्पेन परस्मैपदवि-
धानादात्मनेपदं राक्षसान् क्षयं विनाशमनैषीत् नीतवान् ॥ १०॥ ज०म०

उदतारीदित्यादि । राम उदन्वन्तं समुद्रं उत्तीर्णवान् तॄतरेऽभि-

न प्रावोचमहं किञ्चिदप्रियं यावदजीविषम् ।
बन्धुस्त्वमर्थितः स्नेहान्मा द्विषो न बधीर्मम ॥ ११ ॥
वीर्य्यं मा न दद्दर्शस्त्वं मा न त्रास्थाः चतां पुरम् ।
तवाद्राक्ष्म वयं वीर्य्यं त्वमजैषीः पुरा सुरान् ॥ १२ ॥

अवे सुल्यां क्यां सिः ऋदाद्यस्तीति ईम् वचोरस्येतोम् अजवद्देति स्त्रिः अस-स्त्वादिति सेर्लोपः उदकं विद्यतेऽस्येतुग्रदन्वान् मनोपादित्वात् कस्य नत्वं अस्माकं पुरं परितः समन्तात् रुद्धवान् रुधिरोज् आवृतौ इरित्त्वात् श्वासलिदुग्रदित्यादिना पाञ्चिकोऽङः रणे शस्त्रैर्विद्योतितवान् द्युतल्लङ्र्ङापि अपिशब्दात् दुग्रल्यां दुग्रतादेशेपि ङविधानात्यं गम्यते ङित्त्वान्नं अवत्येव तेन क्यां दुग्रतादेरुभयपदित्वं मे सिरेऽराक्षसान् चयं नीतवान् णीञ्प्रा-पणे तत्त्वं नाज्ञासीरिति सम्बन्धः ॥ १० ॥ भ०

न प्रावोचमित्यादि । यावदजीविषं यावन्तं कालं जीवितः तावन्तं कालं कस्यचिदप्रियं किञ्चिन्न प्रावोचं नोक्तवानहमिति तव विदितमेव किन्तु बन्धुस्त्वं स्नेहादर्थितः सन् मम सम्बन्धिनो द्विषः शत्रून् मा न बधीः मा न मारयेति किन्तु मारयेति माङि लुङ् सर्वलकारापवादः प्रावो-चमिति वचउम् ॥ ११ ॥ ज० भ०

न प्रावोचमित्यादि । यावन्तं कालमहं जीवितवान् तावन्तं कालं किञ्चित् प्रियं न प्रावोचं नोक्तवानस्मि प्रार्थयामि त्वेति भावः सम्प्रति बन्धुस्त्वमिति कृत्वा स्नेहात्प्रार्थितोऽसि मम द्विषः शत्रून् त्वं मा न बधीः किन्तु मारय वचोवाचि वक्तास्येत्यादिना ङः वच्यस्यविपतामिति ओचादेशः जीवप्राणे हनलौ गतौ बधे माटो वेति टो घाटोयोश्चिति माङ्योगेऽस्मोऽभावः हनबधष्टीति बधादेशः ॥ ११ ॥ भ०

वीर्य्यमित्यादि । त्वं वीर्य्यं मा न दद्दर्शः किन्तु दर्शय अयत्नस्य चङि रूपं चतां परैरवसादितां पुरं मा न त्रास्थाः किन्तु त्रायस्व त्रैङ्पालने न च त्वमशक्तः यतस्तव वीर्य्यमद्राक्ष्म दृष्टवन्तो वयं न हश दृति कृमादेशो न भवति

अवोचत् कुम्भकर्णस्तं वयं मन्त्रेऽभ्यधाम यत् ।
न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमन् ॥ १३ ॥
आप्तवाक्यान्यवामंस्था मूर्खवाक्येष्ववास्थिथाः ।
अध्यगीष्टाश्च शास्त्राणि प्रत्यपत्था हितन्न च ॥ १४ ॥

इरितो वेति विकल्पेनाङ्विधानात्तदभावपक्षे रूपं पुरा पूर्वं त्वं सुरान् देवानजैषीः जितवानसि ॥ १२ ॥ ज० म०

वीर्य्यमित्यादि । त्वं वीर्य्यं स्वसामर्थ्यं मा न दर्शः किन्तु दर्शय दृशेरङ्गित्वादङ् क्षतां शरैः पीड़ितां पुरं लङ्कां मा न त्रास्थाः किन्तु त्रायस्व त्वङ्पालने न त्वमसमर्थः यतस्तव वीर्य्यं वयं दृष्टवन्तः दृशे-रेर्चे इरित्त्वात् ङस्याप्रवृत्तिपक्षे सिः वद्‌व्रौऽङ्किदिति ञ्चतोरः अनिमु-त्वात् अजवदेति त्रिः पङ् पठोः कः से त्वं पुरा पूर्वस्मिन् काले सुरान् जितवान् जिजये च ॥ १२ ॥ भ०

अवोचदित्यादि । इत्युक्तवन्तं तं रावणं कुम्भकर्णोऽवोचत् उक्त-वान् मन्त्रे मन्त्रणासमये क्रियासमारम्भगतोऽभ्युपाय इत्यादिना यद्वयम-भ्यधाम अभिहितवन्तः धाधातोर्गातिस्थेति सिचोलुक् तत्सर्वं त्वं नाश्रौषीः श्रुतवानसि तस्माच्छ्रवणस्येदं फलं विनाशरूपमागमत् आगतं गमे-र्लृदित्वादङ् ॥ १३ ॥ ज० म०

अवोचदित्यादि । इत्युक्तवन्तं तं रावणं कुम्भकर्ण उक्तवान् वचेः पूर्ववत् ङः वोचादेशश्च मन्त्रे मन्त्रणायां वयं यदुक्तवन्तः तत्सर्वं त्वं न श्रुतवान् तस्माच्छ्रवणस्य इदं फलं विनाशरूपमागतं डुधाञ्धारणे पुष्टौ दानेऽभिपूर्व्वोभाषणे वर्त्तते भूस्थापिपदेन इति सेर्लुक् देत्यनेन दा धादेति दासंज्ञकस्य ग्रहणात् श्रुनुगतौ श्रुतौ नेमेकाजिति इस्निषेधः गमृल्गत्यां लृदित्वात् ङः ॥ १३ ॥ भ०

प्राज्ञवाक्यानीत्यादि । प्राज्ञानां विभीषणादीनां वाक्यान्यवामंस्थाः आज्ञातवानसि मनज्ञाने मूर्खवाक्येषु प्रहस्तादिवाक्येषु अवास्थिथाः अव-स्थितोऽसि समवप्रविभ्यः स्थ इति तङ् स्थाध्वोरिच्चात्तञ्च शास्त्राण्यध्यगीष्टा

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन्।
अभाणीन्माल्यवान् युक्तमचंस्थास्त्वन्न तन्मदात्॥ १५॥
राघवस्यामुषः कान्तामप्रैरक्तो न चापिपः।

अधीतवानसि विभाषालुङ्‌लृङोरिति इङोग्यादेशः नच हितं प्रत्यपत्थाः प्रतिपन्नवानसि पदगतौ झलोझलीति सिचोलोपः॥ १४॥ ज० म०

प्राज्ञवाक्यानीत्यादि। त्वं प्राज्ञानां विभीषणादीनां वाक्यानि अनास्थाः अवज्ञातवान् मनदुङ्‌बोधे मूर्खाणां प्रहस्तादीनां वाक्येषु अवस्थितोऽसि प्रतिज्ञानिर्णयेत्यादिना अवपूर्वतिष्ठतेर्मं स्यादोर्ङिरिति ङिः गुणाभावश्च झस्वाज्झसीति सेर्लोपः शास्त्राणि अधीतवानसि किन्तु हितं न प्रतिपन्नवानसि अधीङ्‌अध्ययने अध्युपसर्गोपादानं सहप्रयोगनियमार्थं गीङ्टीय्योर्वेति ग्यादेशः दीर्घादेशोगुणाभावस्तटार्थः पेत्वा-न्नणुरितिग्रहणञ्च यौपदङ्‌गतौ झस्वाज्झसीति सेर्लोपः॥ १४॥ म०

मूर्खा इत्यादि। मूर्खाः सर्व एवैते त्वामववञ्चन्त विप्रलब्धवन्तः वञ्चुप्रलम्भने ण्यन्तस्य र्टधिवञ्चीत्यादिना तङि चङि रूपं ये विग्रहमचीकरन् कारितवन्तो भवन्तं एष मातामहो माल्यवान् युक्तमभाणीत् भणितवान भणशब्दे इटईटीति सिचोलोपः तत् त्वं मदान्नाचंस्था न सोढवानसि चमू सहने॥ १५॥ ज० म०

मूर्खास्त्वामित्यादि। ये प्रहस्तादयो विग्रहं कारितवन्तस्ते मूर्खास्त्वां वञ्चितवन्तः माल्यवान् यदुक्तं न्याय्यमुक्तवान् त्वं मदान्न सोढवान् वन्चङ्कनञ्चने प्रतारे वञ्चिगर्द्धै रिति मं ञिम्भीत्यङ्‌क्रञ्जाप्रन्तदाङ्‌ञ्जङ्ग्रङः स इति ह्रस्वत्वं खेः सन्वद्दृहाविति सन्वत् ख्यस्य त्सनीति इत्वं हसादेर्घस्येति दीर्घत्वं भण च चकारात् शब्दे हसादेः सेम इति पञ्चे त्रिः चमूङ्‌ञिषच चकारान्मर्षे ऊदित्वाद्वेमूदितस्वरेत्यस्याप्रवृत्तिपञ्चे ञ्नोर्नुः॥ १५॥ म०

राघवस्येत्यादि। प्रमादित्वमपि तेऽस्ति यतो राघवस्य कान्तां अमुषः खण्डितवानसि खण्डनञ्चास्या इदं यद्भर्त्रा वियोजनं मुषखण्डने मुषा-

मा नानुभूः स्वकान्दोषान् मा मुहो मा रुषोऽधुना ॥ १६ ॥

तस्याप्यत्यक्रमीत् कालो यत्तदाहमवादिषम् ।
अघानिषत रक्षांसि परैः कोशांस्त्वमव्ययीः ॥ १७ ॥

दित्वादङ् पुषादयश्च गणान्ता गृहीताः आप्तैर्विभीषणादिभिरुक्तो न चार्पिपः नार्पितवानसि कान्तां ऋतेर्णौ अर्त्तिह्रीत्यादिना पुगन्तगुणः चङि द्विर्वचने चीति स्थानिवद्भावादजादेर्द्वितीयस्येति पिशब्दो द्विरुच्यते रेफस्य नन्द्रा इति प्रतिषेधः तदधुना स्वकानात्मीयान्दोषान् दुश्चरितानि मा नानुभूः अपितु अनुभव माङि लुङ् गातिस्थेति सिचो लुक् मा मुहः मोहं मा गमः मा रुषः रोषं मा कार्षीः मुहिरुषिभ्यां पुषादित्वादङ् ॥ १६ ॥ ज० म०

राघवस्येत्यादि । प्रमादित्वमपि तवास्ति यतस्त्वं राघवस्य कान्तामसुषः अपहृतवान् मुष्य इर्श्छिदि अनेकार्थत्वादपहारार्थः कान्तावियोजनमेव वात्र छेदः शासिवदिरित्यादिना पञ्चेङः आप्तैर्विभीषणादिभिरुक्तोऽपि त्वं तां न चार्पितवानसि ऋच्छि गत्यां ऋप्रापणे च ह्रीव्लीरीत्यादिना पन् णुश्च नाजन्तादेरादिर्द्विः खादौनवद्रोऽप्ये इति वचनात् पीत्यस्य द्वित्वं अजोर्पिपः अधुना स्वीयान् दोषान् आत्मीयचेष्टितानि मा न अन्वभूः किन्तु अनुभव अनुपूर्वभवतेर्भूस्थापिवेति सेर्लुक त्वं मा मुहः मोहं मा गमः मा रुषः रोषं मा कार्षीः मुहनञ्जि वैचित्त्ये रुषिञ्जिक्रुधि आभ्यां शासिवदिद्युतादिति ङः ॥ १६ ॥ भ०

तस्येत्यादि । यत्तदा तस्मिन् कालेऽहमवादिषं अभिहितवानस्मि रामः सन्धीयतामिति तस्यापि सन्धेः कालोऽत्यक्रमीदतिक्रान्तः स्नुक्रमोरनात्मनेपदनिमित्त इतीट् मान्तत्वाद्वृद्धिप्रतिषेधः यतः परैः शत्रुभिः रक्षांस्यघानिषत हतानि चिण्वद्भावाद्वृद्धिघत्वे त्वञ्च कोशमव्ययीः व्यक्तवानसि लङ्कादाहे तस्यार्जितत्वात् व्ययवित्तसमुत्सर्ग इति चुरादौ पठ्यते यदा आधृषाद्वेति णिज् नास्ति तदा रूपं श्यन्तत्वाद्वृद्धिप्रतिषेधः व्ययगतावित्यस्यापि रूपं अनेकार्थत्वाद्दाहनासुत्सर्जनेऽपि द्रष्टव्यम् ॥ १७ ॥ ज० म०

सन्धानकारणं तेजो न्यगभूत्तेऽकथास्तथा ।
यत्त्वं वैराणि कोषञ्च सहदण्डमजिग्लपः ॥ १८ ॥
अक्रुधच्चाभ्यधाद्वाक्यं कुम्भकर्णं दशाननः ।

तस्येत्यादि । तस्मिन् काले तव यदहं अवादिषं रामेण सह सन्धिः क्रियतामित्युक्तवानस्मि तस्यापि सम्बेः कालोऽतिक्रान्तः यतः परैः शत्रुभिः रक्षांसि हतानि त्वं कोषद्रव्यं व्ययितवानसि लङ्कादाहे तस्यारक्षणात् वीरेभ्यः प्रदानाच्च क्रव्यक्रस्तुगतौ हसासेः सेम इत्यादौ मान्तवर्ज्जनाच्च ञ्रिः वदेर्व्रजवदेति त्रिः हन्तेः कर्मणि हनश्चहदश्च इति भिण् हनस्त-ङित्यादौ इणवर्ज्जनाच्च तङ् खेर्हौघोऽणिति चेति घः कान्तोऽदन्त इत्यत् व्ययञ्च गत्यां अनेकार्थत्वात् व्ययार्थेऽपि यान्तत्वाच्च ञ्रिः॥१७॥ भ०

सन्धानेत्यादि । तथा त्वमकथाः कृतवानसि तनादिभ्यस्तथासोरिति सिचोलुक् यथा सन्धानकारणं सन्धानहेतुकं यत्तव तेजः प्रचण्डत्वं तत् न्यगभूत् न्यग्भूतं गातिस्थेति सिचोलुक् कुत इत्याह यत्त्वं वैराणि शत्रुभावान् कोषाञ्च सहदण्डं ससैन्यमजिग्लपः ग्लपितवानसि ग्लायते-र्णौपुकि ग्लास्नावनुवमाञ्चेति मित्त्वात् ह्रस्वत्वं ग्लपयतेश्चङि रूपं यदि हि तेजो भवेत् सर्वं तथावस्थितमेव स्यात् ततश्च तेजसोऽभावात् कथं स-न्धानं द्वयोः परस्परानुपतापात् यथोक्तं यावन्मात्रमुपकुर्य्यात् तावन्मात्र-मेवास्य प्रत्युपकुर्य्यात् तेजो हि सन्धानकारणं तप्तं लोहं तप्तेन लोहेन सन्धत्त इति ॥ १८ ॥ ज०म०

सन्धेत्यादि । त्वं तथाकृताः कृतवानसि यथा सन्धानकारणं तव तेजो न्यग्भूतं को हि तेजस्विना सन्धिं करोति कृञ इगुङ्न्धं ढीति सेः कित्वाद्गुणाभावः झलझादिति सिलोपः यद्यस्मात् त्वं वैराणि वीर-भावान् वीरयोग्यानि दुर्गाणि वा शत्रुत्वानि वा सह दण्डं सैन्येन सह कोषञ्च ग्लपितवानसि ग्लैक्लमे ञिः ह्रीवृलीति पन् ॥ १८ ॥ भ०

अक्रुधदित्यादि । अथैवमुक्तो दशाननः अक्रुधत् क्रुद्धवान् पुषादि-

किं त्वं मामजुगुप्सिष्ठा नैदिधः स्वपराक्रमम् ॥ १९ ॥
मोज्जिग्रहः सुनीतानि मास्म क्रंस्था न संयुगे ।
मोपलब्धाः कृतैर्दोषैर्मा न वाढीर्हितं परम् ॥ २० ॥

त्वादङ् क्रुद्धश्च कुम्भकर्णमभ्यधात् अभिहितवान् गातिस्थेति सिचोलुक् किमिति त्वं मां अजुगुप्सिष्ठाः निन्दितवानसि स्वविक्रमं नैदिधः न वर्द्धितवानसि एधधातोर्ण्यन्तस्य चुङि स्थानिवद्भावादजादेर्द्वितीयस्येति धिशब्दो द्विरुच्यते ॥ १९ ॥ ज०म०

अक्रुधदित्यादि । एवमुक्तो दशाननोऽक्रुधत् क्रुधलृबौ कोपे पुषादित्वात् ङः कुम्भकर्णञ्च उक्तवान् डुधाञ्लिधारणे पुष्टौ दाने टी भूस्थापिवेति सेर्लुक् किमभ्यधादित्याह किं त्वं मां निन्दितवानसि गुपुङ्गोपनकुत्सनयोः कित्तिजगुप इति सन् निन्दायां निशानार्जवनिन्दास्वित्युक्तेः स्वपराक्रमं किं न वर्द्धितवानसि एधङ् वृद्धौ अग्लादङ् द्वित्वञ्च ॥ १९ ॥ भ०

मोज्जिग्रह इत्यादि । सुनीतानि सुनयान् मा उज्जिग्रहः मा उद्ग्राहय ग्रहेर्ण्यन्तस्य चङि रूपं संयुगे युद्धे विषयभूते मा क्रंस्था मोत्साहं न कार्षीः अपितस्महस्व स्मोत्तरे लुङ्चेति चकाराल्लुङ् वृत्तिसर्गेत्यादिना क्रमेः सर्गे उत्साहे तङ् दोषैः असत्कृतैः मोपालब्धाः मोपालभस्व झलोझलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जशझि हितं परं कार्य्यस्य मा न वाढीः मा न वह किन्तु वह वहेरनिटो हलन्तलक्षणा वृद्धिः ढत्वकत्वषत्वानि ॥ २० ॥ ज०म०

मोज्जिग्रह इत्यादि । शोभनानि नीतानि न उद्ग्राहय ग्रहेर्ण्यन्तादङ् प्रस्तुतमुपन्यस्तमाह संयुगे युद्धविषये मास्म न क्रंस्थाः किन्त्ववश्यमुत्साहं कुरु मास्मेन योगे इति सर्वकाले टी वृत्तागुत्साहतायने क्रम इति सं स्नुक्रमोऽमे इति मवर्ज्जनादिमोऽभावः कृतैर्दोषैर्मा उपालब्धाः नोपलभस्व न भर्त्स्ययेत्यर्थः । लभङौङ्प्राप्तौ झसस्वाञ्झसीति सिलोपः हितं युक्तं परं मा न वाढीः अपितत्वश्यं वहेति भावः वहे-

कुम्भकर्णस्ततोऽगर्जीद्भटांश्चान्यान् न्यवीवृतत्।
उपायंस्त महास्त्राणि निरगाच्च द्रुतं पुरः॥ २१॥
मूर्ध्ना दिवमिवालेखीत् खं व्यापद्वपुषोरुणा।
पदाभ्यां क्ष्मामिवाभैत्सीत् दृष्ट्याधाक्षीदिव द्विषः॥२२॥

औपाधिके अनित्यत्वादृद्धिः ढ्लोढः पढोः कः॥ २०॥ भ०

कुम्भकर्ण इत्यादि। ततस्तद्वचनानन्तरं कुम्भकर्णोऽगर्जीत् गर्जितवान् अन्यांश्च भटान् पृष्ठतो गच्छतो न्यवीवृतत् निवर्त्तितवान् वृतेश्चङ्परे णावुपधाया उदित्यपवाद ऋकारादेशः महास्त्राणि उपायंस्त स्वीकृतवान् औपचारिकमत्र स्वीकरणं तेन तङ् यदि वा उपाङ्पूर्व्वाद्यमेः समुदाङ्भ्यो यमोऽग्रन्थ इति तङ् पुरश्च लङ्कातः द्रुतं निरगात् निर्गतः इणोगादेशः गातीति सिचो लुक्॥ २१॥ ज०म०

कुम्भकर्ण इत्यादि। ततो रावणवाक्यानन्तरं कुम्भकर्णो गर्जितवान् गर्ज्जैर्जशब्दे अन्यान् भटान् योद्धुमुद्यतान् निवर्त्तयामास वृतेऋदित्वादङ् महास्त्राणि उपायंस्त स्वीचकार यमौ विरतौ उपयमो विवाहे इति सं विवाहः स्वीकार इति व्याख्यातं यमः सूचने वाऽवद्वाहे इति पक्षे सिः कित्त्वाभावात् मलोपाभावः किं वा आङ्पूर्वस्य यमोऽजिघ्रन्नित्यादिना सं पुरो लङ्कायाः सकाशात् शीघ्रं निर्गतः इणोगा भूस्थापिवेति सेर्लुक्॥ २१॥ फ०

मूर्द्ध्न्यादि। निर्गच्छन् मूर्द्ध्ना दिवमलेखीदिव लिखितवानिव उरुणा महता वपुषा खं व्यापत् व्याप्तवान् ऌदित्वादङ् क्ष्मां पृथ्वीं पादाभ्यामभैत्सीदिव विदारितवानिव द्विषः शत्रून् दृष्ट्याधाक्षीदिव भस्मसात् कृतवानिव दहभस्मीकरणे॥ २२॥ ज० म०

मूर्द्ध्न्यादि। स गच्छन् मूर्द्ध्ना दिवमाकाशं स्पृष्टवानिव लिखश्लेखने उरुणा महता वपुषा शरीरेण खमाकाशं व्याप्तवानिव आप्लृ लोकि व्यापने ऌदित्वात् ङः चरणाभ्यां क्ष्मां भूमिं भिन्नवानिव अधौभिदिर्भिदि ङाभावपक्षे सिः अनिमृत्वादृद्धिः दर्शनमात्रेणैव शत्रून् दग्धवानिव

दग्धशैल इवाभासीत् प्राक्रंस्त क्षयमेघवत् ।
आचकम्पदुदन्वन्तं राक्षसानप्यतित्रसत् ॥ २३ ॥
सपक्षोऽद्रिरिवाचालीच्छ्वसीत् कल्पवायुवत् ।
अभार्षीद्ध्वनिना लोकानभ्राजिष्ट क्षयाग्निवत् ॥ २४ ॥
अनंसीत् भूर्भरेणास्य रंहसा शाखिनोऽलुठन् ।

दहौ दाहे दादेर्घः क्रमान्तस्यादिजशामिति धः क्षपक्षीरिति कः ॥२२॥ भ०

दग्धेत्यादि । महत्त्वात् कृष्णत्वाच्च दग्धशैलवदभासीत् भाति स्म भादीप्तौ यमरमेति सगिटौ क्षयमेघवत्प्राक्रंस्त प्रस्थितः प्रोपाभ्यां समर्थाभ्यामिति तङ् प्रतिष्ठमानश्च उदन्वन्तमचकम्पत् कम्पितवान् कपिचनने इदितोनुमन्तस्य चङि रूपं राक्षसानपि अतित्रसत् त्रासितवान् त्रसेर्ण्यन्तस्य चङि रूपम् ॥ २३ ॥ ज० म०

दग्धेत्यादि । अतिकृष्णत्वात् महत्त्वाच्च दग्धपर्व्वत इव स भाति स्म भादीप्तौ यमरमेति इमुसनौ प्रलयसम्बन्धिमेघ इव प्रक्रमते स्म प्रोपादारम्भे इति सं गच्छन् समुद्रमपि कम्पितवान् कपिङ्पिचाले अग्रन्तादङ् न केवलं कपीन् राक्षसानपि त्रासयामास त्रसेअग्रन्तादङ् ॥ २३ ॥ भ०

सपक्ष इत्यादि । सपक्ष इवाद्रिः वाह्वोः पक्षानुकारित्वात् अचालीत् चलितः लान्तत्वात्सिचि वृद्धिः क्रोधात्कल्पान्तवायुवच्छ्वसीत् निश्वसितवान् ह्मन्तेति वृद्धिप्रतिषेधः ध्वनिना लोकानभार्षीत् पूरितवान् भृञ् भरणे ईडन्तस्य सिचि वृद्धिः अभ्राजिष्ट भ्राजते स्म क्षयाग्निवत् पिङ्गलकेशत्वात् लोकविनाशहेतुत्वाच्च ॥ २४ ॥ ज० म०

सपक्ष इत्यादि । स पक्षयुक्तः पर्व्वत इव चलितः वाह्वोः पक्षतुल्यत्वात् चलेर्ब्रजवदेत्यादिना ञिः प्रलयवायुरिव निःश्वासं चकार हसादेः सेत इत्यादौ श्वसवर्ज्जनात् न ञिः ध्वनिना लोकत्रयं पूरितवान् भृलिटुडुञ् भृतिपुष्ट्योः नेमेकाजिति अनिम् प्रलयाग्निरिव भ्राजते स्म लोकविनाशकत्वात् पिङ्गलकेशाच्च भ्राजृङ् टुक्षराङ्गासि ॥ २४ ॥ भ०

अनंसीदित्यादि । अस्य भरेण भूरनंसीत् नता यमरमेति सगिटौ

सिंहाः प्राद्रवन् भीताः प्राभ्यन् कुलपर्वताः ॥ २५ ॥
उत्पाताः प्रावृतंस्तस्य द्यौरशीकिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकूषत द्विजाः ॥ २६ ॥
अस्यन्दिष्टाक्षि वामञ्च घोराश्चाराटिषुः शिवाः ।
न्यपप्तन् सबले गृध्रा दीप्तयापाति चोल्कया ॥ २७ ॥

रंहसा वेगेन शाखिनो वृक्षा अलुठन् पतिताः रुठलुठप्रतिघाते द्युतादित्वादङ् द्युतादीनामनुदात्तेत्त्वात्तङ् द्युभ्योलुङीति परस्मैपदविकल्पः सिंहाः भीताः सन्तः प्राद्रुवन् पलायिताः णिश्रीत्यादिना चङ् कुलपर्व्वताः प्राभुभन् सञ्चलिताः द्युतादित्वादङ् पूर्ब्बवन्नात्मनेपदं ॥ २५ ॥ ज० म०

अनंसीदित्यादि । अस्य भरेण भूर्नमति स्म यमरमेति इमुसनौ अस्य रंहसा वेगेन शाखिनो वृक्षाः पतिताः लृलुठविलोटविलोडयोः लृदित्त्वात् ङः ठान्तपाठे द्युतादित्वात् ङः तेनैव पं सिंहाः भीताः पलायिताः द्रुगतौ णिश्रिद्रुस्नुकम इति अङ् कुलपर्व्वताः क्षोभं प्रापुः क्षुभङ् सञ्चले द्युतादित्वात् ङः ॥ २५ ॥ म०

उत्पाता इत्यादि । तस्य गच्छत उत्पाताः प्रावृतन् प्रवृत्ताः लुङ् - र्त्तने द्युतादिः द्यौः शोणितमशीकत् सिञ्चति स्म शीकसेचने अनुदात्तेत् वायवो भीमाः प्रचण्डा अवासिषुर्वान्ति स्म यमरमेति सगिटौ क्रूराश्चाशुभसूचका द्विजाः पक्षिणोऽकूषत शब्दिताः कुङशब्द इत्यनिट् कुटादित्वात्सिचः किम्भे न गुणः ॥ २६ ॥ ज०म०

उत्पाता इत्यादि । गच्छतस्तस्य उत्पाता विनाशसूचकाः प्रवृत्ताः द्युतादित्वात् ङः द्यौराकाशं शोणितं क्षरति स्म शीकङ् सेके भीमाः प्रचण्डा वायवोवान्ति स्म वालगमनहिंसयोः यमरमेति इमुकनौ अनुस्निहेः क्रूरा भयदा द्विजाः पक्षिणश्च शब्दं चक्रुः कूषिङ् आर्त्तस्वरे कुटां गाङ्कुटादिभ्योञ्णिन्ङितीति नियमाद्गुणाभावः नेमेकाजिति अनिम् ॥२६॥म०

अस्यन्दिष्टेत्यादि । वामञ्चाक्षाक्षि अस्पन्दिष्ट स्पन्दते स्म घोराः

आश्लिष्ट तानसंमान्य दर्पात् प्रधनक्षितिम् ।
ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाहवे ॥ २८ ॥
प्राशीन्न चात्रपत् क्रूरः क्षुधास्याद्धधदश्नतः ।
अधाद्वसामधासीच्च रुधिरं वनवासिनाम् ॥ २९ ॥

अनिष्टार्थशंसिन्यः शिवाः अराटिषुरटन्ति स्म अतोहलादेरिति वृद्धिविकल्पः ल्टभ्रो सुप्ले न्यपप्तं उपनिपतितवान् लृदित्वादङ् पतः पुमिति पुमागमश्च दीप्तया उल्कया अपाति पतितं भावे चिण्वादेशः ॥ २७ ॥ ज०म०

असन्दिष्टेत्यादि । अस्य वाममक्षि स्पन्दते स्म स्पदिङ् ईषत्कम्पे क्रूरा भीमाः शृगालाः शब्दं चक्रुः रटवाचि हलादेः सेम इति सिः सुप्तं ल्टभ्राः पतिताः पत्लृजगत्यां लृदित्त्वात् ङः वच्यस्यतिपतामिति पप्तादेशः दीप्तया उल्कया च पतितं रतनोर्यं गिणाविति भावे इण् इनस्तनलोपः ॥ २७ ॥ भ०

आश्लिष्टेत्यादि । तान् उत्पातान् कुम्भकर्णोऽसंमान्य दर्पादवज्ञाय प्रधनक्षितिं युद्धभूमिमाश्लिष्ट गतवान् तत उत्तरकालं अनर्दीत् गर्जितवान् क यास्यतेदानीमिति अनन्दीच्च जयश्रियं श्लाघितवानित्यर्थः आहवे संग्रामे शत्रूनाह्वास्त आहूतवान् आगच्छत युध्यध्वमिति स्पर्द्धायामाङिति तङ् आत्मनेपदेष्वन्यतरस्यामित्यङभावपक्षे रूपम् ॥ २८॥ज०म०

आश्लिष्टेत्यादि । स कुम्भकर्णस्तान् उत्पातान् दर्पादसंमान्य प्रधनचितिं रणस्थलीं आश्लिष्ट गतः अश्लिङ्गतौ मानक्रियार्थे इत्यस्मात् क्सच् ततोऽनर्दीत् सिंहनादं चकार नर्द शब्दे अनन्दीत् आनन्दयुक्तो बभूव आहवे युद्धे शत्रूनाहूतवान् स्पर्द्धायामाङ् इति मं वक्तव्यकस्येति प्राप्तिकोऽङस्तदभावे सिः ॥ २८ ॥ भ०

प्राशीदित्यादि । प्राशीत् भक्षितवान् वनवासिन इत्यर्थात् न चासौ क्रूरः दुष्टचेता अत्रपत् लज्जवान् पुषादित्वादङ् अश्नतोऽप्यस्य खादतः क्षुत् बुभुक्षा अवृधत् बर्द्धते स्म वृधुवृद्धौ द्युतादिः वनवासिनां वानराणां वसामधात् पीतवान् विभाषाघ्राधेट्छ्विति सिचोलुक्पक्षे रूपं रुधिरञ्चाधासीत् विभाषाधेट्श्व्योरिति चङभावपक्षे रूपम् ॥ २९ ॥ ज० म०

मांसेनास्याश्वतां कुक्षी जठरं चाप्यशिश्वयत् ।
बहूनामग्लुचत् प्राणानम्लोचीच्च रणे यशः ॥ ३० ॥
सामर्थ्यञ्चापि सोऽस्तम्भीद्विक्रमञ्चास्य नास्तभन् ।
शाखिनः केचिदध्यष्टुर्न्यमाङ्क्षुरपरेऽम्बुधौ ॥ ३१ ॥

प्राशीदित्यादि । प्राशीत् भक्षितवान् कपीन्निश्चयार्थात् अशभोजने असौ क्रूरो दुष्टाशयो न तृप्तः जिह्वस्पृश्यकारात् प्रीणने पुषादित्वात् ङः अश्नतः खादतोऽप्यस्य क्षुत् बुभुक्षा वर्द्धते स्म वृधङ् वृद्धौ द्युता-दित्वात् ङः असौ वनवासिनां वानराणां वसां पपौ रुधिरञ्च अधासीत् पपौ धेट्पाने धेशाच्छासाम इति पक्षे सिलुक् तदभावपक्षे यमरमेति इमसन्तौ भसस्वादिति सिचोलोपः ॥ २९ ॥ भ०

मांसेनेत्यादि । वनवासिनां मांसेनास्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ अश्वतां स्फीतौ जृस्तम्भित्यादिना अङ् श्वयते र इत्यत्व जठरञ्चोदरमशि-श्वियत् स्फूनं विभाषाधेट्श्व्योरिति चङ् इयाजादेशः बहूनां वनवासिनां प्राणानग्लुचत् हृतवान् ग्रुचुग्लुचुकुचुग्लुचुस्तेयकरणे जृस्तम्भित्यादिना अङविकल्पनादङभावपक्षे रूपं यशश्च बहूनां रणे अग्लोचीत् अपनीत-वान् चक्षुर्वञ्चित्यादौ ग्लुचिर्गतप्रर्थः अङभावपक्षे रूपम् ॥३०॥ज०म०

मांसेनेत्यादि । अस्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ वानरादीनां मांसेन अश्वतां स्फीतौ टुश्वीगतिवृद्ध्योः शासलिदुप्रदित्यादिना पक्षे ङः वच्यस्यश्वपतामिति श्वादेशः अस्य जठरमुदरञ्च अशिश्वियत् वद्धे णि-श्रीत्यादिना पक्षेऽङ् असौ बहूनां प्राणान् अग्लुचत् जहार रणे बहूनां यशोऽग्लोचीत् ग्लुचुस्र चौर्य्ये शासलिदुप्रदित्यादिना पाक्षिको-ङस्तदभावपक्षे सिः अम्लोचीदिति पाठे म्लुचुर्गत्यां यशः प्रापेत्यर्थः ॥ ३० ॥ भ०

सामर्थ्यमित्यादि । स कुम्भकर्णः केषाञ्चिद्बलवतामपि वनवासिनां सामर्थ्यमस्तम्भीत् नियमितवान् अङभावपक्षे रूपं विक्रमञ्च केचिदस्य नास्तभन् न नियमितवन्तः अङ्पक्षे रूपं क्ङिन्त्यनुनासिकलोपः

सत्त्वं समदुधुद्च्च वानराणामयुद्ध च ।
ततः शैलानुदक्षैसुरुदगूरिषत द्रुमान् ॥ २४ ॥
अनर्दिषुः कपिव्याघ्राः सम्यक् चायुत्सताहवे ।
तानमर्दीदखादीच्च निरास्थच्च तलाहतान् ॥ २५ ॥

क्रमं प्रत्यगास्थित प्रतिपन्नवान् समवप्रविभ्यस्थ इति तङ् ह्रस्वादङ्गा-
दिति सिचोलोपः ॥ २२ ॥ ज०म०

उदतारिषुरित्यादि । अपरे वानराः सेतुना समुद्रमुत्तीर्णाः तृतरे-
ऽभिभवे तृत्यां अजन्तत्वाद्‌वृजवदेति चिः वानरेष्वेवंभूतेषु सतसु तत्राङ्गदो
लज्जते स्म लस्जि ओङ् लजङ् व्रीडे जर्ज्जितं पराक्रमञ्च प्रत्यवास्थित
प्रतिपन्नवान् प्रतिज्ञानिर्णयेत्यादिना मं स्थाडोर्ङिः भसस्वादिति सि-
लोपः ॥ २२ ॥ भ०

सत्वमित्यादि । वानराणां सत्वं समदुधुक्षत् सन्दीपितवान् धुक्ष
सन्दीपनार्थात् ण्यन्तात् चङ् स्वयमयुद्ध च युध्यते स्म झलोझलीति सिचो
लोपः ततः सत्वधुक्षणानन्तरं वानराः शैलानुदक्षैप्सुः उत्क्षिप्तवन्तः
ऊलन्तलत्वा ह्यद्भिः द्रुमांश्चोदगूरिषत उद्यापितवन्तः गूरी उद्यमे ॥
२४ ॥ ज० म०

सत्वमित्यादि । अङ्गदो वानराणां सत्वं बलं संधुक्षयामास धुक्षङ्
सन्दीपे जयन्ताद्‌ङ् स्वयञ्च युध्यते स्म युध्यौङ् युद्धे भसस्वादिति सि-
लोपः ततः संधुक्षणानन्तरं शैलान् उत्क्षिप्तवन्तः कपिव्याघ्रा इतग्रिम-
सलोकेगान्वयः क्षिपश्ञो क्षियौ तुदि अनिमत्वात् वृजवदेति चिः द्रु-
मांश्च उद्गूर्यवन्तः गूरणक उद्यमे चूर्य्योङिनेति ओरभावपक्षे रूपं
गूरीयङ्वधे गतग्रामितग्रस्य रूपं वा गुरीङशि उद्यमे इतग्रस्य तु नायं
प्रयोगो ह्रस्वोङ्त्वात् ॥ २४ ॥ भ०

अनर्दिषुरित्यादि । उत्क्षिप्तशैलद्रुमाः कपिव्याघ्रा अनर्दिषुः नर्दि-
तवन्तः दृष्टोऽस्माभिः क्व यास्यसीति सम्यक् निर्भयमाहवे अयुत्सत यु-
ध्यन्ते स्म हलन्ताच्चेति सिचः कित्वे गुणाभावः तान् प्लवङ्गमान्
युध्यमानान् कुम्भकर्णोऽमर्दीत् मर्दितवान् मर्देर्लघूपधगुणः अखादीच्च

प्राचुचूर्णच्च पादाभ्याममबिभीषत च द्रुतम्।
अनर्दीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान्॥ ३६॥
अतौत्सीत् गदया गाढमपिषत्तोपगूहनैः।
जानुभ्यामदमीचान्यान् हस्तावर्त्तमवीवृतत्॥ ३७॥

भक्षितवान्, हस्ततलेनाहतान्, निरास्थत्, इतस्ततः क्षिप्तवान्, अस्यती-त्यादिना अङ्, अस्यते स्थुक्॥ ३५॥ ज॰म॰

अनर्दिषुरित्यादि। कपिश्रेष्ठा नर्दितवन्तः मारय मारयेति शब्दं चक्रुः नर्दशब्दे सम्यक् निर्भयं संग्रामे युध्यन्ति स्म इगुडन्तेडीति किच्वात् गुणाभावः तान् वानरान् मर्दितवान् कुम्भकर्ण इत्यग्रिमश्लोकेनान्वयः श्वदगतुदि अखादीत् खाद भक्षणे तलेन हस्ताघातेन आहतान् निरा-स्यञ्च इतस्ततश्चिक्षेप च अस्यु क्षेपे वच्यखश्चिपतामिति अस्यादेशः॥ २५॥ म॰

प्राचुचूर्णदित्यादि। पादाभ्यां प्राचुचूर्णत् पिष्टवान् चूर्ण प्रेरणे इति चुरादिः एवं चूर्णयन् द्रुतमबिभीषत भीषयते स्म भियोहेतुभये-षुक् भीस्म्योर्हेतुभय इति तङ् शूलेन प्रहरणेन अतर्दीच्च विद्धवान् तर्दि हिंसायां हलन्तलक्षणत्वान्न वृद्धिः॥ ३६॥ ज॰ म॰

प्राचुचूर्णदित्यादि। पादाभ्यां चूर्णयामास चूर्णक्षेपे चुरादि-ण्यन्तादङ् द्रुतं भीषयते स्म भीभीषिवेति णौ पाचिको भीषादेशो भञ्ज कर्त्तृ कुम्भकर्णात एव भयस्योत्पत्तेः शूलेन च अतर्दीत् तर्द हिंसे अतृह्णी-दिति पाठे तृहधतृन्यू श हिंसे इत्यस्य रूपम्॥ ३६॥ म॰

अतौत्सीदित्यादि। कांश्चिद्गदया गाढमतौत्सीत् व्यथितवान् उप-गूहनैरपिषत् चूर्णितवान् ऌदित्वादङ् अन्यांश्च जानुभ्यां अदमीत् शा-सितवान्, अवष्टभ्य नियमितवानित्यर्थः हलन्तत्वान्न वृद्धिः हस्तवर्त्तमवीवृतत् हस्ताभ्यां वर्त्तितवान् पिष्टवानित्यर्थः। हतेर्ण्यन्तात् हस्ते वर्त्तिग्रहो-रिति णमुल् कषादिषु यथाविध्यनुप्रयोगः॥ ३७॥ ज॰ म॰

अतौत्सीदित्यादि। गदया कांश्चित् प्लवङ्गमान् गाढमत्यर्थमतौत्सीत्

अदालिषुः शिला देहे चूर्णीभूवन्महाद्रुमाः ।
क्षिप्तास्तस्य न चाचेतीत्तानसौ नापि चाक्षुभत् ॥ २८ ॥
अद्राष्टां तं रघुव्याघ्रौ आख्यच्चैनं विभीषणः ।
एष व्यजेष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः ॥ २९ ॥

तुदादिर्ण्योऽयमनिट्त्वाद्द्विः अन्यान् उपगूहनैरालिङ्गनैः पिष्टवान् पौपि-
प्लृ चूर्णने लृदित्त्वात् ङः अन्यान् जानुभ्यां दमितवान् दम्भुङ् चू-
र्णने नान्तत्वात् व्रिः अन्यान् हस्तवर्त्तमवीवृतत् हस्ताभ्यां पीड़यित्वा
चूर्णितवानित्यर्थः । वृतेर्ण्यन्तादङ् उर्दृङोर्धुरिति पक्षे गुणाभावः ह-
स्तवर्त्तमिति हस्ताद्यर्थे ग्रहवर्त्तिवृतां गतार्थत्वे णमुल् तदनुप्रयोगश्चेति
परः स्वमते चणम् वेत्यस्य योगविभागात् ॥ २७ ॥ भ०

अदालिषुरित्यादि । वानरैस्तस्य देहे क्षिप्ताः शिला अदालिषुर्वि-
शीर्णाः दल विशरणे भौवादिकः लान्तत्त्वादवृद्धिः महाद्रुमाश्चूर्णीभूवन्
चूर्णीभूताः न च तान् क्षिप्तानसौ कुम्भकर्णो नाचेतीत् न चेतितवान्
चिती संज्ञाने नापि चाक्षुभत् क्षुभितः क्षुभ सञ्चलने दिवादिः ॥ २८ ॥
ज० म०

अदालिषुरित्यादि । कपिभिः क्षिप्ताः शिलास्तस्य कुम्भकर्णस्य देहे
अदालिषुर्विदीर्णाः दलभिभेदे वृजवदेति व्रिः महाद्रुमाश्चूर्णीभूताः अभो-
वन् टीर्घचि तान् दृष्ट्वान् असौ कुम्भकर्णो न अचेतीत् चितीज्ञाने नापि
क्षुभितः क्षुभलृङ् सञ्चले द्युतादिः ॥ २८ ॥ भ०

अद्राष्टामित्यादि । तं तादृशौ रघुव्याघ्रौ रामलक्ष्मणावद्राष्टां दृष्ट-
वन्तौ विभीषणश्चैनमाख्यत् कथितवान् कुम्भकर्णोऽयमिति अस्यतीत्या-
दिनाऽङ् प्रभावञ्चास्य कथयन्नाह देवेन्द्रमेष व्यजेष्ट विजितवान् विप-
राभ्याञ्जेरिति तङ् विवस्वतः सूर्य्यात् नाशङ्किष्ट न शङ्कते स्म ॥ २९ ॥
ज० म०

अद्राष्टामित्यादि । रघुव्याघ्रौ तं कुम्भकर्णं दृष्टवन्तौ दृशिर् प्रेक्षणे
वृद्धौऽकिदिति वृद्धः झलस्वाज्झलीति सेर्लोपः शङ्क्जिति षङ् ष्टुभि-

यच्चेन्द्रशक्तिमच्छासीन्नाप्रोथीदस्य कश्चन ।
कुम्भकर्णान्न भैष्टं मा युवामस्मात्प्लवात्मजौ ॥ ४० ॥
घ्नन्तं मोपेक्षिषाथाञ्च मा न कार्ष्टमिहादरम् ।
अमुं मा न वधिष्टेति रामोऽवादीत्ततः कपीन् ॥४१॥

रिति टः विभीषण एनमाख्यातवान् ख्याख्यातौ कथने चक्षञ्ख्येति ङः उश्वेयालोपः केन प्रकारेणाख्यदित्याह एष देवेन्द्रं जितवान् विपराजीति मं विवस्वतः सूर्यादपि नायं शङ्कितवान् शकिङ्त्रासशङ्कयोः ॥ ३९ ॥ भ०

यत्वेत्यादि । यचेन्द्रस्य कुबेरस्य शक्तिं प्रहरणमच्छासीत् खण्डितवान् छो च्छेदने अस्य तु कश्चन कश्चित् नाप्रोथीत् न प्रभवति स्म शक्तेः प्रहरणायेत्यर्थात् प्रोथपर्याप्तौ पर्याप्तियोगे चतुर्थी न भविष्यति पर्याप्तेरविवक्षितत्वात् अतोऽस्मादेवंविधात् कुम्भकर्णात् युवां प्लवात्मजौ मा न भैष्टं किन्तु बिभीतं स्म माङि लुङ् मध्यमपुरुषद्विवचने रूपं माशब्दः प्रतिषेधे ॥ ४०॥ ज० म०

यच्चेन्द्रेत्यादि । यच्चेन्द्रस्य कुबेरस्य शक्तिमस्त्रविशेषं सामर्थ्यं वा अच्छासीत् चिच्छेद छोयन्तौ धेशाच्छासाञ्च इत्यस्याप्रवृत्तिपक्षे यमरमेति इसकौ आतस्याज्ञसोमदंसीति सेडौच अस्य कुम्भकर्णस्य कश्चित् नाप्रोथीत् न शक्तः प्रोथृञ् पर्य्यापणे पर्य्यापणं सामर्थ्यं शक्तार्थेत्यादिना चतुर्थीप्राप्तौ सम्बन्धविवक्षया षष्ठी शक्तार्थैः षष्ठ्यपीष्यत इत्यन्ये । अस्य शक्तिं कश्चन नाप्रोथीन्न हिंसितवान् अनेकार्थत्वात् हिंसार्थत्वमपीति भट्टभास्करः। हे प्लवात्मजौ ! अस्मात् कुम्भकर्णात् युवां मा भैष्टमिति न ञिभीभिसीत्यां स्यांसिः नेसेकाजिति इसनिषेधः वृजवदेति विः ॥ ४०॥ म०

घ्नन्तमित्यादि । तस्मात् घ्नन्तमेनं युवां मोपेक्षिषाथां सोपेक्षकौ भूतमित्यर्थः इह च कुम्भकर्णे आदरं मा न कार्ष्टं अपि तु कुरुतं ततो विभीषणवचनानन्तरं रामः कपीनवादीत् उक्तवान् अमुं कुम्भकर्णं मा न वधिष्टेति किन्तु हतेति हनोवधलुङि ॥ ४१ ॥ ज० म०

ते व्यरासिषुराह्वन्त राक्षसं चाप्यपिप्लवन् ।
अवभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषुः ॥ ४२ ॥
ते तं व्याशिषताच्चोत्सुः पादैर्दन्तैस्तथाच्छिदन् ।
आर्ज्जिजत् शरभो वृक्षं नीलस्त्वादित पर्व्वतम् ॥ ४३ ॥

म्नन्तमित्यादि । म्नन्तं प्रहरन्तमेतं युयं मा उपेक्षिषाथां ईक्षङ् दर्शने उपपूर्व्वोऽयमनादरे वर्त्तते इह कुम्भकर्णे आदरं मा कार्ष्ट किन्त्ववश्यं कुरुत क्षणद्रां सिः मजनदेति त्रिः इत्येवं विभीषण आख्यात इत्यर्थः ततोऽनन्तरं रामो वानरान् अगादीत् उक्तवान् किन्तदित्याह अमुं कुम्भकर्णं यूयं मा न बधिष्ट किन्त्ववश्यं हतेति हनबधष्टीति बधादेशः ॥ ४१ ॥ भ०

त इत्यादि । ते वानराः हर्षाद्व्यरासिषुः किलिकिलाशब्दं कृतवन्तः अतो हलादेरिति वृद्धिः राक्षसञ्च कुम्भकर्णमाह्वन्त स्पर्द्धमाना आहूतवन्तः आत्मनेपदेष्वन्यतरस्यामिति च्लेङः पक्षे अङ् अपिप्लवन् प्लावितवन्तः अपि शब्दार्थे तथा कृतवन्तः यथासौ प्लुतिं कर्त्तुमारब्धः प्लवतेर्ण्यन्तस्य चङि सन्वल्लघुनीति स्रवति शृणोतीत्यादिना अभ्यासस्येत्वं स्वका आत्मीया शक्तीरवभासन् प्रकाशयन्ति स्म भासेर्ण्यन्तस्य चङि भ्राजभासेत्यादिना उपधाह्रस्वविकल्पः द्रुमाश्च शैलाश्च द्रुमशैलं जातिरप्राणिनामित्येकवद्भावः व्यकारिषुः तदुपरि क्षिप्तवन्तः कॄ विक्षेपे ॥ ४२ ॥ ज० म०

ते व्यरासिषुरित्यादि । ते वानरा व्यरासिषुः किलकिलाशब्दमकुर्व्वन् रसशब्दे हसादेः सेम इति त्रिः राक्षसं कुम्भकर्णं स्पर्द्धमाना आह्वन्त स्पर्द्धायामाङ इति मं वक्तारस्येत्यादिना ङः तमेवापिप्लवन् प्लुङ्च सर्पणे ञ्यन्तादङि खेः सन्वत् ञ्रुस्रुस्तु द्रुप्रुप्लुच्युङां वेति पक्षे खेरुकारस्य इकारः स्वका आत्मीयाः शक्तीः सामर्थ्यानि प्रकाशितवन्तः भासृङ् दीप्तौ ञ्यन्तादङ् भ्राजभासभ्रासेत्यादिना पक्षे उङोह्रस्वः तदभावपक्षे खेः सन्वद्‌द्वावित्यस्याविषयः परे लघ्वक्षराभावात् द्रुमशैलं तदुपरि क्षिप्तवन्तः कॄ विक्षेपे अजवदेति त्रिः द्रुमाश्च शैलाश्चेति समाहारः ॥ ४२ ॥ भ०

ते तमित्यादि । ते वानरास्तं राक्षसं व्याशिषत व्याप्तवन्तः अश्रू-

ऋषभोऽद्रीनुदच्चैप्सीत्ते तेऽरिमतर्दिषुः ।
अस्फूर्जीद्गिरिशृङ्गञ्च व्यस्राक्षीद्गन्धमादनः ॥ ४४ ॥
अकूर्दिष्ट व्यकारीच्च गवाक्षो भूधरान् बहून् ।
स तानाजीगणद्वीरः कुम्भकर्णोऽव्यथिष्ट न ॥ ४५ ॥

व्याघ्रो पादैश्चावीवृधुः पिष्टवन्तः क्षुदिरसम्पेषणे दन्तैरच्छिदन् छिन्दन्ति स्म इरितो वेत्यङ् शरभो नाम कपिर्वृक्षमार्जिजत् ग्रहीतुं यतते स्म अर्जप्रतियत्न इति स्वार्थिकस्य ताच्छङि द्विर्वचने चीति स्थानिवद्भावाद-जादेर्द्वितीयस्येति द्विर्वचनं रेफस्य नन्द्रा इति प्रतिषेधः। नोवः पर्वत-मादित गृहीतवान् स्याध्वोरिच्च ॥ ४३ ॥ ज० म०

ते तमित्यादि । ते वानरास्तं कुम्भकर्णं व्याघ्नन्तः अम्मूलङ् व्यर्पितसंहत्योः वेमूदिति मत्वे इम् पादैः चुक्षुवन्तः अचीक्षुदिर्क्षुदि इरित्त्वात् पाक्षिकङाभावे सिः अनिमृत्वाद्वृद्धिः तथा दन्तैरच्छिदन् छिदिरधीत्रच्छेदे इरित्वात् पक्षे ङः शरभनामा कपिर्वृक्षमर्जिजत् ग्रहीतुं यतते स्म अर्ज क्संस्कारे युद्धे इचसंस्कारो ग्रहणप्रेरणानुकूलव्यापारः चुरादिअन्तादङ् नोवः पर्वतमादित जग्राह आङ्पूर्वादाङ् ग्रहणे स्यादोङिः ॥ ४३ ॥ म०

ऋषभ इत्यादि । ऋषभो नाम कपिरद्रीनुदचैप्सीत् उत्क्षिप्तवान् ते शरभादयस्तैर्वृक्षादिभिररिमतर्दिषुः हतवन्तः तर्दहिंसायां गन्धमादनो नाम कपिरस्फूर्जीत् वज्रमिव गिरिशृङ्गञ्च व्यस्राक्षीत् विसृष्टवान् सृज-स्तौदादिक उदात्तेत् ॥ ४४ ॥ ज० म०

ऋषभ इत्यादि । ऋषभो नाम कपिः पर्वतानुत्क्षिप्तवान् क्षिप् प्रेरणे क्षिप्यौ तुदि अनिमृत्वाद्वृद्धिः ते शरभादयस्तैर्वृक्षादिभिररिं कुम्भकर्णं अतर्दिषुः तर्दहिंसे गन्धमादनः कपिरस्फूर्जीत् वज्रवत् शब्दञ्चकार टुओस्फूर्जावज्रनिर्घोषे गिरिशृङ्गञ्च क्षिप्तवान् सृजोशच चकाराद्विसर्गे वद्रोऽकिदिति वृद्धः अनिमृत्वाद्वृद्धिः षड्ढोः कः ॥ ४४ ॥ म०

अकूर्दिष्टेत्यादि । गवाक्षो नाम कपिः अकूर्दिष्ट क्रीडापूर्वकं चे-ष्टते स्म महीधरांश्च व्यकारीत् विक्षिप्तवान् वीरः कुम्भकर्णस्तान् ग्र-

अमन्थीच्च परानीकमप्लोष्ट च निरङ्कुशः ।
निहन्तुं चात्वरिष्टारीनजक्षीच्चाङ्कमागतान् ॥ ४५ ॥
व्यक्रुक्षद्वानरानीकं संपलायिष्ट चायति ।
हस्ताभ्यां नश्यदक्राक्षीद्भीमे चोपाधितानने ॥ ४७ ॥

भादीन् नाजीगणत् न गणयामास अजगणदिति पाठान्तरं तत्र चका-
रेणात्वमप्यनुवर्त्तते न चाव्यथिष्ट व्यथितोऽभूत् ॥ ४५ ॥ ज० म०

अकूर्दिष्टेत्यादि । गवाक्षो नाम कपिर कूर्दिष्ट क्रीड़ापूर्वकं चेष्टते स्म कुर्द कूर्द्दक्रीड़ायां बहून् पर्व्वतांश्च विक्षिपतान् क्षयं क्षेपे स कुम्भकर्ण-स्तान् शरभादीन् न गणयामास गणत्कसंख्याने चुरादिर्णिजन्तादङ् वेङ्गणकय इति पाक्षिकः खेरीङ् नच व्यथितो बभूव यतो वीरः व्यथषभङ् दुःखे चाले ॥ ४५ ॥ म०

अमन्थीदित्यादि । परानीकं शत्रुसैन्यममन्थीत् क्षोभितवान् मन्थ विलोडने निरङ्कुशस्त्वाप्रतिहतशक्तिः अप्लोष्ट भ्रान्तवान् प्लुङ् गतौ अरींश्च वानरान्निहन्तुमत्वरिष्ट त्वरते स्म ञित्वरा संभ्रमे अङ्कञ्च समी-पमागतानजक्षीत् भक्षितवान् जक्षभक्षहसनयोरिति भक्षणे जक्षिः ॥ ४६ ॥ ज०म०

अमन्थीदित्यादि । कुम्भकर्णः परानीकं शत्रुसैन्यञ्च क्षोभित-वान् मन्थगगाहे निरङ्कुशोऽप्रतिहतः सन् गतिं चकार प्लुङ् च सर्पणे नेमेकाजिति अनिम् अरीन् निहन्तुं त्वराञ्चक्रे अङ्कमागतान् क्रोडप्रवि-ष्टान् भक्षितवान् जक्षल्लुभक्षहासयोः ॥ ४६ ॥ म०

व्यक्रुक्षदित्यादि । तस्मिन्नायत्यागच्छति सति आङ्पूर्व्वस्येणः शतरि रूपं वानरानीकं व्यक्रुक्षत् विक्रोशति स्म शलइगुपधा-दनिटः क्सः सम्पलायिष्ट पलायते स्म तच्च नश्यत्पलायमानं हस्ता-भ्यामक्राक्षीत् आकृष्टवान् कुम्भकर्णः कृषविलेखने अनुदात्तस्य चेत्य-कम् हलन्तलक्षणा वृद्धिः आकृष्टं चातिभीमेऽतिभयङ्करे विकृते आनने वक्त्रे उपाधित न्यस्तवान् धाञ् स्थाध्वोरिच्च ॥ ४७ ॥ ज० म०

रक्तेनाचिक्लिदद्भूमिं सैन्यैश्चातस्तरद्धतैः ।
नातर्पीत्सोऽश्नुवन् क्रूरो नाश्रमद्घ्नन्प्लवङ्गमान् ॥ ४८ ॥
न योद्धुमशकन् केचिन्नाढौकिषत केचन ।
प्राणशन्नासिकाभ्याञ्च वक्त्रेण च वनौकसः ॥ ४९ ॥

व्यक्रुक्षदित्यादि । अस्मिन्नायति समागच्छति सति वानरसैन्यं विक्रोशति स्म क्रुशोऽह्वाने रोदने च णौ ह्रणोऽनिमिजुङ् सक् सम्पराययते स्म अय अङ्गतौ परापूर्वः सनोयादित्वाल्लकारः कुम्भकर्णो नश्यत् पलायमानं वानरसैन्यं हस्ताभ्यामाकृष्टवान् शलइगुपधादनिटः क्सः इत्यादिना पाच्छिक्सः वर्द्धौ किदिति पाक्षिकश्चकारस्य रः अनिमुत्वाद्वृद्धिः षढोः कः सि आनने उपाधित व्यस्तवान् डुधाञ् धारणे पुष्टौ दाने स्थाघ्वोरिच्चेति सिः गुणाभावश्च दाण्टाकस्य ग्रहणात् ॥ ४७ ॥ म०

रक्तेनेत्यादि । वानरानीकस्य रक्तेन भूमिमचिक्लिदत् क्लेदितवान् क्लिद आर्द्रीभावे तस्य ण्यन्तस्य चङि रूपं सैन्यैश्च हतैर्भूमिमतस्तरत् छादितवान् स्तृणातेर्णौ चङि रूपं अत्स्मृद्दृत्वरेत्यादिना अत्वं तांश्च भक्षयन्नपि क्रूरः नातर्पीत् न तृप्तः तृपप्रीणने पुषादिः स्पृशमृशकृषतृपदृपां सिज्वेति पक्षे सिच् प्लवङ्गमांश्च घ्नन् हिंसन् नाश्रमत् न श्रान्तवान् श्रमुतपसि खेदे चेति खेदे पुषादित्वादङ् ॥ ४८ ॥ ज० म०

रक्तेनेत्यादि । स कपिसैन्यस्य रक्तेन भूमिमार्द्रतां नीतवान् क्लिदू आर्द्रीभावे अन्तादङ् हतैः सैन्यैर्भूमिमाच्छादितवान् स्तृञ् स्तृञ् आच्छादने वा अन्तादङ् क्रूरोऽसौ तान् भक्षयन्नपि न तृप्तो बभूव ञितृप् तृप्तौ च चकारात् प्रीणने स्पृशमृशकृषेत्यादिना पक्षे सिः वर्द्धोऽकिदित्यस्य पक्षेऽप्रवृत्तिः रधादित्वात् पक्षे इमोऽभावः तेन वृजवदेत्यादिना वृद्धिः प्लवङ्गमान् घ्नन् श्रान्तो न जातः श्रमुश्च इदुत्तपः खेदयोः पुषादित्वात् ङः इरनुबन्धेन कस्यचिन्मते विभाषा दर्शिता ॥ ४८ ॥ म०

न योद्धुमित्यादि । तेषां मध्ये केचिद्वनौकसो वानरा योद्धुं नाशकन् न शक्ता अभवन् ऌदित्वादङ् केचिन्नाढौकिषत न ढौकन्ते स्म वै ढ

उदरे चाजरन्नन्ये तस्य पातालसन्निभे ।
आक्रन्दिषुः सखीनाह्वन् प्रपलायिषताखिदन् ॥ ५० ॥
रक्तमश्च्योतिषुः क्षुण्णाः चताश्च कपयोऽत्वषन् ।
उपास्थायि नृपो भग्नैरसौ सुग्रीवमैजिहत् ॥ ५१ ॥

तेन पदेन क्षिप्तास्ते नासिकाभ्यां नासिकाविवराभ्यां वक्त्रेण च प्राणशन् प्रनष्टाः निःसृता इत्यर्थः नशेः पुषादित्वादङ् उपसर्गादित्यादिना णत्वम् ॥ ४९ ॥ ज० म०

न योद्धुमित्यादि । केचिद्वनौकसो वानरा योद्धुं न शक्ताः शक-धञ्शकिल्तनशक्तौ पुषादिः केचन वानरा न अढौकिषत समीपं न जग्मुः ढौकङ् गत्यां ये च तेन मुखे क्षिप्तास्ते नासाविवराभ्यां वक्त्रेण च प्राण-शन् पलायिताः नश् लुनाशे पुषादिः प्राग्वन्नोण इत्यादिना णत्वं नश-नेशयाङ इत्यस्याप्रवृत्तिपक्षे रूपम् ॥ ४९ ॥ भ०

उदरे चेत्यादि । अन्ये च तस्योदरे पातालसदृशे अजरन् जीर्णाः जृस्तम्भीत्यादिनाऽङ् ऋदृशोऽङि गुणः आक्रन्दिषुः आक्रन्दितवन्तः स-खीन् मित्राणि आह्वन् आहूतवन्तः लिपिसिचित्यादिनाङ् प्रपला-यिषुः प्रपलायन्ते स्म पलायमानाश्चाखिदन् प्रखिन्नाः पुषादित्वादङ् ॥ ५० ॥ ज० म०

उदर इत्यादि । पातालतुल्ये तस्य उदरे केचित् कपयो जीर्णाः जृगिकिज्यानौ शासलिदृदुप्रदितप्रादिना पक्षे ङः दृशोऽङि गुणः अपरे आक्रन्दितवन्तः अन्ये सखीन् मित्राणि आहूतवन्तः वक्तास्येत्या-दिना ङः अन्ये प्रपलायन्ते स्म अन्ये प्रखिन्नाः लृमिदादिङश्च चका-रात् खिदि खेदयुक्ता बभूवुरित्यर्थः ञिमिदागात्रप्रक्षरणे इति पठन्त्यन्ये पुषादिः अखिदन्निति पाठे स एवार्थः ॥ ५० ॥ फ०

रक्तमित्यादि । अन्ये क्षुण्णाः सन्तः रक्तमश्च्योतिषुः च्योतन्ति स्म क्षरितो वेत्यङभावपक्षे रूपं चताश्च खण्डिता अत्वषन् त्वषन्ति स्म ञित्-षपिपासायां पुषादित्वादङ् नृपो रामस्तैर्भग्नैरुपास्थायि उपस्थापितः

योद्धुं सोऽप्यरुषच्छत्रोरैरिरच्च महाद्रुमम् ।
तं प्राप्तं प्रासहिष्टारिः शक्तिं चोग्रामुदग्रहीत् ॥ ५२ ॥
स तामविभ्रमद्भीमां वानरेन्द्रस्य चामुचत् ।
प्रापतन्मारुतिस्तत्र ताञ्चालासीद्वियद्गताम् ॥ ५३ ॥

अन्तर्भावितोऽण्यर्थः कर्मणि चिण् असौ रामः सुग्रीवकर्मजिहत् योद्धु-मीहाङ्कारितवान् ईहतेर्ण्यन्ताच्चङि द्विर्वचनेचेति स्थानिवद्भावात् द्वितीयस्य द्विर्वचनं आद्गुणः योद्धुमिति वक्ष्यमाणेन योज्यम् ॥ ५१ ॥ ज० म०

रक्तमित्यादि । अन्ये कपयः क्षुण्णाः खण्डिताः सन्तो रक्तं क्ष-रन्ति स्म स्रुतिरक्षरे पञ्चे न्द्रिः अताः सन्तोऽतृपन् दृर्यीञितृपतृषि तृट् पिपासा पुषादिः भग्नैः रुग्नैः पलायमानैर्वा न्दपो राम उपास्थायि आराधितः रतनोर्य गिणाविति कर्मणि दृण् यनज्ञ्याविदिति यत् असौ रामः सुग्रीवमीहां कारितवान् योद्धुमिति वक्ष्यमाणेन सम्बन्धः ईहङ-चेष्टे अग्लादङ् ॥ ५१ ॥ भ०

योद्धुमित्यादि । सोऽपि सुग्रीवः अरुषत् क्रुध्यति स्म रुषरोषे पुषादिः शत्रोश्च द्रुममैरिरत् चिप्तवान् ईरचेप इति स्वार्थिकण्यन्तस्य रूपं तन्द्रुमं प्राप्तमरिः कुम्भकर्णः प्रासहिष्ट प्रसहते स्म शक्तिञ्चोग्रां प्राणहरामुदग्रहीत् उद्गृहीतवान् ॥ ५२ ॥ ज० म०

योद्धुमित्यादि । तत्प्रेरणाया सुग्रीवो रुष्टः रुषिभिर्क्रुधि पुषादिः शत्रोः क्षते समीपे वा महाद्रुमं प्रेरयामास ईर्किगतौ लुदि चुरादिः अग्लादङ् अरिः कुम्भकर्णः प्राप्तं तं द्रुमं सोढवान् उग्रां शक्तिमस्त्रं जग्राह हान्तत्वाच्च व्रिः ॥ ५२ ॥ भ०

स तामित्यादि । तां गृहीतां शक्तिं स कुम्भकर्णः अविभ्रमत् भ्रमयति स्म भ्रमेर्ण्यन्ताच्चङि रूपं वानरेन्द्रस्य सुग्रीवस्योपरि अमुचत् मुक्तवान् लृदित्वादङ् तत्र तस्यां मुक्तायां मारुतिर्हनूमान् प्रापप्तत् प्र-त्युपस्थितः लृदित्वादङीति पतः पुमिति पुमागमः ताञ्च वियद्गतामला-सीत् आप्तवान् ला आदाने यमरमेति सगिटौ ॥ ५३ ॥ ज० म०

अशोभिष्टाचखण्डच्च शक्तिं वीरो न चायसत् ।
लौहभारसहस्रेण निर्म्मिता निरकारि मे ॥ ५४ ॥
शक्तिरित्यकुपद्रक्षो गिरिञ्चोदखनीद्गुरुम् ।
व्यसृष्ट तं कपीन्द्रस्य तेनामूर्च्छीदसौ हतः ॥ ५५ ॥

स तामित्यादि । स कुम्भकर्णस्तां भीमां शक्तिं भ्रमयामास भ्रमे- र्मन्तादङ् सुग्रीवस्य कृते त्यक्तवान् मुच्लृ मोक्षे लृदित्वात् ङः तत्र तस्यां मुक्तायां सत्यां तद्देशे मारुतिर्हनूमानुपस्थितः पतत्जगत्यां लृदित्वात् ङः वच्यस्थपतामिति पप्तादेशः तां शक्तिञ्च वियद्गतां जग्राह यमरसेति द्रुमुतनौ ॥ ५२ ॥ भ०

अशोभिष्टेत्यादि । असौ गृहीतशक्तिर्वीरः अशोभिष्ट शोभते स्म शक्तिमचखण्डच्च भग्नवान् खण्डखण्डभेदने चौरादिकः ताञ्च खण्डय- ञ्चायसत् नायस्यति स्म यसुयत्ने पुषादिः लौहभारसहस्रेण निर्म्मिता घटिता मम शक्तिर्निरकारि भग्ना अनेनेति रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाणेन सम्बन्धः ॥ ५४ ॥ ज० म०

अशोभिष्टेत्यादि । गृहीतशक्तिर्मारुतिर्वीरोऽशोभिष्ट शुभ लृङ् दीप्तौ से ङाभावात् सिः शक्तिञ्च खण्डयामास खडिखडक् भेदे चुरादि. अग नादङ् तां खण्डयन् नचायासं प्राप इर्यसु यत्ने पुषादिः लौहभारसहस्रेण निर्म्मिता मे मम शक्तिरनेन निरकारि भग्ना इति रक्षः कुम्भकर्णोऽकुप दिति वक्ष्यमाणश्लोकेनान्वयः कञ्जनबधे इण तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुला इत्यमरः ॥ ५४ ॥ भ०

शक्तिरित्यादि । अकुपत् कुपितः कुपक्रोधे पुषादिः गिरिञ्च गुरु- मुदखनीत् उत्खातवान् अतो हलादेर्लघोरिति वृद्ध्यभावपक्षे रूपं कपीन्द्रस्य सुग्रीवस्योपरि तञ्च गिरिं व्यसृष्ट विसृष्टवान् सृजविसर्गेऽनु- दात्तेत् तस्माद्दुल्लाटात्मनेपदे सिचः कित्त्वे गुणाभावः असौ कपीन्द्रस्तेन हतः सन् अमूर्च्छीत् मोहमुपगतः ॥ ५५ ॥ ज० म०

शक्तिरित्यादि । अकुपत् कुपितः कुप्य इर कोपे पुषादिः गुरुं महान्तं गिरिं उत्खातवान् खनुञ् विदारे भ्वादेः सेम इति ञेः

अलोठिष्ट च भूपृष्ठे शोणितञ्चाप्यसुस्रुवत् ।
तमादायापलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६ ॥
अभैषुः कपयोऽन्वारत् कुम्भकर्णं मरुत्सुतः ।
शनैरबोधि सुग्रीवः सोऽलुञ्चीत् कर्णनासिकम् ॥ ५७ ॥

पाचिकत्वादभावः तं पर्वतं कपीन्द्रस्य क्षते विसृष्टवान् सृज्यौङ् विसर्गे झलस्वाज्झलीति सेर्लोपः मच्छाजिति मङ् तेन गिरिणा क्षतोऽसौ कपीन्द्रो मूर्च्छां प्राप मूर्च्छा मोहसमुच्छ्राये ॥ ५५ ॥ भ०

अलोठिष्टेत्यादि । मूर्च्छितस्य भूपृष्ठे अलोठिष्ट लुठते स्म रुठलुठ-प्रतिघात इति द्युतादिः द्युद्भ्यो लुङीति परस्मैपदविकल्पेनात्मनेपदं अस्य शोणितञ्च व्यसुस्रुवत् स्रुतं णिश्रीद्रुस्रादिना चङ् तं सुग्रीवमादाय राक्षसः कुम्भकर्णः अपलायिष्ट पलायते स्म व्यरोचिष्ट रोचते स्म रुच-दीप्तौ ॥ ५६ ॥ ज० म०

अलोठिष्टेत्यादि । स कपीन्द्रो मूर्च्छितः सन् भूपृष्ठे अलोठिष्ट लुठते स्म लुठङ प्रतीघाते अस्य शोणितमपि स्रवति स्म णिश्रीत्यङ् अध्यो-रितम् राक्षसः कुम्भकर्णस्तं सुग्रीवमादाय गृहीत्वा पलायितः शुशुभे च हर्षात् ॥५६॥ भ०

अभैषुरित्यादि । तस्मिन्नीते कपयोऽभैषुः भीताः मरुत्सुतः कुम्भ-कर्णमन्वारत् अनुगतः अर्तेः सर्त्तिशास्त्यर्तिभ्यश्चेत्यङ् ऋदृशोऽङि गुणः सुग्रीवः शनैर्मनागबोधि लब्धसंज्ञो बभूव दीपजनेत्यादिना बुधेः कर्त्तरि चिण् स बुद्धः कर्णनासिकं प्राण्यङ्गत्वादेकवद्भावः अलुञ्चीत् छिन्नवान् राक्षसस्येति वक्ष्यमाणेन सम्बन्धः ॥ ५७ ॥ ज० म०

अभैषुरित्यादि । अस्मिन् गृहीते कपयो भीताः ञिभी भये इति ञिः मरुत्सुतो हनूमान् कुम्भकर्णमनुजगाम ऋ प्रापणे च चकाराद्गत्यां वक्त्र-स्येत्यादिना मच्चे ङः ऋशोर्ङि गुणः सुग्रीवः शनैर्मनाक् प्रबुद्धः बुध्यौङ् वेदने ष्ठद्रुलनीचिण्यादिना पाचिक इण् स प्रबुद्धः सन् तस्य कर्णौ नासि-

राक्षसस्य न चात्रासीत् प्रनष्टुमयतिष्ट च ।
अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ ॥ ५८ ॥
सुग्रीवोऽस्याभ्रशद्धस्तात् समगाहिष्ट चाम्बरम् ।
तूर्णमन्वसृपद्राममानन्दच्च वानरान् ॥ ५९ ॥

काञ्च चिच्छेद राक्षसस्येति वक्ष्यमाणेनान्वयः लुञ्चापनयने ॥ ५७ ॥ भ०

राक्षसस्येत्यादि । राक्षसस्य कुम्भकर्णस्य सम्बन्धे स सुग्रीवो न चात्रासीत् न त्रस्तः राक्षसात् प्रनष्टुं पलायितुं सञ्जिनशोर्झलीति इम् अयतिष्ट च यतते स्म कुम्भकर्णेनात्मनोऽवस्थां दृष्ट्वा अक्रोधि क्रुद्धं भावे लुङ् क्षितौ च पेष्टुं चूर्णयितुं सुग्रीव आरम्भि आरब्धः कर्मणि लुङ् रभेरशब्लिटोरिति नुम् ॥ ५८ ॥ ज० म०

राक्षसस्येत्यादि । सुग्रीवो न च तस्मात् त्रस्तः त्रसीभये ह्वादेः सेम् इति त्रिः पलायितुं यतते स्म यतीङ्यत्ने नशेर्नुणरधोस्तुचामिति लुण् अयान्तत्वान्न यः आत्मावस्थां दृष्ट्वा कुम्भकर्णेन अक्रोधि भावे लुण् क्षितौ पेष्टुं सुग्रीवं चूर्णयितुं आरब्धं रभौङराभस्ये पूर्ववन्नुण् ॥ ५८ ॥ भ०

सुग्रीव इत्यादि । अस्य कुम्भकर्णस्य हस्तात् सुग्रीवः अभ्रशत् भ्रष्टः भ्रशभ्रंश अधःपतने पुषादिः स चाम्बरमाकाशमगाहिष्ट आक्रान्तवान् गाहृ विलोडने अनुदात्तेत् तूर्णञ्च राममन्वसृपत् अनुगतः लृदित्वादङ् वानरांश्च कर्णनासिककर्त्तनेनाननन्दत् तोषितवान् नन्दतेर्णन्तस्य रूपम् ॥ ५९ ॥ ज०म०

सुग्रीव इत्यादि । अस्य कुम्भकर्णस्य हस्तात् सुग्रीवो भ्रष्टः लृभ्रलुलुङाच चकारादधःपाते पुषादिः हलुङ्लोपोऽणौ अम्बरमाकाशं आक्रान्तवान् ङगाहृप्रतिष्ठालिप्सयोः अगाहिष्टेति पाठे ङगाहृ विलोडे ऊदित्वादिम् ततः शीघ्रं राममनुजगाम लृसृपौ गत्यां लृदित्वात् ङः वानरांश्च नन्दयामास टुनदिसंहटिञ्ञन्तादङ् ॥ ५९ ॥ भ०

अतत्वरदित्यादि । तांश्च वानरान् योद्धुमतत्वरत् त्वरयन्ति स्म सा

अतत्वरच्च तान् योद्धुमचिवेष्टच्च राघवौ ।
कुम्भकर्णो न्यवर्त्तिष्ट रणेऽयुत्सत वानराः ॥ ६० ॥
अविवेष्टन्नृपादेशादारुक्षंश्चाशु राक्षसम् ।
तानधावीत् समारूढांस्तेऽप्यस्रंसिषताकुलाः ॥ ६१ ॥

विलम्बध्वमिति त्वरेर्ण्यन्ताच्चङ् अत्स्मृदृत्वरेति अभ्यासस्य अत्वं राघवौ च योद्धुमचचेष्टत् व्यापारयति स्म विभाषा चेष्टिवेष्ट्योरित्यभ्यासस्यात्वपक्षे रूपं स कुम्भकर्णो योद्धुं न्यवर्त्तिष्ट निवृत्तः द्युतिर्द्युतादिः द्युद्भ्य इत्यादिनात्मनेपदेनाङ् वानराश्चायुत्सत युध्यन्ते स्म ॥ ६० ॥ ज० म०

अतत्वरदित्यादि । सुग्रीवस्तान् वानरान् योद्धुं त्वरयति स्म णिश्रिद्रुस्रुभ्यः कर्त्तरि ण्यन्तादङ् स्मृदृत्वरप्रथेत्यादिना स्वरङ् स राघवौ च योद्धुं चेष्टयामास चेष्टङ्चेष्टे ण्यन्तादङ् पूर्ववत् पक्षे स्वरङ् कुम्भकर्णो युद्धे निवृत्तः वृतङ्वृतुवर्त्तने मे ङनभावात् सिः वानरा युध्यन्ते स्म युध्यौङ् युद्धे इगुङ्गुर्मढीति सेः कित्त्वान्न गुः ॥ ६० ॥ म०

अविवेष्टन्नित्यादि । वानरा राक्षसमविवेष्टन् वेष्टयन्ति स्म अत्र राम इतयोर्द्रष्टव्यं यतस्तदादेशादाशु ते राक्षसमारुक्षन् आरूढाः रुहं शलेत्यादिना क्सः वानरा एव नृपादेशादविवेष्टन्निति व्याख्याने स्वातन्त्र्येण तेषां कर्तृत्वात्प्रयोजकत्वं न घटते तांश्च वानरानारूढान् कुम्भकर्णोऽधावीत् धूतवान् स्मरतीत्यादिना इट् हलन्तस्येति नेटीति प्रतिषेधः ते व्याकुलाः सन्तोऽस्रंसिषत स्रस्ताः पतिता इत्यर्थः स्रंसुध्वंसु च स्रंसने इत्यादिः परस्मैपदाभावान्नाङ् ॥ ६१ ॥ ज० म०

अविवेष्टन्नित्यादि । वानराः राक्षसं वेष्टयामासुः राम इत्यध्याहृत्य वानरांश्चेष्टयामास इत्यर्थो वा चुर्यौ णिरित्यस्य योगविभागात् कण्ड्वादेरन्यस्मादपि णिरित्यन्ये स्मृदृत्वर इत्यस्याप्रवृत्तिपक्षे रूपं अविवेष्टन्निति पाठे वेष्टङ्वेष्टे राक्षसं वेष्टितवन्तः पूर्ववत् स्वरङ् वा नृपादेशात् रामाज्ञया वानराः आशु राक्षसमारूढाः णिजरुहौ जन्मौ इशकोऽनिसिजुङ इति सक् कुम्भकर्णः समारूढान् धूतवान् धूञ् कम्पे

अग्रसिष्ट व्यधाविष्ट समाश्लिक्षच्च निर्दयम् ।
ते चाप्यघोरिषुर्घोरं रक्तञ्चावमिषुर्मुखैः ॥ ६२ ॥
स चापि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न ।
अपञ्चीचायुरन्येषामरुद्ध च पराक्रमम् ॥ ६३ ॥

क्षुधोः चिरिम् पे इति इम् अजन्ताद्वृजवदेति चिः ते कपयो व्याकुलाः त्रस्ताः लृवनृवुङ्भ्रंशे से चिः ॥ ६१ ॥ भ०

अग्रसिष्टेत्यादि । कुम्भकर्णः कांश्चिदग्रसिष्ट ग्रसते स्म कांश्चिन्निर्दयं समाश्लिक्षत् श्लिष आलिङ्गने शल इति क्सः ते चाश्लिष्टाः महाघोरं श्रुतिकटुकं अघोरिषुः शब्दमुक्तवन्तः घुरभीमार्थशब्दयोरिति तुदादिरनुदात्तेत् रक्तं चावमिषुः उद्गीर्णवन्तः ॥ ६२ ॥ जं० म०

अग्रसिष्टेत्यादि । कुम्भकर्णः कांश्चित् ग्रसते स्म भक्षितवान् कांश्चित् धावति स्म धावुभ्जवे व्यजि व्यबाधिष्टेति पाठे कांश्चित् प्रबाधते स्म बाधङ् विहतौ कांश्चिन्निर्दयं समाश्लिक्षत् आलिङ्गं कृतवानित्यर्थः श्लिषौ अलृश्लिषे इगुपधोऽनिमिजुङ इति आलिङ्गने क्सापवादः सक् ते वानरास्तेन हताः सन्तः घोरं शब्दं चक्रुः घुरशब्दनौ भीमार्थे रक्तञ्च मुखैरवमिषुः टुवम उद्गिरि कान्तत्वान्न विः ॥ ६२ ॥ भ०

स चेत्यादि । स चापि कुम्भकर्णः रुधिरैर्मत्तः स्वेषामपि नादयिष्ट न दयां कृतवान् किमपरेषां अधीगर्थेति षष्ठी अन्येषां वानराणां आयुर्जीवितमग्रहीत् गृहीतवान् ह्यग्रन्तत्वान्न वृद्धिः अदोहीवायुरिति पाठान्तरं तत्र तथाभूतं कुम्भकर्णं दृष्टवतामन्येषामायुरदोहीव स्वयङ्कृतमिव दुहश्चेति कर्मकर्त्तरि चिण् पराक्रमञ्चान्येषामरुद्ध च आवृतवान् रुधेः कर्माभिप्राये तङ् झलोझलीति सिचो लोपः झषस्तथोर्धोधः झलाञ्जशझशि ॥ ६३ ॥ ज० म०

स चेत्यादि । सोऽपि कुम्भकर्णः शोणितैर्मत्तः सन् स्वेषां राक्षसानामपि न दयां चक्रे किं पुनः परेषां कर्मणि सम्बन्धविवक्षायां वा षष्ठी अदयङ् ग्रहणे गतौ वधे दानेऽवने अन्येषां वानराणां आयुर्गृहीतवान्

संत्रस्तानामगाहारि सत्वञ्च वनवासिनाम् ।
अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा ॥ ६४ ॥
अभेदि च शरैर्देहः प्राशंसीच्च निशाचरः ।
अस्पर्द्धिष्ट च रामेण तेनास्याक्षिप्सतेषवः ॥ ६५ ॥
यैरघानि खरो वाली मारीचो दूषणस्तथा ।
अवामंस्त स तान् दर्पात् प्रोदयंसीच्च मुद्गरम् ॥ ६६ ॥

छान्दसत्वाच्च द्विः अदोहीदायुरिति पाठे तादृशं कुम्भकर्णं दृष्ट्वा अन्ये प्राआयु. स्वयमेवादोहीव दुहश्च्लौ दुहि ढकड्ढघोऽढे इति ढवदिलोपके: ढभावे समिति स वेणजदुह इति इण् अन्येषां पराक्रमञ्च रुद्धवान् रुधिरौभिन्न आहतौ मसस्ताभसीति निचोलोपः ॥ ६३ ॥ भ०

सन्त्रस्तानामित्यादि । तेन सत्वमपाहारि अपहृतं सर्वेषां त्रस्तत्वात् कर्म्मणि लुङ् लक्ष्मणेन तस्य किरीटं मुकुटं तथा कवचमच्छेदि छिन्नं कर्मणि लुङ् ॥ ६४ ॥ ज० म०

संत्रस्तानामित्यादि । सन्त्रस्तानां वानराणां सत्वं बलं तेनापहृतं हृञः कर्मणीण् लक्ष्मणेन अस्य किरीटं मुकुटं कवचञ्च छिन्नम् ॥ ६४ ॥ भ०

अभेदीत्यादि । देहश्चास्य शरैः करणभूतैरभेदि छिन्नः निशाचरश्च तं लक्ष्मणं प्राशंसीत् स्तुतवान् साधु भवता युद्धमिति रामेण सहास्पर्द्धिष्ट योद्धुं स्पर्द्धते स्म तेन रामेणास्य इषवः अक्षिप्सत क्षिप्ताः कर्मणि लुङ् हलन्तादात्मनेपदे सिचः कित्वाद्गुणाभावः ॥ ६५ ॥ ज० म०

अभेदीत्यादि । लक्ष्मणेनास्य देहः शरैर्भिन्नः ततो निशाचरः कुम्भकर्णस्तं लक्ष्मणं प्रशशंस शन्सु हिंसास्तुत्योः रामेण सह योद्धुं स्पर्द्धते स्म स्पर्द्धङ् संहर्षे तेन रामेणास्य राक्षसस्य कृते इषवः क्षिप्ताः क्षिप्यौ तुदि कर्मणि टी ॥ ६५ ॥ भ०

यैरित्यादि । यैः शरैश्च खरोऽघानि व्यापादितः कर्मणि लुङ् ते अक्षिप्सतेति योज्यं स कुम्भकर्णस्तान् मन् दर्पादवामंस्त अवमन्यते

वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत् सहायुधम् ।
अदीपि तरुहस्तोऽसावधावीच्चारिसंमुखम् ॥ ६७ ॥
स वृत्तमच्छिदत्तस्य शक्रास्त्रेण करं नृपः ।
जङ्घे चाशीशतद्बाणैरप्रासीदिषुभिर्मुखम् ॥ ६८ ॥

स मुद्गरं प्रोदयंसीत् उद्गूर्णवान् यमरमेति सगिटौ ॥ ६६ ॥ ज० म०

यैरित्यादि । यैः शरैः खरादिर्हतः स कुम्भकर्णस्तान् चिप्रान् अवमन्यते स्म दर्पादहङ्कारात् मन्यौङ् च बोधे मुद्गरं उत्थापितवान् यमौ उपरितौ यमरमेतीमृसनौ ॥ ६६ ॥ म०

वायव्यास्त्रेणेत्यादि । येन पाणिना मुद्गरमुदयंसीत् तं पाणिं सहायुधं रामो वायव्यास्त्रेण मरुद्देवतादत्तेन अच्छैत्सीत् छिन्नपाणिश्चासौ तरुहस्तः तरुर्हस्ते यस्येति तरौ प्रहरणत्वात् सप्तम्यन्तस्य परनिपातः अदीपि दीप्यते स्म दीपजनेत्यादिना कर्त्तरि चिण् अरिसम्मुखञ्च रामाभिमुखमधावीत् वेगेन गतवान् ॥ ६७ ॥ ज० म०

वायव्यास्त्रेणेत्यादि । येन पाणिना मुद्गरमुदयंसीत् तं पाणिं आयुधेन मुद्गरेण सहितं वायव्यास्त्रेण रामश्छिन्नवान् छिदिर्धौञ्छेदे अनिमृत्वादिः वायुर्देवता यस्येति विकारसङ्केत्यादिना ष्णाः न्योर्लोपो नौतेऽच्ये इति ओकारः ओदैतोऽज्वदिति अज्वद्भावः यलायवायाव इति अव् असौ छिन्नहस्तो राक्षसस्तरुहस्तः सन् दीप्यते स्म पदस्तनीण् घे इत्यादिना कर्त्तरि इण् तरुर्हस्ते यस्य तरुयुक्तो हस्तो यस्येति वा समासः अरिसम्मुखं रामाभिमुखं अधावीच्च वेगेन गतः धावु अजवे क्रजि ॥ ६७ ॥ म०

सवृत्तमित्यादि । तस्य सवृत्तमपि करं नृपः शक्रास्त्रेणाच्छिदत् इरितो वेत्यङ् जङ्घे चान्यैर्बाणैरशीशतत् गमनासमर्थे कृतवान् शदेर्णौग-देरगताविति तच्च मुखमिषुभिरप्रासीत् पूरितवान् प्रापूरणे ॥ ६८ ॥ ज० म०

सवृत्तमित्यादि । नृपो रामस्तस्य कुम्भकर्णस्य वृत्तसहितं हस्ता-न्तरं शक्रास्त्रेण छिन्नवान् इरित्त्वात्पक्षे ङः बाणैः प्रयोजककर्तृभिस्तस्य

ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हतः ।
अपिक्षातां सहस्रे द्वे तद्देहेन वनौकसाम् ॥ ६९ ॥
अस्ताविषुः सुरा रामं द्विषः प्रापन्निशाचराः ।
भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः ॥ ७० ॥

जह्रे च अलीलवत् छेदितवान् लुञ्गिच्छिदि णिः प्रेरणे अङ् द्विर्भ्रुवः अभ्यासेऽचि उः स्वः स्वेः सन्वत् जयलोपः स्थोर्थ्यै इति स्वेरुकारस्य इकारः तस्य दोर्हस्वादेर्घश्चेति दीर्घत्वं अवीवशदिति पाठे शदोऽगतौ तङ् गत्यसमर्थं च जह्रे कृतवानित्यर्थः अस्य मुखं शरैः पूरितवान् प्रापूर्त्तो यमरमेतीमसनौ ॥ ६८ ॥ भ०

ऐन्द्रेणेत्यादि । ऐन्द्रेण शरेण हृदयेऽव्यात्सीत् विद्धवान् स तथा हतो गामध्यवात्सीत् भूमिमध्युषितवान् तस्य पततो देहेन वनौकसां वानराणां द्वे सहस्रे अपिक्षातां चूर्णिते पिष्लृ संचूर्णने कर्मणि लुङ् ॥ ६९ ॥ ज० म०

ऐन्द्रेणेत्यादि । इन्द्रदैवतेनास्त्रेण हृदये तं विद्धवान् व्यधौ ताडे अनिमत्वाद्धिः अव्यासीदिति पाठे व्येञ् हतौ निरुद्धवानित्यर्थः स कुम्भकर्णो हतः सन् गां भूमिं अध्युषितवान् वसे कौ निवासे अनिमत्वाद्धिः सत्सरे इति सस्य तः पततस्तस्य देहेन वानराणां द्वे सहस्रे अपिक्षातां चूर्णिते धौपिष्लृ चूर्णने कर्मणि द्विवचनं ह्यशसोऽनिमिजुङ इति सक् षढोः कः सकोल्लोपः तेन याथातोऽत इत्यस्याविषयः ॥ ६९ ॥ म०

अस्ताविषुरित्यादि । तस्मिन् हते सुरा देवा राममस्ताविषुः स्तुवन्ति स्म स्तुसुधूञ्भ्यः परस्मैपदेष्विडीट् निशाचरास्तद्भयाद्दिशः प्रापन् प्राप्तवन्तः आप्लृव्याप्तौ साद्रीन्द्रा सकुलपर्वता भूमिरकम्पिष्ट चचाल च अम्भसां पतिः समुद्रो व्यचालीत् प्रक्षुभितवान् ॥ ७० ॥ ज० म०

अस्ताविषुरित्यादि । तस्मिन् हते सुरा रामं स्तुवन्ति स्म स्तुधोः सेरिम्पे अजन्ताद्धिः राक्षसा भयाद्दिशः प्रापुः आप्लृणौकि व्यापने ल्टदित्वात् ङः अद्रीन्द्रैः कुलपर्वतैः सहिता भूमिः कम्पिता कम्पिचाले

हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन् ।
अरोदीद्रावणोऽशोचीन्मोहञ्चाशिश्रियत् परम् ॥ ७१ ॥
अपप्रथद्गुणान् भ्रातुरचिकीर्त्तच्च विक्रमम् ।
क्रुद्धेन कुम्भकर्णेन येऽदम्भिषत शत्रवः ॥ ७२ ॥

अम्भसां पतिः समुद्रो विचलति स्म तद्देहपातात् अन्तत्वाद्दुजवदिति वृः ॥ ७० ॥ भ०

हतमित्यादि । हतं व्यापादितं कुम्भकर्णं रक्षांसि राजानं रावणमशिश्रवन् श्रावितवन्तः शृणोतेर्ण्यन्तात् शृनीव कार्य्यमिति श्रवति शृणोतीत्यादिना अभ्यासस्य विकल्पेनेट् एवञ्च कृत्वा व्यमुश्रुवन्निति पाठान्तरं द्विकर्म्मकता तु बुद्ध्यर्थत्वात् श्रुत्वा च रावणोऽरोदीत् अश्रूणि मुमोच अशोचीत् शोचति स्म तेनापि तत्क्षोऽभीति परञ्च मोहं मूर्च्छामशिश्रियत् श्रिञ सेवायां श्रीत्यादिना चङ् ॥ ७१ ॥ ज० म०

हतमित्यादि । हतं कुम्भकर्णं राक्षसा राजानं श्रावितवन्तः श्रुनगतौ श्रुतो ज्यन्तत्वादङ् द्वित्वं वृः आङ्युङः ख: खे: सन्वत् श्रुसुसुदु इति खेरुकारस्य पाक्षिक इकार: घोऽनौनेरिति प्रयोज्यस्य राज्ञः कर्मत्वं श्रुत्वा च रावणोऽरोदीत् लघिरवदरोदे अशोचीत् शोचति स्म शुच शोके परसत्कष्टञ्च मोहमाश्रितः श्रिञ सेवने जिश्रीत्यङ् श्रुध्वोरितीय ॥ ७१ ॥ भ०

अपप्रथदित्यादि । भ्रातुर्गुणान् बुद्धिमत्त्वादीनपप्रथत् प्रख्यापितवान् प्रथ प्रख्याने घटादिः तस्मात् ण्यन्ताच्चङि अत्स्मृदृत्वरेत्यादिनाऽत्व विक्रमञ्च शौर्य्यमचकीर्त्तत् उदीरितवान् कृतसंशब्दन इति चौरादिकः जिघ्रतेर्वेत्यदन्त इदिति इकाराभावपक्षे रूपं उपधायाश्चेतीत्वं विक्रमकीर्त्तनञ्चाह क्रोधकर्त्रा कुम्भकर्णेन ये शत्रवोऽदम्भिषत हृष्टा; कर्मणि लुङ् स्यसि तत्रादिना इणोऽश्वर्वादिट् ॥ ७२ ॥ ज० म०

अपप्रथदित्यादि । रावणो भ्राता: कुम्भकर्णस्य गुणान् प्रथयति स्म प्रथकचख्याते अन्तादङ् स्मृदृत्वरप्रथेति खेरङ् इद्बाधकः तस्य विक्रमं कीर्त्तयति स्म कृतकसंशब्दे ज्यन्तादङ् विक्रमकीर्त्तनमेवाह कुम्भकर्णेन

कथं न्वजीविषुस्ते च स चाम्रत महाबलः ।
अयुयुत्सिषताश्वस्य कुमारा रावणं ततः ॥ ७३ ॥
देवान्तकोऽतिकायश्च त्रिशिराः स नरान्तकः ।
ते चांहिषत संग्रामं बलिनो रावणात्मजाः ॥ ७४ ॥
युद्धोन्मत्तश्च मत्तश्च राजा रक्षार्थमादिशत् ।
सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥ ७५ ॥

क तु न रुता ये शत्रवो हताः ते च कथं नु अजीविषुः जीवन्ति अतः परश्लोकेनान्वयः इषोः कर्मणि बहुवचनं इत्यप्रहृष्टश्च इति पक्षे मिण् ॥ ७२ ॥ भ०

कथमित्यादि । तेऽन्याः कथन्नाम अजीविषुः जीविताः स च कुम्भकर्णो महाबलः अम्रत मृतः म्रियतेर्लुङ्लिङोश्चेति तङ् ह्रस्वादङ्गादिति सिचो लोपः अनन्तरं कुमाराः राजपुत्रा देवान्तकादयो रावणं शोचन्तमाश्वास्य अपनीतशोकं कृत्वा प्रायुयुत्सिषत योद्धुमिष्टवन्तः हलन्ताच्चेति सनः किन्त्वं पूर्ववत्सन इति तङ् ॥ ७३ ॥ ज०म०

कथमित्यादि । नुशब्दः प्रश्ने स च महाबलो मृतः मृङ्शङ् मृतौ मृङ्ङ्टीत्वेम इगुङ्मंळीति सेः कित्त्वाद्गुणाभावः ह्रस्वादिति सेर्लोपः ततोऽनन्तरं कुमारा रावणपुत्रा देवान्तकादयो रावणमाश्वास्यापनीतशोकं कृत्वा योद्धुमिष्टवन्तः युध्यौङ् युद्धे सन्निच्छायां गुर्नामिनि सन् ॥ ७३ ॥ म०

देवान्तक इत्यादि । ते च रावणात्मजाः संग्राममांहिषत गतवन्तः अहि गतौ किंनामानः देवान्तकः अतिकायः त्रिशिराः नरान्तक इति ॥ ७४ ॥ ज० म०

देवान्तक इत्यादि । के ते कुमारा इत्यत्रोक्तं देवान्तक इत्यादि ते च बलिनो रावणपुत्राः संग्राममांहिषत गताः अहिङ् गतौ ॥ ७४ ॥ म०

युद्धेत्यादि । सुतानां रक्षार्थं राजा युद्धोन्मत्तं मत्तञ्च राक्षसं द्वाविदिशत् प्रस्थापितवान् अंहतेर्णौ चङ्परे द्वितीयाद्विर्वचनं तौ राक्षसौ

तैरजेषत सैन्यानि द्विषोऽकारिषताकुलाः ।
पर्व्वतानिव ते भूमावचैषुर्व्वानरोत्तमान् ॥ ७६ ॥
अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः ॥
प्रैषिषद्राक्षसः प्रासं सोऽस्फोटीदङ्गदोरसि ॥ ७७ ॥
अश्वान् बालिसुतोऽहिंसीदतताडच्च मुष्टिना ।

रणपण्डितौ निरगातां निर्गतौ इणोगा लुङि ॥ ७५ ॥ ज० ज०

युद्धेत्यादि । राजा रावणः सुतानां तेषां रक्षार्थं युद्धोन्मत्तं मत्तञ्च राक्षसद्वयं आञ्जिहत् प्रस्थापितवान् अञ्जिहद्गतौ ऊनन्तादङ् तौ रणपण्डितौ राक्षसौ पुरान्निर्गतौ इणगतौ यां भूस्थापिवद्रेगोति सेर्लुक् ॥ ७५ ॥ भ०

तैरित्यादि । तैः राक्षसैः सैन्यानि अजेषत जितानि कर्मणि लुङ् अचिण्भावदचे रूपं द्विषः आकुला अकारिषत ते राक्षसा वानरोत्तमान् वानराणां प्रधानभूतान् पर्वतानिव भूमौ अचैषुः पुञ्जीकृतवन्तः चिञ् चयने ॥ ७६ ॥ ज० म०

तैरित्यादि । तैर्देवान्तकादिभिः सैन्यानि जितानि जिजये च कर्मणि बहुवचनं शत्रवश्चाकुलाः कृताः कर्मणि रूपद्वयं च इति मिण् ते राक्षसा वानरोत्तमान् पर्वततुल्यान् भूमौ चितवन्तः पुञ्जीचक्रुः चिञ् चित्यां इजवदेति विः ॥ ७६ ॥ भ०

अङ्गदेनेत्यादि । नरान्तकः कुमारः अङ्गदेन सह योद्धुमघटिष्ट घटते स्म राक्षसः प्रासं कुन्तं प्रैषिषत् इषुगताविलस्य लयस्य चङिः रूपं स प्रासोऽङ्गदोरसि अस्फोटीत् विशीर्णः ॥ ७७ ॥ ज० म०

अङ्गदेनेत्यादि । नरान्तकः कुमारः अङ्गदेन सह योद्धुं चेष्टितवान् घटषङ्मचेष्टे स राक्षसः प्रासं कुन्तं प्रेषितवान् इष्य सर्पणे अग्रन्तादङ् ईषङ्दानेचहिंसैं चेत्यस्य रूपं वा अयञ्च चकारात् सर्पणेऽपि स प्रासः अङ्गदस्य वक्षसि अस्फोटीद्विदीर्णः स्फुटिर्विसरणे ॥ ७७ ॥ भ०

अश्वानित्यादि । बालिसुतोऽश्वान् रथयुक्तानहिंसीत् व्यापादितवान्

रावणिश्चाव्यथो योद्धुमारब्ध च महीं गतः ॥ ७८ ॥
तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।
प्रादुद्रुवंस्ततः क्रुद्धाः सर्वे रावणयोऽङ्गदम् ॥ ७९ ॥
ततो नीलहनूमन्तौ रावणीनववेष्टताम् ।
अकारिष्टां गिरींस्तुङ्गानरीस्तौच्छिन्नशिराः शरैः ॥ ८० ॥

त्हिहिसि हिंसायां मुष्टिना पाणिना अततादत् आहतवान् ताड आघाते ताडनं ताडः भावे घञ् ताडङ्करोतीति णिचणाविष्टवदिति टिलोपः णौचङ्युपधाया नाग्लोपिशास्वृदितामिति ह्रस्वप्रतिषेधः स च रावणिरव्यथो व्यथारहितः हताश्वाद्रथादवतीर्य्य महीं गतः सन् योद्धुमारब्ध आरभते स्म झलोझलीति सिचोलोपः धत्वञ्च ॥ ७८ ॥ ज० म०

अश्वानित्यादि । वालिसुतोऽङ्गदो नरान्तकस्याश्वान् हिंसितवान् हिसिधर्कािहिंसे मुष्टिना राक्षसं ताडितवांश्च तडक्विधीयमात् भावे घञ् तं करोतीति अन्तादङ् अग्लोपित्वात् उङो ह्रस्वाभावः स च रावणपुत्रो व्यथारहितः हताश्वत्वाद्रथादवतीर्य्य महीं गतः सन् योद्धुं आरब्धवान् रभोऽङ्स्यात्तु राभस्ये झस्त्वाज्झसीति सेर्लोपः रावणस्यापत्यमिति वाह्वाद्यत इति णिञः ॥ ७८ ॥ म०

तस्येत्यादि । तस्य प्राणाः वालिपुत्रेण अहारिषत हृताः कर्मणि लुङ् चिण्वद्भावः ततोऽनन्तरं सर्वे रावणयः रावणस्यापत्यानि देवान्तकादयः क्रुद्धाः सन्तोऽङ्गदं प्रादुद्रुवन् गतवन्तः णिश्रीत्यादिना चङ् ॥ ७९ ॥ ज० म०

तस्येत्यादि । वालिसूनुना अङ्गदेन तस्य प्राणा मुष्टिना करणेन हृताः हृञः कर्मणि हनग्रहदृशश्च इति सिण् ततोऽनन्तरं सर्वे रावणपुत्राः क्रुद्धाः सन्तः अङ्गदं प्रद्रुतवन्तः जग्मुरित्यर्थः णिश्रीत्यङ् ॥ ७९ ॥ म०

तत इत्यादि । ततो रावणीनङ्गदाभिमुखमागच्छतो नीलो हनूमांश्चावेष्टतां वेष्टितवन्तौ विभाषा वेष्टिचेष्ट्योरित्यभ्यासस्यात्वं गिरींश्चाका-

परिघेणाबधिष्टाथ रणे देवान्तको बली ।
मुष्टिनाददरत्तस्य मूर्द्धानं मारुतात्मजः ॥ ८१ ॥
अदीदिपत्ततो वीर्य्यं नीलञ्चापीपिडच्छरैः ।
युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयम् ॥ ८२ ॥

रिष्टां विक्षिप्तवन्तौ कॄ विक्षेपे क्तिच वृद्धिः तांश्च गिरीन् क्षिप्तान् त्रिशिराः शरैस्तुङ्गानरौत्सीत् आवृतवान् रुधिरावरणे ॥ ८० ॥ ज० म०

तत इत्यादि । अनन्तरं अङ्गदं प्रति गच्छतो रावणपुत्त्रान् नीलहनूमन्तौ वेष्टितवन्तौ गिरींश्च विक्षिप्तवन्तौ कॄश विक्षेपे अजन्तत्वाद्वृद्धिः तान् क्षिप्तान् गिरीन् त्रिशिराः शरैर्निरुद्धवान् रुधिर्यौजि आवृतो ङाभावपक्षे सिः ॥ ८० ॥ भ०

परिघेणेत्यादि । अथ देवान्तको बली परिघेणावधिष्ट हतवान् आङो यम हन इति तङ् अविवक्षितकर्मकत्वादात्मनेपदेष्वन्यतरस्यामिति हनो बधादेशः तस्य सतो मूर्द्धानं मारुतात्मजः मुष्टिना अददरत् दारितवान् दॄ विदारणे ण्यन्तस्य चङ्परे णौ अत् सृदृत्वरेत्यादिनाभ्यासस्यात्वम् ॥ ८१ ॥ ज० म०

परिघेणेत्यादि । अथ बली देवान्तको रणे परिघेणाहतवान् व्याङ्परिभ्यो रम इति सं अविवक्षितकर्म्मत्वादकर्म्मकत्वं हनबधष्टीति पक्षे बधादेशः तस्य मूर्द्धानं पवनात्मजो हनूमान् मुष्टिना दारयामास दॄभय विदारे सृदृ त्वरप्रथेति खेरङ् ॥ ८१ ॥ भ०

अदीदिपदित्यादि । ततो देवान्तकविनाशादनन्तरं युद्धोन्मत्तः सुतानां रक्षार्थं यः प्रेषितः स वीर्य्यमदीदिपत् भ्राजभासेत्यादिना ह्रस्वाभावपक्षे रूपं नीलञ्च शरैरपीपिडत् पीडितवान् ह्रस्वाभावपक्षे रूपं अपीपरदिति पाठान्तरं पूरितवानित्यर्थः पृ पूरण इति चुरादिः स तु नीलेन क्षयं गिरिणा अनायि नीतः कर्म्मणि लुङ् ॥ ८२ ॥ ज० म०

अदीदिपदित्यादि । ततो देवान्तकबधानन्तरं युद्धोन्मत्तो नाम राक्षसः स्ववीर्य्यं दीपयामास भ्राजभासभाषेत्यादिना पाक्षिक उङो ह्रस्वः खेः सन्वल्लघाविति दीर्घः शरैश्च नीलं पीडयामास पूर्ववदुङो ह्रस्वः

अत्रभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे ।
हनूमता हतास्तस्य रणेऽम्रियत वाजिनः ॥ ८३ ॥
अस्रसच्चाहतो मूर्ध्नि खड्गं चाजीहरद्द्विषा ।
प्राणानौज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्द्धभिः ॥ ८४॥

अपीपरदिति पाठे पृङ् पूर्त्तौ स तु नीलेन गिरिणा संचयं नीतः कर्मणि रतनोरितीष् ॥ ८२ ॥ भ०

अत्रभ्राजदित्यादि । ततोऽनन्तरं त्रिशिराः कुमारः पवनात्मजविषये शक्तिं वीर्य्यमत्रभ्राजत् दीपयति स्म भ्राजेत्यादिना ह्रस्वाभावपक्षे रूपं तस्य वाजिनो रथयुक्ता रणे हनूमता हताः सन्तः अम्रियत मृताः म्रियतेर्लुङ्लिङोरिति तङ् ॥ ८३ ॥ ज०म०

अत्रभ्राजदित्यादि । तदनन्तरं त्रिशिराः कुमारो हनूमद्विषये शक्तिं दीपयति स्म भ्राजृङ् पटुत्व चकाराद्भासि उङ्गो ह्रस्वाभावपक्षे रूपमिदं तस्य वाजिनो रथाश्वाः हनूमता पदाघाताड़िताः सन्तो मृताः म्रङ्टीटेमेमं ड्युक् संढीति क्त्विात् गुणाभावः ॥ ८३ ॥ भ०

अस्रेत्यादि । त्रिशिराश्च हनूमता मूर्ध्नि हतः सन् रथाद्भूमौ अस्रसत् रथाद्भूमौ स्रस्तः च्युत्वा लुङोति परस्मैपदं द्युतादित्वादङ् क्ङितीत्यनुनासिकलोपः स्रस्तस्य स खड्गं हस्तस्थं द्विषा हनूमता अजीहरत् हारितवान् तेनैव च खड्गेन छिन्नैर्मूर्द्धभिर्हेतुभूतैः प्राणाऔज्झीत् त्यक्तवान् उज्झ उत्सर्गे ॥ ८४ ॥ ज०म०

अस्रसदित्यादि । हनूमता मूर्ध्नि आहतश्च त्रिशिरा रथात् भ्रष्टः स्रंसुभ्रंसुध्वंसुभ्रंशे द्युतादित्वात्ङः तेनैव पं कसुङ्नलोपः स्रस्तः सन् खड्गं हस्तस्थं खड्गं द्विषा हनूमता हारितवान् गृहीतवान् नैव तु कर्त्तव्येन हनूमता खड्गो हृत इत्यर्थः । हृक्रोरन्यतरस्यामाहाङ् णौ उञ्जोरेरित्यादिना प्रयोज्यस्य न कर्तृत्वं पाक्षिकत्वात् तेनैव खड्गेन छिन्नैर्मूर्द्धभिर्हेतुभूतैः स त्रिशिराः प्राणान् त्यक्तवान् उज्झ त्यागे ॥ ८४॥ भ०

मत्तेनामारि संप्राप्य शरभास्तां महागदाम्।
सहस्रहरिणाक्रीडीदतिकायस्ततो रणे ॥ ८५ ॥
रथेनाविव्यथच्चारीन् व्यचारीच्च निरङ्कुशः।
विभीषणेन सोऽख्यायि राघवस्य महारथः ॥ ८६ ॥
अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुषत्।
अशिश्लिष्ट महास्त्राणि रणेऽरक्षीच्च राक्षसान् ॥ ८७ ॥

मत्तेनेत्यादि। शरभेण वानरेणास्तां क्षिप्तां महागदां प्राप्य मत्तेन कुलानां रक्षार्थं प्रेषितेन राक्षसेनामारि मृतं भावे लुङ् ततोऽनन्तरं अतिकायो राजपुत्रो रणे अक्रीड़ीत् विहरति स्म रथेनेति वक्ष्यति सहस्रं हरयोऽश्वा यस्य रथस्य ॥ ८५ ॥ ज० म० ॥

मत्तेनेत्यादि। शरभेण कपिना क्षिप्तां महागदां समाप्य मत्तेन रक्षसा मृतं भावे लुङ् मत्तेन या गदा शरभाय क्षिप्ता तयैव शरभस्तं मारयामासेत्यर्थः। तदनन्तरं अतिकायः कुमारो रणे क्रीड़ति स्म क्रीड़ खेले केन सहस्रहरिणा सहस्राश्वयुक्तेन रथेनेत्यग्रिमश्लोकेन सम्बन्धः ॥ ८५ ॥ म०

रथेनेत्यादि। अरींश्चाविव्यथत् पीड़ितवान् व्यथेर्ण्यन्तस्य चङि रूपं निरङ्कुशश्चाप्रतिहतशक्तिर्व्यचारीत् भ्राम्यति स्म रान्तत्वाद्वृद्धिः स विचरन्महारथः विभीषणेन राघवस्य आख्यायि कथितः कर्मणि लुङ् ॥ ८६ ॥ ज० म०

रथेनेत्यादि। चकारः समुच्चये अरीन् शत्रूनविव्यथत् पीड़यामास व्यथेर्ण्यन्तस्य णिश्रिद्रु इत्यादिना अङ् निरङ्कुशश्चाव्याहतगतिः सन् व्यचारीत् बभ्राम राघवस्य रामस्य सम्बन्धे विभीषणेन महारथोऽख्यायि सोऽयमागत इति निर्दिष्ट इत्यर्थः ॥ ८६ ॥ म०

कीदृशः कथित इत्याह

अतस्तम्भदित्यादि। अयं स्वशक्त्या वज्रं अतस्तम्भत् स्तम्भितवान् स्तम्भिस्तम्भिप्रतिस्तम्भे ण्यन्तस्य णिश्रीत्यादिना चङ् स्वयम्भुवमतू-

अध्यगीष्टार्थशास्त्राणि यमस्याह्नोष्ट विक्रमम् ।
देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम् ॥ ८८ ॥
एष रावणिरापादि वानराणां भयङ्करः ।
आह्वताथ स काकुत्स्थं धनुश्चापुस्फुरद्गुरु ॥ ८९ ॥

तुषत्, उग्रेण तपसा आराधनात् तोषितवान् तुष प्रीतौ यन्तः महा-
स्त्राणि दिव्यानि चाशिश्रिष्ट शिचते स्म शिक्षविद्योपादाने रणे च राव-
णानरक्षीत्, रक्षति स्म ॥ ८७ ॥ ज०म०

अतस्तम्भदित्य इ दि । अयं वज्रं स्तम्भवामास निवारितवान् ष्टभि-
स्तभिङ् लस्थे अप्लाटङ् स्वयम्भुवं ब्रह्माणं तोषितवान् तपसेत्यर्थात्,
स्वयमात्मना भुवं पालनेन तोषितवानित्यन्ये । तुष तुष्टौ आन्तादङ्,
ङङो ह्रस्वत्वे खेः सन्वदिति दीर्घः महास्त्राणि अशिश्रिष्ट शिचते स्म
शिचङ् शिक्षणे रावणान् रक्षितवांश्च ॥ ८७ ॥ भ०

अध्यगीष्टेत्यादि । अर्थशास्त्राणि पराभिसन्धानार्थानि अध्यगीष्ट
अधीतवान् विभाषा लुङ्लृङोरिति इङोगाङादेशः यमस्याप्ययं विक्रम-
मह्नोष्ट अपनीतवान्, ह्नुङ् अपनयने अहलन्तत्वात्सिचो न कित्त्वं देवाह-
वेष्वदीपिष्ट शोभितः अस्य च साध्वसं भयं नाजनिष्ट न जातं दीपजने-
त्यादिना चिण्वद्भावपक्षे रूपम् ॥ ८८ ॥ ज०म०

अध्यगीष्टेत्यादि । अर्थोपयुक्तानि शास्त्राणि असौ चाधीतवान्,
गीङ्घ्रीध्योर्वा यमस्य विक्रममपह्नुतवान्, ह्नुङ् चौर्य्ये देवाहवेषु असौ
दीप्यते स्म अस्य साध्वसं भयं कुत्रापि न जातं पदस्तनीण्, वे इत्यादे-
रप्रवृत्तिपक्षे सिः ॥ ८८ ॥ भ०

एष इत्यादि । य एवं स एष रावणिः आपादि अस्माकं समीप-
मागतः पद गतौ चिण्, ते पद इति चिण् यतो रावणिर्वानराणां भय-
ङ्करः अथ सोऽतिकायः समीपमागतः काकुत्स्थमाह्वत युद्धायाहूतवान्
आत्मनेपदेष्वन्यतरस्यामित्यङ्, धनुश्च गुरु महदपुस्फुरत् स्फारितवान्
चिस्फुरोर्णावित्यात्वम् ॥ ८९ ॥ ज०म०

सौमित्रिः सर्पवत् सिंहमार्दिदत्तं महाहवे ।
तौ प्रावीवृततां जेतुं शरजालान्यनेकशः ॥ ९० ॥
अच्छैत्ताञ्च महात्मानौ चिरमश्रमतां न च ।
तथा तावास्थतां बाणानतानिष्टां तमो यथा ॥ ९१ ॥

एष इत्यादि । य एवंभूतः स एव रावणपुत्त्रोऽतिकाय आयादि आगतः योऽपदङ् गतौ पदस्तण्वे यतो यस्माद्वानराणां भयमुत्पन्नमिति विशेषणेनाख्यायीति सम्बन्धः भयङ्कर इति क्वचित् पाठः सोऽतिकायायाम् आह्वत स्पर्द्धायामाङ इति सं वक्तारस्येति ङः गुरु महद्धनुः स्फारितवान् स्फुरधि स्फूर्त्तौ ण्यन्तादङ् क्रीजीङ इत्यादिना पाचिक उकारस्याकारः ॥ ८९ ॥ भ०

सौमित्रिरित्यादि । यथा सर्पः सिंहं गच्छति तद्वत्तमतिकायमार्दिदत् गतवान् अर्द गतौ अर्दनमर्दः तत्करोतीति णिच् तदन्ताच्चुङि रूपं अर्द हिंसायामिति चौरादिको वा तौ सौमित्र्यतिकायौ जेतुं शरजालानि प्रावीवृततां बहूनि प्रवर्त्तितवन्तौ उर्ऋदिति णौ चङ्युपधाया अपवादऋकारः ॥ ९० ॥ ज०म०

सौमित्रिरित्यादि । लक्ष्मणस्तं महाहवे आर्दिदत् पीड़ितवान् सिंहं सर्प इव एकगुहास्थतया तयोर्विरोधात् अर्दक् च चकाराद्वधे चुरादिः ण्यन्तादङ् अर्द यातनागतियाचन इत्यस्मात् चुर्ण्योर्णिच्यत्तस्य योगविभागाद्वा णिः घञन्तात् णिरिति केचित् । तौ लक्ष्मणातिकायौ जेतुं अनेकशो बहूनि शरजालानि प्रवर्त्तितवन्तौ वृतङ् वर्त्तने ण्यन्तादङ् वर्द्ध ञोधुरिति पक्षे गुणाभावः ॥ ९० ॥ भ०

अच्छैत्तामित्यादि । तौ च महात्मानौ परस्परस्य शरजालानि अच्छैत्तां छिन्नवन्तौ इरितो वेत्यङभावपक्षे रूपं झलोझलीति सिचोलोपः चिरं चिरेणापि नाश्रमतां न श्रान्तौ श्रमिः पुषादिः तौ तथा वाणानास्थतां क्षिप्तवन्तौ अस्यति वक्तीत्यङ् अस्यतेस्थुक् यथा अन्धकारमतानिष्टां विस्तारितवन्तौ अतो हलादेर्लघोरिति वृद्धिविकल्पः ॥ ९१ ॥ ज०म०

सौर्य्याग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ ।
ते चोपागमतां नाशं समासाद्य परस्परम् ॥ ९२ ॥
अविभ्रजत्ततः शस्त्रमैषीकं राक्षसो रणे ।
तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३ ॥

अच्छैत्तामित्यादि । तौ च महात्मानौ महायत्नौ परस्परं शरजालानि च्छिन्नवन्तौ छिदिरधोऽच्छेदे ङाभावपक्षे चिः अनिस्त्वाद्वृद्धिः भसन्त्वाच्चसोति सिलोपः आत्मा यत्नो धृतिर्बुद्धिरित्यमरः । चिरं बहुनापि कालेन न श्रान्तौ श्रमुतपः खेदयोः तथा तौ बाणान् चिप्तवन्तौ यथा तमोऽन्धकारं विस्तारितवन्तौ अस्यु क्षेपे वक्तास्येति ङः वच्यस्यविपतामित्यस्यादेशः तनदुञ् विस्तृतौ हमादेः सेन इति पक्षे चिः ॥ ९१ ॥ भ०

सौर्य्याग्नेये इत्यादि । राक्षसः सौर्य्यमस्त्रं व्यकारीत् विक्षिप्तवान् कृ विक्षेपे लक्ष्मणोऽप्याग्नेयं इतीव तौ व्यकारिष्टां ते चास्त्रे परस्परमासाद्य प्राप्य नाशमुपागमतां लृदित्वादङ् ॥ ९२ ॥ ज० म०

सौर्य्येत्यादि । राक्षसलक्ष्मणौ सौर्य्याग्नेये अस्त्रे यथाक्रमं व्यकारिष्टां कृप विक्षेपे सूर्य्यो देवताऽस्येति विकारसङ्घेत्यादिना अणः सौर्य्येति कचित्पाठः अग्निर्देवताऽस्येति पूर्वेण ण्यः ते चास्त्रे परस्परं समासाद्य प्राप्य नाशमुपागमतां प्रापतुः लृदित्त्वाद्गमेर्ङः ॥ ९२ ॥ भ०

अविभ्रजदित्यादि । ततोऽनन्तरं रावणिः ऐषीकमस्त्रं इषीकाया इदं तत्सर्वस्रोतःसु प्रविशत् जीवितमपहरति रणे अविभ्रजत् दीपितवान् भ्राजभाषेत्यादिना उपधाया ह्रस्वत्वं तदपि अध्वसत् ध्वस्तं ध्वसिद्युतादिः लक्ष्मणेरितं लक्ष्मणप्रेरितं माहेन्द्रमस्त्रमासाद्य तद्गतिरोधं कृत्वा ध्वंसयति ॥ ९३ ॥ ज० म०

अविभ्रजदित्यादि । तदनन्तरं रावणपुत्त्र ऐषीकमस्त्रं रणे भ्राजयामास भ्राजभासेति पाक्षिक उङो ह्रस्वः लक्ष्मणेरितं क्षिप्तं माहेन्द्रमस्त्रमासाद्य तदपि ऐषीकमस्त्रं ध्वस्तं महेन्द्रो देवताऽस्येति ण्यः ॥ ९३ ॥ भ०

ततः सौमित्रिरस्मार्षीददेविष्ट च दुर्ज्जयम् ।
ब्रह्मास्त्रं तेन मूर्द्धानमदध्वंसन्नरद्विषः ॥ ६४ ॥
ततोऽक्रन्दीद्दशग्रीवस्तमाशिश्वसदिन्द्रजित् ।
निरयासीच्च संक्रुद्धः प्रार्चिचच्च स्वयम्भुवम् ॥ ६५ ॥

तत इत्यादि । अनन्तरं सौमित्रिः दुर्जयं अनभिभवनीयं ब्रह्मास्त्रमस्मार्षीत् स्मरति स्म सिचि वृद्धिः तच्च स्मरणादुपस्थितं अदेविष्ट द्योतते स्म तेष्टदेष्टदेवन इति अनुदात्तेत् द्योतने द्रष्टव्यः देवनस्यानेकार्थत्वात् तेन च ब्रह्मास्त्रेण प्रयोजककर्त्रा नरद्विषो राक्षसस्य मूर्द्धानमदध्वंसत् पातितवान् सौमित्रिः हेतुमण्यन्ताच्चङि रूपम् ॥६४॥ ज०म०

तत इत्यादि । तदनन्तरं सौमित्रिर्दुर्जयं ब्रह्मास्त्रं स्मृतवान् स्मृ स्मृतौ स्मरणादुपस्थितं तत् अदेविष्ट शोभते स्म किं वा स्मरणादुपस्थिते ब्रह्मास्त्रे सौमित्रिर्हर्षात् शोभते स्म जेतुमिच्छति स्मेत्याद्यर्थो वा देवङ् देवने देवनशब्देन दिवधातोरर्था जिगीषाद्या उच्यन्ते तेन ब्रह्मास्त्रेण प्रयोज्यकर्त्रा नरद्विषो राक्षसस्य मूर्द्धानं लक्ष्मणो ध्वंसयामास ध्वन्सु लङ् गतौ भ्रंशे अत्रन्तादङ् ॥ ६४ ॥ भ०

तत इत्यादि । ततः सुतमरणानन्तरं दशग्रीवः अक्रन्दीत् रोदिति स्म तञ्च क्रन्दन्तमिन्द्रजिदाशिश्वसत् आश्वासितवान् मयि जीवति किं पृथग्जनवद्रोदिषीति हेतुमण्यन्तस्य चङि रूपं संक्रुद्धश्च निरयासीत् रावणगृहान्निर्गतः यासप्रपणे निर्गतश्च स्वगृहे स्वयम्भुवं ब्रह्माणं प्रार्चिचत् पूजितवान् अर्च पूजायामिति चुरादिः चङि अजादिद्विर्वचनम् ॥ ६५ ॥ ज० म०

तत इत्यादि । पुत्त्रवधानन्तरं दशग्रीवः क्रन्दति स्म तं रुदन्तं इन्द्रजिदाश्वासितवान् मयि स्थिते [illegible] चिन्तेति श्वस प्राणने अन्तादङ् स च संक्रुद्धः [illegible] निर्गतः यमरक्षनयात इति यातेरिमुसनौ सोऽन्तः स्वगृहान्निर्यातः सन् स्वयम्भुवं ब्रह्माणं अर्चितवान् अर्चक् पूजे चुरादिण्यन्तादङ् ॥ ६५ ॥ भ०

अहौषीत् कृष्णवर्त्मानं समयष्टास्त्रमण्डलम् ।
सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनञ्च जयावहम् ॥ ९६ ॥
तमध्यासिष्ट दीप्राग्रममोदिष्ट च रावणिः ।
छन्नरूपस्ततोऽकर्तीद्देहान्रावणविद्विषाम् ॥ ९७ ॥
सप्तषष्टिं प्लवङ्गानां कोटीर्बाणैरस्तुपत् ।
निशान्ते रावणिः क्रुद्धो राघवौ च व्यमूमुहत् ॥ ९८ ॥

अहौषीदित्यादि । कृष्णवर्त्मानमग्निमहौषीत् हव्येन प्रीणितवानित्यर्थः । अस्त्रमण्डलं आयुधग्रामं समयष्ट पूजितवान् स इन्द्रजित् ब्रह्मणः सकाशात् जयावहमस्त्रं स्यन्दनं चालब्ध लब्धवान् झलो झलीति सिचो लोपः ॥ ९६ ॥ ज० म०

अहौषीदित्यादि । इन्द्रजित् कृष्णवर्त्मानमग्निं हुतवान् हुलि होमेऽदने अस्त्रमण्डलं समयष्ट पूजितवान् यजैऔ देवार्च्चादानसङ्गतिकृतौ स ब्रह्मणः सकाशात् जयावहं जयजनकं अस्त्रं रथञ्च लब्धवान् लभङौङ्प्राप्तौ झषस्तादिति सिलोपः ॥ ९६ ॥ भ०

तमित्यादि । तं स्यन्दनं दीप्राग्रं उपरिभागस्य रत्नप्रचुरत्वात् अध्यासिष्ट अध्यासितवान् अधिशीङिति कर्मसंज्ञा तत्रस्थश्च रावणिरिन्द्रजित् अमोदिष्ट हृष्टवान् ततोऽसौ छन्नरूपः अदृश्यः सन् रावणविद्विषां वानराणां देहानकर्त्तीत् छिन्नवान् कृती छेदने सेसिचीत्यादिना सिचोऽन्यत्र विकल्पः रावणिविद्विषामिति पाठान्तरं तत्र देवान्तकादिविद्विषामित्यर्थः ॥ ९७ ॥ ज० म०

तमित्यादि । रावणपुत्र इन्द्रजित् तं स्यन्दनं दीप्राग्रमुपरिभागस्य रत्नमयत्वात् अध्यासितवान् जिरासङ् उपवेशे कर्मक्रियेत्यादिना इस्य दत्वं अमोदिष्ट च हर्षं प्राप च जिमुदङ् हर्षे असौ छन्नरूपोऽदृश्यः सन् रावणविद्विषां वानराणां देहान् कृन्तति स्म कृतीश्छेदे रावणिविद्विषामिति पाठे देवान्तकादिशत्रूणामित्यर्थः ॥ ९७ ॥ भ०

सप्तषष्टिमित्यादि । वानराणां कोटिं सप्तषष्टिं बाणैरस्तुपत् स्ता-

अपिस्फवत् स्वसामर्थ्यमगूहीच्छायकैर्दिशः ।
अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणम् ॥ ९९ ॥
विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ ।
अपारीत् स स्तवीतोल्को हतशेषान् प्लवङ्गमान् ॥१००॥

पितवान् व्यापादितवानित्यर्थः स्वापेश्चङीति सम्प्रसारणं निशान्ते च निशावसाने रावणिः क्रुद्धः सन् राघवौ व्यमूमुहत् मोहितवान् मुह वैचित्ये णौ चङि रूपम् ॥ ९८ ॥ ज० म०

सप्तषष्टिमित्यादि । प्लवङ्गानां सप्ताधिकषष्टिं कोटीर्बाणैरिन्द्रजित् स्वापयामास स्वपोषमनुष्ठितये ङयत्वादङ् स्वपोजिरिति जिः निशाया अन्ते रावणपुत्रः क्रुद्धः सन् राघवावपि मोहयामास मुह जिह वैचित्ये ण्यन्तादङ् ॥ ९८ ॥ म०

अपिस्फवदित्यादि । तौ मोहयित्वा आत्मीयं सामर्थ्यमपिस्फवत् बर्द्धयति स्म दैवस्तादयोऽहमिति स्फायोव इति णौ वत्वं दिशः शायकैरगूहीत् स्थादितवान् नेटीति वृद्धिप्रतिषेधः ह्यन्तत्वात् । महाघोरञ्चातिरौद्रं शब्दमघोरीत् सूक्तवान् गत्वा च लङ्कां रावणं प्रैषीत् प्रेषितवान् गच्छ तात ! ममाद्भुतपराक्रमं द्रष्टुमिति इषु गतौ ॥ ९९ ॥ ज०म०

अपीत्यादि । इन्द्रजिदात्मीयं सामर्थ्यं बर्द्धयामास स्फायेङ् संवृद्धौ जिः पातिस्फायोरिति वङ् शायकैर्बाणैः शत्रून् अगूहीत् आच्छादितवान् गुहू संवृतौ ऊदित्वादिम् गुहोणोऽः महारौद्रं अघोरीत् शब्दं चक्रे घुरशब्दनौ भीमार्थे लङ्कां गत्वा रावणं प्रीणाति स्म प्रीञ तर्पणे प्रीणङकान्तौ चेत्यस्य वा रूपं अयमपि चकारात्तर्पणे किं वा रावणं प्रेरयामास जितशत्रून् द्रष्टुमित्यर्थात् इष्य सर्पणे ॥ ९९ ॥ म०

विभीषण इत्यादि । ततस्तस्मिन् काले विभीषणः रामलक्ष्मणौ सस्फुरौ चलन्तौ अबोधि बुद्धवान् जीवितादिति दीपजनेत्यादिना कर्त्तरि चिण् स्फुरणं स्फुरः घञर्थे कविधानं यदुक्तं स्थास्नापाव्यधिहनियुध्यर्थमिति तदुपलक्षणं न परिगणनं स विभीषणः अल्कारात्

मा शोचिष्ट रघुव्याघ्रौ नाम्रषातामिति ब्रुवन् ।
अबाबुद्ध स नीलादीन् निहतान् कपियूथपान् ॥१०१॥
तत्रैषज्जाम्बवान् प्राणीदुदमीलीच्च लोचने ।
पौलस्त्यश्चागदीत् कच्चिदजीवीन्मारुतात्मजः ॥ १०२ ॥

गृहीतोत्कः सन् हतशेषान् प्लवङ्गमानपारीत् मा भैष्टेति प्रीणितवान् ॥ १०० ॥ ज० म०

विभीषण इत्यादि । तदनन्तरं स विभीषणो रामलक्ष्मणौ मस्फुरौ स्फुरन्तौ अबोधि ज्ञातवान् पदस्तनीणुभे इत्यादिना इण् स्फुरणे स्फुर्त्ती पचादित्वादच् कर्त्ता गुरोश्चहलीति नियमात् गुणाभावः इगुपधत्वात् कृगृज्ञा प्रीजुङ इति कप्रत्ययो वा अन्ये तु भावेऽपि कः प्रत्ययः स्यादित्युक्त्वा मस्फुराविग्रव मह्यब्देन समासं कुर्वन्ति स विभीषणोऽम्बकारात् गृहीतोल्को हतशेषान् वानरान् अपारीत् अभयदानेन पालयामास पृ पालने ॥ १०० ॥ भ०

मा शोचिष्टेत्यादि । यूयं मा शोचिष्ट शोकं मा कुरुत माङि लुङ् यस्माद्रघुव्याघ्रौ नाम्रषातां न मृतौ इत्येवं ब्रुवन् अपारीदिति योज्यं ये च निहतास्तान्नीलादीन् कपियूथपान् स विभीषणः परिभ्रमन् अबाबुद्ध अनबुद्धवान् एते हता इति दीपेत्यादिना चिणो विकल्पितत्वात् भावपक्षे रूपम् ॥ १०१ ॥ ज० म०

मा शोचिष्टेत्यादि । यूयं मा शोकं कुरुत शुच शोके रघुश्रेष्ठौ रामलक्ष्मणौ माम्रषातां न मृतौ इति ब्रुवन् अपारीदिति पूर्वश्लोकेन सम्बन्धः अथ नीलादीन् कपियूथपान् निहतान् बुद्धवान् पदस्तनीणुभे इत्यस्याप्रवृत्तिपक्षे सिः झलस्यादिति सिलोपः ॥ १०१ ॥ भ०

तत्रेत्यादि । तत्र तेषु जाम्बवान् ईषन्मनाक् प्राणीत् उच्छ्वसिति स्म अन प्राणने अनितेरिति णत्वं लोचने च उदमीलत् उन्मीलितवान् मील्ल्मील निमेषणे पौलस्त्यश्च विभीषणमगदीत् गदितवान् अतो हलादेरट्टवी रूपं कच्चित् किं हनूमान् अजीवीत् जीवितवान् न मृत इति ॥ १०२ ॥ ज० म०

तस्य क्षेमे महाराज ! नाम्लास्मह्यखिला वयम् ।
पौलस्त्योऽशिश्रवत्तञ्च जीवन्तं पवनात्मजम् ॥ १०३ ॥
आयिष्ट मारुतिस्तत्र तौ चाप्यहृषतां ततः ।
प्राहेष्टां हिमवत्पृष्ठे सर्व्वौषधिगिरिं ततः ॥ १०४ ॥

तत्रेत्यादि । तेषु मध्ये जाम्बवान् ईषत्प्राणीत् उच्छ्वसिति स्म अनप्लुप्राणने प्राग्वन्नोश इत्यादिना पाक्षिकं णत्वं लोचने अमीमिलत् मीलयामास मील्निमेषे अग्लादङ्भ्राजभासेति पाक्षिक उङो ह्रस्वः उदमीलीश्चेति पाठे सिः ईमिमौ उदमीलश्चेति पाठोऽशुद्ध एव ङनिय-माभावात् न च शप् अध्यधिकारात् न च पश्चरः शिश्चेति अरत्वेऽपि कचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति शप् वक्तुं शक्यः कुत्रचित् केनचिदनुक्तत्वात् पुषादिपाठः स्वीकर्त्तव्य इत्यन्ये । पौलस्त्यं विभीषणञ्च गदितवान् गद भाषे हसादेः सेन इति पक्षे ञिः किमगदीदित्याह मारुतात्मजो हनूमान् जीवितवान् कच्चित् कामप्रवेदने जीवत्कमाख्ये आशंसायां टी अभिधानात् माटीवेत्यत्र योगविभागाद्वा ॥१०२॥ भ०

तस्येत्यादि । तस्य हनूमतः क्षेमे जीवितत्वे सति हे महाराज ! अखिलाः सर्व एव वयं नाम्लास्महि न म्लाना इति आशंसायां भूतवच्चेति लुङ् एवमुक्तः पौलस्त्यो जीवन्तं पवनात्मजं तमशिश्रवत् श्रावितवान् शृणोतेर्ण्यन्ताच्चङि सन्वद्भावे अभ्यासे वर्णस्य स्रवति शृणोतीत्यादिना इत्वपक्षे रूपम् ॥ १०३ ॥ ज० म०

तस्येत्यादि । हे महाराज ! विभीषण ! हनूमतः क्षेमे कुशले सति सर्व्व एव वयं न म्लाताः म्लङ्टीद्घेमं इंगुङ्स्मढीति क्त्वाद्गुणाभावः अत्राप्याशंसायां टीत्यन्ये । एवमुक्तः पौलस्त्यो विभीषणो जीवन्तं पवना-त्मजं तं जाम्बवन्तं श्रावयामास श्रोर्ग्रन्तादङ् स्रुस्रुद्रु इत्यादिना वेत्वतः पाक्षिकमित्वं घोऔञेरिति प्रयोज्यस्य कर्मत्वम् ॥ १०३ ॥ भ०

आयिष्टेत्यादि । तत्र पौलस्त्याद्गतो मारुतिरायिष्ट आगतवान् अयगतावाङ् पूर्वः ततोऽनन्तरं तौ जाम्बवद्विभीषणौ अहृषातां हृष्टवन्तौ हृष तुष्टौ पुषादिः ततस्तौ हृष्टौ हनूमन्तमिति वक्ष्यमाणेन सम्बन्धः

तौ हनूमन्तमानेतुमोषधीं मृतजीविनीम् ।
सन्धानकरणीं चान्यां विशल्यकरणीं तथा ॥ १०५ ॥
प्रोदपाति नभस्तेन स च प्रापि महागिरिः ।
यस्मिन्नज्वलिषू रात्रौ महौषध्यः सहस्रशः ॥ १०६ ॥
निरचायि यदा भेदो नौषधीनां हनूमता ।

प्राहैष्टां प्रहितवन्तौ षिचि वृद्धिः हि गतौ हिमवत्पृष्ठे हिमवतः पृष्ठे सर्व्वौषधिगिरिं सर्व्वा ओषधयो यस्मिन्निति ॥ १०४ ॥ ज० म०

आयिष्टेत्यादि । तत्र देशे पौलस्त्येनाहतो मारुतिरांहिष्ट आगतः अहिङ् गतौ आयिष्टेति पाठे अयङ् गतौ ततोऽनन्तरं तौ च जाम्बवद्विभीषणौ हर्षं प्रापतुः हृषत्वि तुष्टौ पुषादिः ततस्तौ हिमालयस्य पृष्ठभागे सर्व्वा ओषधयो यत्र तं गिरिं प्राहैष्टां प्रस्थापितवन्तौ हनूमन्तमितुग्रत्तरश्लोकेनान्वयः हिन बर्द्धने गतौ ॥ १०४ ॥ भ०

ताविल्यादि । या मृतं जीवयति या च चतस्य सन्धानं करोति तथा विशल्यञ्च या करोति कृत्यल्युटौ बहुलं तामोषधिमानेतुं प्राहैष्टामिति योज्यं ओषधेश्च विभक्तावप्रथमायामिति दीर्घत्वम् ॥ १०५ ॥ ज० म०

ताविल्यादि । या मृतं जीवति या च चतस्य सन्धानं करोति या च विशल्यं करोति ता ओषधीरानेतुं हनूमन्तं तौ प्राहैष्टामिति पूर्व्वेणान्वयः कर्मा वेऽमी इति कर्त्तरि अनट् नन्द्यादिर्वा ॥ १०५ ॥ भ०

प्रोदपातीत्यादि । तेन हनूमता नभः प्रोदपाति उत्पतितं स च महागिरिस्तेन प्रापि प्राप्तः कर्मणि लुङ् यस्मिन् गिरौ महौषध्यः सहस्रशोऽनेकधा रात्रावज्ज्वलिषुः दीप्यन्ते स्म अतो लान्तस्येति वृद्धिः ॥ १०६ ॥ ज० म०

प्रोदपातीत्यादि । तेन हनूमता नभ आकाशमुत्पतितं स च महागिरिः प्राप्तः उभयत्र कर्मणि लुङ् यस्मिन्महागिरौ सहस्रशो महौषध्यो रात्रौ ज्वलन्ति स्म व्रजवदेति वृद्धिः ॥ १०६ ॥ भ०

निरचायीत्यादि । यदा हनूमता ओषधीनां भेदो न निरचायि

सर्व एव समाहारि तदा शैलः सहौषधिः ॥ १०७ ॥

प्राणिषुर्निहताः केचित् केचित्तु प्रोदमीलिषुः ।
तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चापरे ॥ १०८ ॥

अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा ।
एवं तेऽचेतिषुः सर्वे वीर्य्यञ्चाधिषताधिकम् ॥ १०९ ॥

विशेषतो न निश्चितः तदा कृत्स्न एव शैलः सहौषधिरोषधिसहितः समाहारि समानीतः ॥ १०७ ॥ ज० म०

निरचायीत्यादि । यदा हनुमता ओषधीनां प्रागुक्तानां भेदो न निश्चितः तदा ओषधिसहितः समस्त एव शैलः समाहृतः समानीतः उभयत्र कर्मणीण् लङः सोवेति पचे मादेशाभावः ॥ १०७ ॥ भ०

प्राणिषुरित्यादि । तदा ओषधिसन्निधानात् ते निहताः केचिद्‌योधाः प्राणिषुः उच्छ्वसितवन्तः केचित्तु प्रोदमीलिषुः उन्मीलितलोचना बभूवुः अन्ये तमो मोहमहासिषुः त्यक्तवन्तः यमरमेति सगिटौ तथान्येऽहासिषुरिति पाठान्तरं ते तथाभूतमात्मानं दृष्ट्वा सविलासं हसितवन्तः अपरे व्यजृम्भिषत जृम्भिकां कृतवन्तः जृम्भजृम्भिगात्रविनाम इत्यात्मनेपदी ॥ १०८ ॥ ज० म०

प्राणिषुरित्यादि । प्रभावान्निहताः केचिद्‌योधाः प्राणिषुरुच्छ्वसिताः केचिच्च उन्मीलितनेत्रा अभूवन् अन्ये तमो मोहमहासिषुस्त्यक्तवन्तः ओहाङ् त्यागे यमरमेति इसगनौ ततोऽन्येऽहसिषुरिति पाठे अनन्तरं आत्मानं दृष्ट्वा हसितवन्त इत्यर्थः । हस हासे अपरे जृम्भां कृतवन्तः जृम्भिङ च चकारात् जृम्भ ॥ १०८ ॥ भ०

अजिघ्रपन्नित्यादि । तथान्यान् लब्धसंज्ञानोषधीरजिघ्रपन् घ्रापितवन्तः नासिकयाभ्यवहारितवन्तः इत्यर्थः । गतिबुद्धीत्यादिना प्रत्यवसाने कर्मसंज्ञा जिघ्रतेर्वेति वोपधाया इत्यकारः तथालिपन् लिप्तवन्तः अन्यानोषधीभिरलम्पीत् लिपिसिचीत्यङ् एवमनेन प्रकारेण सर्वेऽचेतिषुः संज्ञां लब्धवन्तः चितीसंज्ञाने अधिकञ्च वीर्य्यमोषधिबलादधिषत दधति स्म ध्याध्योरिच् ॥ १०९ ॥ ज०म०

अजिह्लदत् स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन् ।
हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम् ॥ ११० ॥
समनालीत्ततः सैन्यममार्ज्जीद्भल्लतोमरम् ।
अमार्क्षीच्चासिपत्रादीनवभासत् परश्वधान् ॥ १११ ॥

अजिग्रपन्नित्यादि । अन्ये लब्धसंज्ञाः सन्तः अन्यान् ओषधीर्घ्रापितवन्तः घ्राणग्रहणे तच्च नासिकया भोजनं घ्राणविशेषो वेति घोऔणेत्यादिना प्रयोज्यस्य कर्म्मत्वं घोरिति पाक्षिकमुङ् ह्रस्वं अन्ये अलिपन् लिप्तवन्तः शरीरमोषधीभिरित्यर्थात् कर्त्तरेश्येति ङः एवमनेन प्रकारेण ते सर्व्वेऽचेतिषुः संज्ञां प्रापुः चिती संज्ञाने अधिकञ्च वीर्य्यं शक्तिं दधति स्म स्यादौ डिण्टीमे न णुः ॥ १०९ ॥ भ०

अजिह्लददित्यादि । एवञ्च सति हनूमान् काकुत्स्थावजिह्लदत् ह्लादितवान् ह्लादी सुखे शत्रन्तः शेषांश्च कपीनजीजिवत् जीवयति स्म अथ ते जीविताः सन्तः लङ्कां द्रुतमदीदिपन् दीपितवन्तः भ्राजेत्यादिना ह्रस्वपक्षे रूपम् ॥ ११० ॥ ज०म०

अजिह्लददित्यादि । स हनूमान् रामलक्ष्मणौ ह्लादयामास ह्लादीङ् मोदने ञ्यन्तादङ् शेषांश्च कपीन् जीवयति स्म भ्राजभासेत्यादिना पक्षे उङो ह्रस्वः अथ जीविताः सन्तः ते द्रुतं लङ्कां वह्निना दीपयन्ति स्म पूर्व्ववदुङो ह्रस्वः ॥ ११० ॥ भ०

समनालीदित्यादि । ततः सैन्यं समनालीत् सन्नद्धं नद्धोध इति धत्वं हलन्तलक्षणा वृद्धिः भल्लतोमरममार्ज्जीत् शोधितवत् मृजेरूदित्वात् पक्षे रूपं असिपत्रादीनमार्क्षीत् इडभावे रूपं उभयत्रापि मृजेर्वृद्धिः परश्वधानवभासत् दीपितवान् भ्राजभासेति ह्रस्वपक्षे रूपं अभासीच्चेति पाठान्तरं तत्रान्तर्भावितो ण्यर्थः ॥ १११ ॥ ज०म०

समनालीदित्यादि । ततोऽनन्तरं रावणस्य सैन्यं समनालीत् सन्नद्धं णह्वञ्जो बन्धे अनिटत्वात्वृद्धिः नह्वोधङ्भौ भल्लं तोमरञ्चास्त्रं अमार्ज्जीत् शोधितवत् मृजलूष शुद्धौ ऊदित्वादिट् मृजोऽकङितीति विः असिप-

कुम्भकर्णसुतौ तत्र समनद्धां महाबलौ ।
निकुम्भश्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान् ॥ ११२ ॥
अगोपिष्टां पुरीं लङ्कामगोप्तां रक्षसां बलम् ।
अत्याक्तामायुधानीकमनैष्टाञ्च क्षयं द्विषः ॥ ११३ ॥
अकोकूयिष्ट तत् सैन्यं प्रपलायिष्ट चाकुलम् ।
अच्युतच्च क्षतं रक्तं हतश्चाध्यशयिष्ट गाम् ॥ ११४ ॥

त्वादीन् खड्गादींश्च अमार्क्षीत् इमोऽभावपक्षे रूपं मृजेर्जिति षड्-ढोः कः परश्वधान् अवभासत् भाष्टङ् दीप्तौ अग्लादङ् भ्राजभासेति ह्रस्वाभावपक्षे रूपं अभासीच्चेति पाठे भातेरन्तर्भूतण्यर्थत्वम् ॥१११॥भ०

कुम्भकर्णेत्यादि । कुम्भश्चैव निकुम्भश्च कुम्भकर्णसुतौ महाबलौ तत्र सैन्ये समनद्धां सन्नद्धौ तौ च प्लवङ्गमान् प्रापतां प्राप्तवन्तौ लृदित्वादङ् ॥ ११२ ॥ ज० स०

कुम्भकर्णेत्यादि । निकुम्भकुम्भौ कुम्भकर्णसुतौ महाबलौ सन्नद्धौ नह्येः पूर्ववत् ध्यङ् तौ वानरान् प्राप्तौ आप्लृ लृणोकि व्यापने लृदित्त्वात् ङः ॥ ११२ ॥ भ०

अगोपिष्टामित्यादि । लङ्काञ्च पुरीं अगोपिष्टां रक्षितवन्तौ गुपे-रूदित्त्वादिट् पक्षे रूपं अगोप्तामितीडभावपक्षे रूपं हलन्तलक्षणा वृद्धिः झलोझलीति सिचो लोपः आयुधानीकं आयुधसमूहमत्याक्तां त्यक्तवन्तौ विसृष्टवन्तौ त्यजहानौ पूर्ववद्वृद्धिः सिचो लोपः द्विषः शत्रून् क्षयमनैष्टां नीतवन्तौ सिचि वृद्धिः ॥ ११३ ॥ ज० भ०

अगोपिष्टामित्यादि । तौ लङ्कां पुरीमगोपिष्टां रक्षितवन्तौ रक्षसां सैन्यञ्च अगोप्तां गुपूरक्षणे वाऽरे इति आयाभावपक्षे ऊदित्वादिट् अनि-ट्पक्षे वजवदेति व्रिः झलस्थादिति सेर्लोपः आयुधानीकमस्त्रसमूहं त्यक्तवन्तौ कपीनामुपरीत्यर्थात् त्यजौ हानौ द्विषः शत्रून् क्षयं नीत-वन्तौ णीञ्प्राप्णां सौ व्रिः ॥ ११३ ॥ भ०

अकोकूयिष्टेत्यादि । तत् सैन्यं प्लवङ्गमानां भयादकोकूयिष्ट भृशं

अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ ।
अयाहींद्वालिनः पुत्रं प्रजङ्घोऽपि समत्सरः ॥ ११५ ॥
तस्याप्यवेभिदिष्टासौ मूर्द्धानं मुष्टिनाङ्गदः ।

शब्दं कृतवत् कुङ्शब्द इत्यस्मात् यङन्तादभ्यासस्य न कवतेर्यङीति कुङः
कुत्वप्रतिषेधः ततो यङन्तात् लङ् प्रपलायिष्ट पलायते स्म अजादेर-
ङ्गस्य आङ्जादीनां परयोरनङ्गत्वाच्च उपसर्गस्यायताविति लत्वं क्षतञ्च
खण्डितञ्च सत् रक्तमच्युतत् चरति स्म द्वरितो वेत्यङ् हतञ्च निहतं
सत् गामध्याशयिष्ट भूमौ पतितं अधिशीङिति कर्मसंज्ञा ॥ ११४ ॥
ज० म०

अकोकूयिष्टेत्यादि । तत् सैन्यं भयादकोकूयिष्ट भृशं शब्दं चकार
कुङ् शब्दे मूत्रसूत्रेत्यादिना यङ् कोश्च्वेति खेः प्राप्तिकं चुत्वं तत्र
तद्भावः खेर्णुः घोऽजय्यरे चाकुलं तत् सैन्यं पलायितञ्च क्षतं खण्डितं
तत् सैन्यं रक्तं अच्युतत् क्षरति स्म द्वरित्वात् ङः हतं सत् गां अध्य-
शयिष्ट भूमौ पतितं कर्म्म क्रियेति अधिशीङः आधारस्य कर्मत्वम्
॥ ११४ ॥ भ०

अङ्गदेनेत्यादि । अकम्पनः कम्पनश्च तौ ज्येष्ठत्वात् पूर्व्वनिपातः
युधि संग्रामे अङ्गदेन अहसातां कर्म्मणि लुङ् आत्मनेपदेष्वन्यतरस्या-
मिति वधादेशाभावपक्षे रूपं प्रजङ्घो नाम राक्षसः समत्सरः सक्रोधः
वालिनः पुत्रमभ्याहींत् प्रहृतवान् अर्द हिंसायाम् ॥ ११५ ॥ ज० म०

अङ्गदेनेत्यादि । तावकम्पनकम्पनौ युधि संग्रामे अङ्गदेन हतौ
हन्तेः कर्मणि द्विवचनं हनवधटीति मे पक्षे वधादेशाभावः वनतना-
द्यनिसामिति नस्य लोपः अनन्तरं प्रजङ्घो राक्षसो मात्सर्य्यान्वितः सन्
वालिनः पुत्रं अभ्याहींत् जघान अर्दञ वधे आभिमुख्येन जगाम इति
वा अर्द यातनागतियाचने अथ मत्सरः अन्यशुभद्वेषे मात्सर्ये कृपणे
क्रुधीति विश्वः ॥ ११५ ॥ भ०

तस्येत्यादि । प्रजङ्घस्यापि मूर्द्धानमसावङ्गदो मुष्टिनावेभिदिष्ट

अहार्षीच्च शिरः क्षिप्रं यूपाक्षस्य निराकुलः ॥ ११६ ॥
शरीरं लोहिताक्षस्य न्यभाङ्क्षीद्द्विविदस्तदा ।
क्रुद्धः कुम्भस्ततोऽभैत्सीत् मैन्दं सद्विविदं शरैः ॥११७॥
आघूर्णिष्टां क्षतौ क्ष्मां च ताभाशिश्रियतामुभौ ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं बालिसुतो नगैः ॥११८॥

अत्यर्थं भिन्नवान् भिदेर्यङन्तस्य अतो लोपः यस्य हल इति यलोपे रूपं निराकुलश्च नाम वानरः यूपाक्षस्य राक्षसस्य शिरः क्षिप्रमहार्षीत् छिन्नवान् ॥ ११६ ॥ ज० म०

तस्येत्यादि । असौ अङ्गदस्तस्यापि प्रजङ्घस्यापि मूर्द्धानं मुष्टिना अत्यर्थं भिनत्ति स्म भिदेर्यङ्लुकि सिः निराकुलो नाम वानरो यूपाक्षस्य शिरः क्षिप्रं शीघ्रं हृतवान् निराकुल इति अङ्गदस्य विशेषणं केचिदाहुः ॥ ११६ ॥ भ०

शरीरमित्यादि । द्विविदो नाम वानरो लोहिताक्षस्य शरीरं न्यभाङ्क्षीत् चूर्णितवान् भञ्ज आमर्दने ततोऽनन्तरं कुम्भकर्णसुतः मैन्दं वानरं सद्विविदं द्विविदेन सह शरैरभैत्सीत् भिन्नवान् ॥ ११७ ॥ ज०म०

शरीरमित्यादि । द्विविदो नाम वानरो लोहिताक्षस्य शरीरं चितौ अभाङ्क्षीत् भनुजोधौ मोटने ततोऽनन्तरं कुम्भो राक्षसः कुपितः सन् द्विविदेन सह मैन्दं कपिं शरैर्विभेद धौभिदिर्भिदि ॥ ११७ ॥ भ०

आघूर्णिष्टामित्यादि । तावुभौ क्षतौ आघूर्णिष्टां चक्रवद्भ्रान्तौ क्ष्मां च भूतलमाशिश्रियतां श्रितवन्तौ भूमौ पतिताविल्यर्थः निश्रीत्यादिना चङ् तौ च ताराभ्रातृत्वात् मातुलौ विह्वलौ दृष्ट्वा बालिसुतो नगैर्वृक्षैः कुम्भं प्रौर्णावीदिति वक्ष्यमाणेन सम्बन्धः ॥ ११८ ॥ ज० म०

आघूर्णिष्टामित्यादि । तावुभौ वानरौ क्षतौ खण्डितौ सन्तौ घूर्णितौ घूर्णभ्रमणे क्ष्मां भूमिमाश्रितवन्तौ च श्रिञ सेवने णिश्रीत्यङ् तावात्ममातुलौ व्याकुलौ दृष्ट्वा बालिसुतोऽङ्गदः नगैः कुम्भं प्रौर्णावीदित्यग्रिमश्लोकेनान्वयः ऊर्णञ् आच्छादने च ूवन्निश्छामिति क्रिः न

प्रौर्णावीच्छरवर्षेण तानपौहीन्निशाचरः ।
वानरानैजिहद्रामस्तूर्णं रक्षितुमङ्गदम् ॥ ११९ ॥
द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसङ्कटात् ।
मुष्टिना कौम्भकर्णिञ्च क्रुद्धः प्राणैरतित्यजत् ॥ १२० ॥

गच्छतीति नगः हृनजनादिति डः नगोऽप्राणिष्वन्यतरस्यामिति पक्षे आदेशाभावः शैलवृक्षौ नगावगाविति अमरः । मातुर्भ्राता मातुलो निपातनात् ॥ ११८ ॥ भ०

प्रौर्णावीदित्यादि । प्रौर्णावीत् छादितवानित्यर्थः विभाषोर्णोरिति अकित्वपक्षे रूपं स च निशाचरस्तान्नगान् शरवर्षेणापौहीत् निरस्तवान् उपसर्गादस्यत्यूह्योर्वा वचनमित्यात्मनेपदविकल्पः रामश्च तद्धनुष्कौशलं दृष्ट्वा अङ्गदं रक्षितुं तूर्णं वानराननैजिहत् व्यापारितवान् ईहतिर्यत्नः ॥ ११९ ॥ ज० म०

प्रौर्णावीदित्यादि । निशाचरः कुम्भस्तान् बाणवृष्ट्या अपौहीत् निरस्तवान् ऊहङ् तर्के अपपूर्वनिवारणेऽपि गेर्वाह्योहोढेचेति मस्य पाक्षिकत्वात् पं रामश्चाङ्गदं रक्षितुं तूर्णं वानरान् प्रेरयामास ईहङ् चेष्टे अप्रन्तादङ् ॥ ११९ ॥ भ०

द्रुतमित्यादि । सुग्रीवस्तस्माच्छत्रुसङ्कटात् भ्रातृव्यं भ्रातुरपत्यं भ्रातुर्व्यच्च द्रुतमत्रास्त रक्षितवान् अपतो भूत्वा त्रैङ् पालने कौम्भकर्णिं कुम्भं क्रुद्धः सन् मुष्टिना प्राणैरतित्यजत् त्याजितवान् त्यजिर्ण्यन्तः ॥ १२० ॥ ज० म०

द्रुतमित्यादि । सुग्रीवस्तस्मात् शत्रुसङ्कटात् भ्रातृव्यं अङ्गदं द्रुतमत्रास्त रक्षितवान् त्रैङ् पालने भ्रातुरपत्यं भ्रातृव्यो निपातनात् क्रुद्धः सन् कुम्भकर्णापत्यं कुम्भं मुष्टिना प्राणान् त्याजयामास त्यजौ हानौ अप्रन्तादङ् अत्र त्यजिस्त्यागपूर्बिकायां गतौ वर्त्तते तेन योऽणौ कर्त्ता स णौ कर्म्मेत्यादिना प्रयोज्यानां प्राणानां कर्म्मत्वं आपिशलीयमते भक्ष्यादिभ्योऽन्यस्य योगे प्रयोज्यस्य पक्षे कर्म्मत्वमिष्यते प्राणैरिति क्वचि-

॥ १२० ॥ भ०

निकुम्भो वानरेन्द्रस्य प्राहैषीत् परिघं ततः ।
हनूमांश्चापतन्तं तमभाङ्क्षीद्भोगिभीषणम् ॥ १२१ ॥
प्रौर्णुवीत्तेजसारातिमरासीच्च भयङ्करम् ।
ग्रीवाञ्चास्य तथाक्राक्षीदजिजीवद्यथा न तम् ॥ १२२ ॥
समगत कपिसैन्यं सम्मदेनातिमात्रम्
विटपहरिणनाथः सिद्धिमौहिष्ट नित्याम् ।

निकुम्भ इत्यादि । ततो भ्रातृवधात् निकुम्भो वानरस्य सुग्रीवस्य परिघं प्राहैषीत् प्रहितवान् हि गतौ परिघमापतन्तं निकुम्भात् भोगिभीषणं अहिवत् भीषणं हनूमानभाङ्क्षीत् भग्नवान् ॥ १२१ ॥ ज० म०

निकुम्भ इत्यादि । ततो भ्रातृवधात् निकुम्भः सुग्रीवस्य कृते परिघं प्रहितवान् हि वर्द्धने गतौ तमापतन्तं भोगिभीषणं सर्पवद्भयङ्करं परिघं हनूमान् बभञ्ज भनञ्जेरनिमत्वादिः ॥ १२१ ॥ भ०

प्रौर्णुवीदित्यादि । परिघञ्च हनूमान् तेजसा प्रौर्णुवीत् अभिभूतवान् किन्त्वारहद्विपक्षे रूपं भयङ्करं चारासीत् शब्दितवान् अस्य च निकुम्भस्य ग्रीवां तथाक्राक्षीत् आकृष्टवान् अभागमपक्षे रूपं यथा तं नाजिजीवत् न जीवयति स्म ग्रीवामाकृष्यैव व्यापादितवानित्यर्थः भ्राजभासेत्युपक्षः ॥ १२२ ॥ ज० म०

प्रौर्णुवीत्यादि । हनूमान् तेजसा अरिं निकुम्भं प्रौर्णुवीत् अभिभूतवान् णूवञ्छादने इति उत् कश्चिद्गुणवान् पाठः भयङ्करं यथा स्यात्तथा शब्दं कृतवान् रसशब्दे अस्य निकुम्भस्य ग्रीवां तथाकृष्टवान् तथा तं न जीवयामास ग्रीवामाकृष्य जघानेत्यर्थः कृषौ व्याकर्षे कृषस्पृशेति पाक्षिकः सिः वद्रौंऽकिदिति वृद्रः अनिमुत्वादृत्विः जीव प्राणे ण्यन्तादङ् भ्राजभासभासेति पक्षे ह्रस्वः ॥ १२२ ॥ भ०

समगतेत्यादि । प्रधानयोधा निहता इति सम्मदेन हर्षेणातिमात्रमत्यर्थं समगत सङ्गतं कपिसैन्यं समोगमृच्छीति तङ् वागम इति सिचः किच्वेऽनुनासिकलोपः ह्रस्वादङ्गादिति सिचोलोपः विटपहरिणनाथः शाखामृगाणां नाथः नितरां सिद्धिमवश्यंभाविनीमौहिष्ट तर्कितवान्

नृपतिमतिररंस्त प्राप्तकामेव हर्षात्
रजनिचरपतीनां सन्ततोऽतायि शोकः ॥ १२३ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लुङ्विलसितो नाम
पञ्चदशः सर्गः ।

नृपतिर्मतिः रामस्य बुद्धिः प्राप्तकामेव सम्पन्नेच्छेव रावणवधसीतालाभयोः सिद्धिरूपत्वात् हर्षादरंस्त रमते स्म रजनिचरपतीनां मेघनादादीनां शोकः सन्ततोऽविच्छिन्नः अतायि वर्द्धते स्म दीपजनेत्यादिना कर्त्तरि चिण् ॥ १२३ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लुङ्विलसितो द्वितीयः परिच्छेदः ।

काव्यस्य कुम्भकर्णवधो नाम पञ्चदशः सर्गः ।

समगतेत्यादि । कपिसैन्यं सम्मदेन हर्षेण अतिमात्रमत्यर्थं सङ्गतं वैरिनाशात् समोगमृच्छेति सं इगुङ्संढीति पक्षे सेः किन्त्वे वनतनाद्यनिमाचिति मलोपे भ्रस्वादिति सिलोपः विटपहरिणानां वानराणां नाथः सुग्रीवः नितरामवश्यम्भाविनीं कार्य्यसिद्धिं ज्ञातवान् ज्ञाङ्तर्के नृपते रामस्य मतिः प्राप्तकामेव शत्रुवधं सीताञ्च प्राप्तवती हर्षात् रमते स्म रमुङ्क्रीडे रजनिचरपतीनां रावणेन्द्रजितादीनां शोको वर्द्धते स्म तायङ्पालनसन्तत्योः मदसनीणघे इति आदिना पाक्षिक इण् अप्यायीति पाठे तु प्यायीङ्वृद्धौ ॥ १२३ ॥ भ०

इति हरिहरखानवंशावतंसगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां कुम्भकर्णादिवधो नाम
पञ्चदशः सर्गः ।

# षोडशः सर्गः।

—*—

ततः प्ररुदितो राजा रक्षसां हतबान्धवः।
किं करिष्यामि राज्येन सीतया किं करिष्यते॥ १॥
अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुम्।
क्षेपयिष्यति कः शत्रून् केन जायिष्यते यमः॥ २॥

इतः प्रभृति लृटमधिकृत्य विलसितमाह तत्र लृट् शेषे चेति लृट् ततोऽन्यत्रापि दर्शयिष्यति

तत इत्यादि। ततोऽनन्तरं रक्षसां राजा रावणः हतबान्धवः व्यापादितभ्रातृत्वात् शोकाभिभूतः सन् प्ररुदितः क्रन्दितुमारब्धः किं करिष्यामीत्यादिना आदिकर्मणि क्तः राज्येन किञ्चित् करिष्यते इतीट् सीतया च किं करिष्यते॥ १॥ ज० म०

अथ तौ पदर्श्यते तस्याः पाणिनिमते लृट्संज्ञा

तत इत्यादि। तदनन्तरं हतबान्धवो रक्षसां राजा रावणः प्ररुदितः क्रन्दितुमारब्धवान् आदिके क्तः रोदनमेवाह अहं राज्येन किं करिष्यामि अहं सीतया च किं करिष्ये बान्धवनाशात् सर्वं निष्फलमेव कृञ उभयपदित्वं जित्त्वात् स्वरूढ़ेन इति इम् सीतायां किं करिष्यते इति पाठे मयेति शेषः सीतया कतरा वा॥ १॥ भ०

अतीत्यादि। पुनरन्तगुणः केन यमः जायिष्यते जिजये कर्मणि लृट् स्यसिजित्यादिना चिण्वदिट् च॥ २॥ ज० म०

अतिकाय इत्यादि। अतिकाये हते सति जीवितुमहमुत्साहं न करिष्यामि तेन विना कः शत्रून् लज्जयिष्यति त्रपो लिलज्जे त्रपौति यण् केन यमो जेतव्यः जिजये च हनग्रहदृश च इति णाचिको णिण्॥ २॥ भ०

अतिकायाद्विना पाशं को वा च्छेत्स्यति वारुणम् ।
रावणं मंस्यते को वा स्वयम्भूः कस्य तोक्ष्यति ॥ ३ ॥
श्लाघिषेर केन को बन्धून् नेषयत्युन्नतिमुन्नतः ।
कः प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः ॥४॥
उद्यंस्यति हरिर्वज्रं विचरिष्यति निर्भयः ।
भोक्ष्यते यज्ञभागांश्च शूरमानञ्च वक्ष्यति ॥ ५ ॥

अतीत्यादि । पृथक् विनेति पञ्चमी अतिकायाद्विना वारुणं पाशं को वा च्छेत्स्यति द्विधा करिष्यति को वा रावणं मंस्यते पूजयिष्यति स्वयम्भूर्ब्रह्मा कस्य तोक्ष्यति प्रीतिं जनयिष्यति तुष प्रीतौ षढोः कः सि ॥ ३ ॥ ज० म०

अतिकायादित्यादि । अतिकायेन विना को वा वरुणपाशं छेत्स्यति छिदिरद्वैधीकरणे अन्यारादित्यादिना विनायोगे पञ्चमी को वा रावनं पूजयिष्यति मन्यौङ् च चकाराद्बधे अनेकार्थत्वात् पूजायामपि स्वयम्भूः कस्य प्रीतिं जनयिष्यति तुषयौग्नि च चकारात् तुष्टौ षढोः कः ॥३॥ भ०

श्लाघिष्ये इत्यादि । केनाहं श्लाघिष्ये श्लाघां करिष्यामि ममेदृशः पुत्र इति कः स्वगुणैरुन्नतः सन् बन्धूनुन्नतिं परां कोटिं नेष्यति काले पितृक्रियोचिते कः पितॄन् प्रेष्यति तर्पयिष्यति प्रीञ् तर्पणे कृत्वा किञ्चित्कार्य्यं को न कत्थिष्यते कत्थनां न करिष्यति अहमेवंविध इति अतिकायाद्विनेति सर्वत्र योज्यम् ॥ ४ ॥ ज० म०

श्लाघिष्य इत्यादि । केन पुत्रेणाहं श्लाघ्यो भविष्यामि कर्म्मणि रूपं केनात्मानं श्लाघ्यं कथयिष्यामीत्यर्थे कर्त्तरि रूपमित्यन्ये । क उन्नतः सन् बन्धून् उन्नतिं प्रापयिष्यति कः काले पितॄन् तर्पयिष्यति प्रीञ तर्पणे महदपि कार्य्यं कृत्वा आत्मानं श्लाघां न करिष्यति अतिकायाद्विनेति सर्वत्र योज्यं कत्थङ श्लाघे ॥ ४ ॥ भ०

उद्यंस्यतीत्यादि । तथा हरिरिन्द्रः हन्तुं वज्रमुद्यंस्यति उद्धारयिष्यति उत्पूर्व्वाद्यमेरूपं निर्भयस्तेनतो विचरिष्यति यज्ञभागांश्चात्मी-

रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत् ।
निर्वर्त्स्यत्यृतुसङ्घातः स्वेच्छयेन्दुरुदेष्यति ॥ ६ ॥
तीव्रं स्यन्त्स्यते मेघैरुग्रं वर्त्स्यति यमः ।
अतिकायस्य मरणे किं भविष्यति नान्यथा ॥ ७ ॥

यान् भोक्ष्यते भक्षयिष्यति भुजोऽनवन इति तङ् स्मरमानञ्च स्मरोऽ-स्मीति वक्ष्यति धारयिष्यति वहेर्हौढः षढोः कः सि । ॥ ५ ॥ ज०म०

उद्यंस्यतीत्यादि । हरिरिन्द्रो मां प्रति वज्रं उत्थापयिष्यति अ-तिकायस्य मरणे किं भविष्यति नान्यथेति वक्ष्यमाणेनान्वयः यमौ उप-रतौ निर्भयं विचरिष्यति इतस्ततो गमिष्यति आत्मीयान् यज्ञभागांश्च भ-क्षयिष्यति भुजोऽशने इति मं स्मरमानं स्मरोऽहमिति अहङ्कारं धार-यिष्यति वहे र्णौ। प्रापणे ओढः षढोः कः पूर्वं सर्वमिदमतिकायेन निरा-कृतमिति भावः ॥ ६ ॥ भ०

रविरित्यादि । रविः निःशङ्कं शङ्कां विना तप्स्यति द्योतिष्यते म-रुच्चानियतं स्वच्छन्दो वास्यति वागतिगन्धनयोः ऋतुसङ्घातः षड्‌तवः नि-र्वर्त्स्यति सर्वदा न भविष्यति इङ्गः स्यसनोरिति पो विकल्पः न इङ्गच-तुर्भ्यः इतीट् प्रतिषेधः स्वेच्छयेन्दुरुदेष्यति सदा पूर्णमण्डलो भोद्गमि-ष्यति इण् गतौ ॥ ६ ॥ ज०म०

रविरित्यादि । रविः सूर्यो निःशङ्कं यथा यथा स्यात्तथा तप्स्यति द्योतिष्यते वायुः सततं गमनं करिष्यति वागगमनहिंसयोः ऋतुसङ्घातः षण्णामृतूनां मेलनं समोधाने निवृत्तो भविष्यति इतङ्कृन्त्यवर्त्तने इङ्गो ने स्पे इति इस् निषेधः अतएव पं चन्द्र उदयं करिष्यति स्वेच्छया न तु ममेच्छया इण् गतौ ॥ ६ ॥ भ०

तीव्रमित्यादि । मेघैस्तीव्रं अतिशयेन स्यन्त्स्यते पूर्वं रजः प्रशम-नमात्रं इष्टम् भावे लृट् न इङ्गच इतीट्प्रतिषेधो न भवति तत्र परस्मै-पदग्रहणमनुवर्त्तते यमः उग्रं वर्त्स्यते रौद्रं चरिष्यति आत्मनेपदे-नेट्प्रतिषेधः अतिकायस्य मरणे सति इन्द्रादयः किमन्यथा विपर्य्ययं न

उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतम् ।
आज्ञालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकम् ॥ ८ ॥
धिङ्मां त्रिशिरसा नाहं सन्दर्शिष्येऽद्य यत् पुनः ।
वानिश्यन्ते द्विषः केन तस्मिन् पञ्चत्वमागते ॥ ९ ॥
शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखम् ।
युद्धोन्मत्ताद्विना शत्रून् समास्कन्त्स्यति को रणे ॥१०॥

करिष्यन्ति किन्तु करिष्यन्तीति किं भविष्यति नान्यथेति पाठान्तरं तत्र सर्वमेतद्भविष्यतीत्यर्थः ॥ ७ ॥ ज० म०

तीव्रमित्यादि । मेघैस्तीव्रमतिशयं स्यन्दिष्यते वर्षिष्यते पूर्वं हि धूलिप्रशमनं यावदेव मत्पुरे वृष्टिरासीदिति भावः स्यन्दूङ् स्रुतौ भावे लृट् यस्य उग्रं वर्त्तिष्यते अतिकायस्य मरणे सर्वमिदं विपरीतं किं न भविष्यति किं करिष्यन्तीति पाठे इन्द्रादय इति शेषः ॥ ७ ॥ भ०

उन्मीलिष्यतीत्यादि । मे मम चक्षुर्वृथा निष्फलमुन्मीलिष्यति यद्यस्मात् विनयागतं विनीतं आज्ञालाभोन्मुखं नम्रं नमनशीलं नरान्तकं पुत्रं न द्रक्ष्यति ॥ ८ ॥ ज० म०

उन्मीलिष्यतीत्यादि । मम नेत्रं वृथा उन्मीलिष्यति मील निमिषे यद्यस्माद्विनयेनागतं आज्ञालाभाय उन्मुखं नम्रं नरान्तकं न द्रक्ष्यति दृशिरोप्रेक्षे वद्धौऽक्ष्लिदिति वृद्धः शच्छाजिति षड् षढोः कः ॥ ८ ॥ भ०

धिङ्मामित्यादि । यत् त्रिशिरसा अद्य पुनरपि नाहं सन्दर्शिष्ये न दृष्टो भविष्यामि कर्मणि लृट् चिण्वदिट् च तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते द्विषः शत्रवः केन घानिष्यन्ते अत्रापि चिण्वदिट् च ॥ ९ ॥ ज० म०

धिङ्मामित्यादि । मां धिक् यस्मात् अद्य पुनरहं त्रिशिरसा दृष्टो न भविष्यामि हनश्च हदृशश्च इति कर्मणि चिण् तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते सति द्विषः केन हन्तव्याः. पूर्ववच्चिण् पञ्चानां पृथक्त्वं पञ्चत्वम् ॥ ९ ॥ भ०

शत्रुभिरित्यादि । मत्ते मत्तनाम्नि शत्रुभिर्निहते तैरेव शत्रुभिः

आह्वास्यते विशङ्को मां योत्स्यमानः शतक्रतुः ।
प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हने हते ॥ ११ ॥
कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते ।
देवान्तक ! त्वया त्यक्तो रिपोर्ग्रास्त्वामि वक्ष्यताम् ॥१२॥

संयुगे सुखमहं द्रक्ष्ये द्रष्टव्योऽस्मि पूर्वं भयाद्दृष्टः अचिरमेवाहमपक्षे क्रमम् तस्य च भ्रातुर्युद्धोन्मत्ताद्विना रणे शत्रून् कः समास्कंत्स्यति अभियास्यति स्कन्दिरगतिशोषणयोः खरि चेति चर्त्वम् ॥ १० ॥ज०म०

शत्रुभिरित्यादि । मत्तनाम्नि राक्षसे शत्रुभिर्निहते सति तैरेव शत्रुभिः संग्रामे सुखं यथा स्यात्तथाहं द्रष्टव्यः पूर्वं तत्सान्निध्यात् अहं दुर्दर्श इति भावः युद्धोन्मत्तं राक्षसञ्च विना रणे कः शत्रून् समास्कंत्स्यति शोषयिष्यति अभिभविष्यतीत्यर्थः स्कन्दिरै शोषणगत्योः ॥ १० ॥ भ०

आह्वास्यत इत्यादि । शतक्रतुरिन्द्रः योत्स्यमानः युद्धं करिष्यन् विशङ्को निर्भयः मां युद्धायाह्वास्यते स्पर्द्धायामाङ इत्यात्मनेपदं निकुम्भे दुर्हने दुःखेन हन्यत इति ईषदित्यादिना खल् तस्मिन् हते तस्य शतक्रतोरर्थः निष्कण्टकराज्यलक्षणः प्रकल्प्स्यति सम्पत्स्यते ॥ ११ ॥ ज०म०

आह्वास्यत इत्यादि । शतक्रतुरिन्द्रो युद्धं करिष्यन् निःशङ्कं यथा स्यात्तथा मां युद्धार्थं आह्वास्यते स्पर्द्धायामाङ इति मं युधेस्तोपमवस्थाष्ट-स्यमानाविति स्यमानः दुर्हने निकुम्भे हते सति तस्य शतक्रतोरर्थो निष्कण्टकराज्यलाभः प्रकल्प्स्यति सम्पत्स्यते कृपूङ्कल्प च कल्पने वृतादित्वात् मे इमोऽभावः कृपकृपोऽकृपादौ दुःखेन हन्यते इति ईषद्दुःसोरिति खल् प्राग्वद्नोण इत्यादौ दुर्वर्ज्जनात् णत्वं केचित्तु णत्वमाहुस्तन्न साधु परेषामपि दुर इति णत्वप्रतिषेधकसूत्रदर्शनात् ॥ ११ ॥ भ०

कल्पिष्यत इत्यादि । शत्रुभिः कुम्भस्य निपातितं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति लुटि च क्लृप इति चकारात्स्यसनोरपि परस्मैपदविकल्पः आत्मनेपदे च नेट् प्रतिषेधः लङ्का च शत्रुभिरुपह-

मरिष्यामि विजेष्ये वा हताश्चेत्तनया मम ।
हनिष्यामि रिपून् तूर्णं न जीविष्यामि दुःखितः ॥१३॥
क्ष्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशम् ।
दशग्रीवस्य दुर्नीतैर्विनष्टं रक्षसां कुलम् ॥ १४ ॥
केन सम्भावितं तात ! कुम्भकर्णस्य रावणः ।
रणे करिष्यति गात्राणि मर्म्माणि च वितर्ष्यति ॥१५॥

निष्यते विलोक्यते कर्मणि लृट् अचिरवड्भावपचः कड्नोः स इतीट् इह लरैरागंस्यते भावे लृट् ॥ १२ ॥ ज० म०

कल्प्यिष्यते इत्यादि । शत्रुभिर्निपातितं कुम्भं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्प्यिष्यते भविष्यति इतादित्त्वात् मे नेम्निषेधः शत्रुभिर्लङ्का च उपहनिष्यते मिथोऽभावपत्ते स्वसर्द्दन इति इम् कर्मणि रूपं इह लङ्कायां देवैरपि आगन्तव्यं यमरमनमातः मे स इतयस्य परविषयत्वान्नेम् भावे रूपम् ॥ १२ ॥

मरिष्यामीत्यादि यदि मम तनयाः हताः तदा मरिष्यामि शत्रून् वा विजेष्ये म्रियतेर्लुङ्लिङोरिति नियमात्तङ् न भवति उत्तरत्र विपराभ्याञ्जेरिति तङ् ततो रिपून् तूर्णं हनिष्यामि पुनर्बन्धुं विनाकृतत्वात् दुःखितः सन् जीविष्यामि ॥ १३ ॥ ज० म०

मरिष्यामीत्यादि । यदि तनया हतास्तदाहं मरिष्यामि म्रियतेर्लुङ्लिङोश्चेति नियमादन्यत्र परस्मैपदं स्वसर्द्दन इति इम् शत्रून् वा जेष्यामि विपराजिरि[illegible] मं तूर्णं रिपुं हनिष्यामि अथवा बन्धुनाशात् दुःखितोऽहं न जीविष्यामि ॥ १३ ॥ भ०

क्ष्मेष्यन्त इत्यादि । मुनयो हर्षात् क्ष्मेष्यन्ते हसिष्यन्ति ङिन्त्वात्तङ् देवा अनिशं कथयिष्यन्ति यथा दशग्रीवस्य दुर्नीतैर्दुर्नयस्य रक्षसां कुलं विनष्टम् ॥ १४ ॥ ज० म०

पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते ।
नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते ॥ १६ ॥
इन्दोः स्यन्दिष्यते वह्निः समुच्छोक्ष्यति सागरः ।
जलं धक्ष्यति तिग्मांशोः स्रंस्यन्ति तमसाञ्चयाः ॥१७॥

रंस्यन्त इत्यादि । मुनयो हर्षात् रंस्यन्ते स्मिम् हसने देवाः सततं कथयिष्यन्ति किमित्याह दशग्रीवस्य दुर्नये रक्षसां कुलं नष्टमिति प्राग्वन्नोष्ण इत्यादौ दुर्वर्ज्जनान्न णत्वम् ॥ १४ ॥ भ०

केनेत्यादि । हे तातेति । शोकात् बुद्धिस्थं पितरमभिमुखीकरोति केनैतत्सम्भावितं निश्चितं यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति छेत्स्यति क्रती छेदने मर्म्माणि वितर्त्स्यति अपनेष्यति दृतट-र्हिंसानादरयोः सिजित्यादिना इड्विकल्पः ॥ १५ ॥ ज० म०

केनेत्यादि । तातेति बुद्धिस्थं पितरं शोकात् सम्मुखीकरोति लोकोक्तिरियं केनैवं सम्भावितं यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति क्रतोऽयं छिदि न्वतृक्रदिति पक्षेऽनिम् मर्म्माणि च तर्त्स्यति तृदुर्धिनादरे च चकारात् हिंसे पूर्ब्बवत् पक्षे ऽनिम् ॥ १५ ॥ भ०

पतिष्यतीत्यादि । क्षितौ भूमौ भानुरादित्यः पतिष्यति अधो गमिष्यति पृथ्वी तोलयिष्यते ऊर्द्धं क्षिप्यते तुल उन्माने चुरादावदन्तेषु च पठ्यते कर्मणि लृट् नभस्वान् वायुः काष्ठवद्भङ्क्ष्यते कर्म्मणि लृट् मुष्टिभिर्व्योम ताडयिष्यते हनिष्यते ॥ १६ ॥ ज० म०

पतिष्यतीत्यादि । भानुः सूर्य्यः क्षितौ पतिष्यति पृथिवी तोलयिष्यते तुलक्युन्मितौ कर्मणि रूपं नभस्वान् वायुः काष्ठवत् भङ्क्ष्यते भञ्जोधौ मोटने कर्म्मणि रूपं मुष्टिभिर्व्योम आकाशं ताडयिष्यतेऽन्येन तडकिल्विषि सम्भावितानि नैतानीत्यग्रिमवाक्येन सम्बन्धः यथैतदसम्भाव्यं तथा कुम्भकर्णस्य रामेण हननमिति भावः ॥ १६ ॥ भ०

इन्दोरित्यादि । इन्दोः वह्निः स्यन्दिष्यते प्रस्रविष्यति इड्वाः स्यन्नोरिति परस्मैपदविकल्पः सागरः समुच्छोक्ष्यति शोषं यास्यति जलं

कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते ।
सम्भावितानि नैतानि कदाचित् केनचिज्जने ॥ १८ ॥
कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमाः ।
दङ्क्ष्यन्ति राक्षसान् दृप्ता भङ्क्ष्यन्ति च ममाश्रमान् ॥१९-

धक्ष्यति भस्मसात् करिष्यति दह भस्मीकरणे ह्वोढः एकाचोवशोभषिति तिग्मांशोरादित्यात्तमसां चयाः तमःसङ्घाः स्रंस्यन्ति स्रन्दैः पूर्ववत्पर-स्मै पदविकल्पः न वृद्भ्य इतीट् प्रतिषेधः ॥ १७ ॥ ज० म०

इन्दोरित्यादि । चन्द्रादग्निः स्यन्दिष्यते स्यन्दू ङ्वल्वृधु तौ विभाषा ॥ वृतादिः शोषं यमिष्यति शुषगौ लृ शोषे समुत्पूर्वः जलं कर्त्तृ धक्ष्यति दाहं करिष्यति दहौ दाहे दादेर्घः भषान्तस्येति भः तिग्मांशोः सूर्यात् अन्धकारचयाः स्रंस्यन्ति चरिष्यन्ति वृतादित्वात् मे नेम् सम्भावितानि नैतानीत्यन्वयः ॥ १७ ॥ भ०

कुम्भकर्ण इत्यादि । कुम्भकर्णो रणे क्रुद्धः सन् पुंसा परि-भविष्यते कर्म्मणि लृट् एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि जने लोके केनचित् न सम्भावितानि न चिन्तितानि ॥ १८ ॥ ज० म०

कुम्भकर्ण इत्यादि । रणे क्रुद्धः कुम्भकर्णः अन्येन पुंसा परिभ-विष्यते जेतव्यः एतानि भानुपतनादीनि लोके कदाचिदपि केनचिन्न सम्भावितानि ॥ १८ ॥ भ०

कुम्भकर्ण इत्यादि । कुम्भकर्णे इत्यं हते सति प्लवङ्गमाः लङ्का-मारोक्ष्यन्ति आक्रमिष्यन्ति रुहवीजजन्मनि राक्षसान् दङ्क्ष्यन्ति दशनैः क्षेत्स्यन्ति दृप्ताश्च ममाश्रमान् गृहान् भङ्क्ष्यन्ति चूर्णयिष्यन्ति ॥ १९ ॥ ज० म०

कुम्भकर्णे इत्यादि । कुम्भकर्णे हते नष्टे सति प्लवङ्गमाः कपयो लङ्कामारोक्ष्यन्ति लङ्काढा भविष्यन्ति आङ्पूर्वस्य रुहजन्मनि प्रादु-र्भावे इत्यस्य रूपं ह्वोढः षढोःकःसीत्यादिना षस्य कः ते दृप्ताः सन्तो राक्षसान् दङ्क्ष्यन्ति दन्श दंशने ममाश्रमांश्च भङ्क्ष्यन्ति भन्ज भङ्गे ॥ १९ ॥ भ०-

चत्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः ।
तेन राक्षसमुख्येन विना तान् को निरोत्स्यति ॥२०॥
अमर्षो मे परः सीतां राघवः कामयिष्यते ।
च्युतराज्यात् सुखं तस्मात् किं किलासाववाप्स्यति ॥२१॥
मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः ।
भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम् ॥२२॥

चर्त्स्यन्तीत्यादि । बालान् वृद्धांश्च चर्त्स्यन्ति व्यापादयिष्यन्ति चृत हिंसाग्रन्थयोरिति तौदादिकः मुदा हर्षेण युताः सन्तः नर्त्स्यन्ति नृती गात्रविक्षेपे सेसिचीत्यादिना विकल्पेनेट् तेन च राक्षसमुख्येन विना तान् को निरोत्स्यते निवारयिष्यति ॥ २० ॥ ज० म०

चर्त्स्यन्तीत्यादि । प्लवङ्गमा बालान् वृद्धांश्च चर्त्स्यन्ति चृतश हिंसे त्यत्सकृदिति पक्षे नेम् तर्त्स्यन्तीति पाठे तृदधातो रूपं मुदा हर्षेण युताः सन्तो नृत्यं करिष्यन्ति नृत्य नर्त्तने पूर्ववत् नेम् तेन राक्षसश्रेष्ठेन कुम्भकर्णेन विना कस्तान् वानरान् निवारयिष्यति रुधिर्षौ ज्ञि आवृतौ ॥ २० ॥ भ०

अमर्ष इत्यादि । अमर्षः क्रोधः पर उत्कृष्टः मम यद्राघवः सीतां कामयिष्यते कर्मणि लृट् तदन्तादनवकॢप्त्यमर्षयोरकिंवृत्तेपीति अमर्षे क्रोधे लृट् अन्यच्च च्युतराज्यात्तस्मात् रामादसौ सीता किञ्चिच्च नाम सुखमवाप्स्यति तन्न सम्भावयामि किङ्किलास्त्यर्थेषु लृडिति अनवकॢप्तावसम्भावनायां लृट् ॥ २१ ॥ ज० म०

अमर्ष इत्यादि । मम अयं अपरोऽमर्षः कोपः राघवोऽपि सीतां कामयिष्यते कमुकड़्स्पृहि कम वदत इति णिङ् अन्यैस्त्वमर्षे इति तौ च्युतराज्यात्तस्माद्रामात् असौ सीता किं सुखमवाप्स्यति न सम्भावयामि किङ्किलास्त्यर्थाभ्यां तौ ॥ २१ ॥ भ०

मारयिष्यामीत्यादि । अथवा अस्य सर्व्वस्य विध्वंसस्य विनाशस्य कारणं वैदेहीं मारयिष्यामि व्यापादयिष्यामि एतैर्वा राक्षसैः खादयि-

नानुरोत्स्ये जगल्लक्ष्मीं घटिषेय जीवितुं न वा ।
न रंस्ये विषयैः शून्ये भवने बान्धवैरहम् ॥ २३ ॥
मोदिषेय कस्य सौख्येऽहं को मे मोदिष्यते सुखे ।
आदेयाः किं कृते भोगाः कुम्भकर्ण ! त्वया विना ॥२४॥

ष्यामि भोजयिष्यामि गतिबुद्धीत्यादिना प्रत्यवसानार्थे कर्मसंज्ञायां प्राप्तायामदिखाद्योः प्रतिषेध इति कर्त्तृसंज्ञैव भवति भूमौ वा निखनिष्यामि ॥ २२ ॥ ज० म०

मारयिष्यामीत्यादि । अथवा अस्य विध्वंसस्य वस्तुनाशस्य कारणं सीतामेव मारयिष्यामि राक्षसैर्वा तां खादयिष्यामि घोऽओऽरित्यादौ अखादनीत्युक्तेर्न प्रयोज्यस्य कर्मत्वं भूमौ वा निखनिष्यामि गर्त्ते वा-स्थापयिष्यामि ॥ २२॥ म०

नानुरोत्स्य इत्यादि । जगल्लक्ष्मीं नानुरोत्स्ये न कामयिषेय अनो रुधिः कामे जीवितुं वा न घटिषेय प्रयत्नं न करिष्यामि तस्माद्भवने बान्धवैः शून्ये विषयैः शब्दादिभिर्न रंस्ये न क्रीड़ां करिषेय ॥ २२ ॥ ज० म०

नानुरोत्स्य इत्यादि । जगल्लक्ष्मीं नाहं अनुरोत्स्ये न वाञ्छिष्यामि अनोरुधकामे इति आत्मनेपदं न वा जीवितुं घटिषेय बान्धवैः शून्ये रहिते भवने स्वगृहे विषयैरूपरसादिभिरहं न रंस्ये न क्रीड़िष्यामि रमुक्रीड़े ॥ २३ ॥ म०

मोदिषेय इत्यादि । हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं मोदिषेय हर्षिषेय न कस्यचित् मम वा सुखे सति को मोदिष्यते हृष्टो भविष्यति न कश्चिदपि किं कृते किं निमित्तं परभोगा आदेयाः आदातव्याः ॥ २४ ॥ ज० म०

मोदिषेय इत्यादि । हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं हर्षं करिष्यामि मे मम वा सुखे को हृष्टो भविष्यति किं कृते कस्य निमित्तं परस्वत्विनो भोगा मया आदेया ग्राह्याः ॥ २४ ॥ म०

या सुहृत्सु विपन्नेषु मामुपैष्यन्ति सम्पदः ।
ताः किं मन्युक्षता भोगा न विपत्सु विपत्तयः ॥ २५ ॥
विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानराः ।
असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम् ॥ २६ ॥
अर्थेन संभृता राज्ञा न भाविष्यामहे वयम् ।
संयोत्स्यामह इत्येतत्प्रहस्तेन च भाषितम् ॥ २७ ॥

तदेव दर्शयन्नाह

या इत्यादि । सुहृत्सु स्निग्धेषु विपन्नेषु याः सम्पदो विभूतयः समुदेष्यन्ति निष्पत्स्यन्ते ताः मन्युक्षता भोगाः शोकैः खण्डिता भोगाः किं विपत्सु न विपत्तयः क्षतक्षारसंस्थानीया भवन्तीति ॥ २५ ॥ ज०म०

या इत्यादि । सुहृत्सु विपन्नेषु मृतेषु याः सम्पदो मामुपैष्यन्ति उपागमिष्यन्ति ताः सम्पदः किं विपत्सु मध्ये विपत्तितुल्या न भवन्ति अपितु भवन्त्येव मन्युना शोकेन क्षताः खण्डिता आभोगा विस्तारा यासाम् ॥ २५ ॥ भ०

विनङ्क्ष्यतीत्यादि । असन्धित्सोः रामेण सन्धानमनिच्छोः क्षिप्रमेषा पुरी लङ्का विनङ्क्ष्यति मस्जिनशोरिति नुम् ततः तूर्णं वानरास्तां समेष्यन्ति उभयत्रापि क्षिप्रवचने लृट् तदेतद्विभीषणभाषितं सर्वमुपपन्नं मन्त्रं निर्णीयते नोक्तम् सन्धानमेवास्तु परैरित्यादिना ॥ २६ ॥ ज०म०

विनङ्क्ष्यतीत्यादि । असन्धित्सो रामेण सह सन्धिं कर्त्तुमनिच्छोस्तव पुरी लङ्का क्षिप्रं विनङ्क्ष्यति नुम् रधादिभ्यश्चेति नशेति नुन् विनङ्क्ष्यन्ति पुरीमिति पाठे अन्तर्भूतण्यर्थात् वानरा विनाशयन्तीत्यर्थः वानरास्तां तूर्णं गमिष्यन्ति इत्येतत् विभीषणस्य वचनं शोभनमेव मन्त्रनिर्णये तेनोक्तं सन्धानमेवास्तु परैरित्यादि ॥ २६ ॥ भ०

अर्थेनेत्यादि । राज्ञा वयमर्थेन भृताः ततो न भाविष्यामहे किमत्र युक्तमिति एतत्प्रहस्तेन भाषितं तच्च तथैव सम्पादितम् [illegible] ब्दोऽत्र निपातः यच्चनीदृशं मन्त्रनिर्णये प्रहस्तेन नोक्तं सन्[illegible] परैरित्यादिना

मानुषो नाम पत्काषी राजानं पुरुषाशिनाम् ।
योधयिस्यति संग्रामे दिव्यास्त्ररथदुर्ज्जयम् ॥ २८ ॥
संनत्स्याम्यथवा योद्धुं न कोऽथ हीनसत्ववत् ।
अद्य तर्प्स्यन्ति मांसादा भूः पास्यत्यरिशोणितम् ॥२९॥

तथापि विभीषणवचनादनुमीयते तेनाप्ययमर्थोऽभ्युपगत इति रावण एव-माह तथाच विभीषणवचनम् युद्धाय राज्ञा सुभृतैरित्यादि ॥२७॥ ज०म०

अर्थेनेत्यादि । अर्थेन धनेन संभृताः पोषिताः अतो न वक्ष्यामः सन्धिमित्यर्थात् परं किन्तु युद्धं करिष्याम इत्येतत् प्रहस्तेनाप्युक्तं युद्धाय राज्ञा सुभृतैर्भवद्भिरिति विभीषणवचनस्य प्रागुपदर्शितत्वात् प्रहस्तेनापि विभीषणवचनमङ्गीकृतमिति भावः परमिति किन्त्वर्थेऽव्ययम् ॥ २७ ॥ भ०

मानुष इत्यादि । मामेवं दुर्ज्जयं मानुषो नाम पत्काषी पादाभ्यां गमनशीलः पदातिः सन् हिमकाषिहतिषु चेति पादस्य पदादेशः पुरुषाशिनां रक्षसां राजानं दिव्यास्त्ररथतया दुर्ज्जयं दुरभिभवनीयं योधयिष्यति ॥ २८ ॥ ज०म०

मानुष इत्यादि । पत्काषी पदातिः सन् मानुषो रामः संग्रामे दिव्यास्त्रेण रथेन च दुर्ज्जयं दुर्गमं राक्षसानां राजानं योधयिष्यतीति नाम कुत्सितमित्यर्थः । नामेति प्राकाश्यसम्भावनाक्रोधाभ्युपगमकुत्सनेष्वव्ययं पादाभ्यां कषितुं गन्तुं शीलमस्येति णिन् पादस्य पदादेश इति परः स्मरते पच्छब्दात् कषेर्ण्यहादित्वाणिन् युधेर्ण्यन्तात् कर्म्मण्यर्थेऽभिस्त्यादिना रूपम् ॥ २८ ॥ भ०

एवं बहुधा विलप्य जातामर्षः पुनराह

सन्नत्स्यामीत्यादि । सत्वहीनवत् सत्वेन हीन इव योद्धुं सन्नत्स्यामि सन्नाहं करिष्येऽहमिति वाशब्दोऽत्र किं हतोऽप्ययमर्थे लिडपवादो लट् नहोधः खरिचत्वं ततश्चाद्यास्मिन्नहनि मांसादाः क्रव्यादाः तर्प्स्यन्ति तृप्ता भविष्यन्ति अदोऽन्न इति विटि प्राप्ते वासरूपविधिना

आकर्क्ष्यामि यशः शत्रून्‌ अपनेष्यामि कर्म्मणा ।
अनुभाविष्यते शोको मैथिल्याद्य पतिक्षयात्‌ ॥ ३० ॥
मन्तूयिष्यति यक्षेन्द्रो वल्गूयिष्यति नो यमः ।
ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥

ऽवयपि भवति भूस्वाहृतानामरीणां शोणितं पास्यति शेषे ऌट्‌ ॥ २९ ॥ ज०म०

संनत्स्यामीत्यादि । अथवा योद्धुमहं सन्नाहं करिष्यामि मद्धो-भङ्‌ हीनसत्ववत्‌ न कोपेन कुङ्‌शब्दे नेसेकाजिति नेम् अद्य मांसादा रक्षादयस्तृप्ता भविष्यन्ति जिघत्स्य च चकारात्‌ प्रीणने रधादित्वात्‌ वेम् भूस्वारीणां रक्तं पास्यति ॥ २९ ॥ भ०

आकर्क्ष्यामीत्यादि । सर्वयोद्धॄणां यश आकर्क्ष्यामि आहरिष्यामि शत्रूंश्च कर्म्मणा युद्धाख्येनापनेष्यामि न्यूनयिष्यामि अद्य पतिक्षयात्प्रतिविनाशात्‌ शोको मैथिल्या सीतया अनुभाविष्यते संवेदयिष्यते कर्मणि ऌट्‌ चिण्वदिट्‌ ॥ ३० ॥ ज०म०

आकर्क्ष्यामीत्यादि । शत्रूणां यश आकर्क्ष्यामि हरिष्यामि कर्षौ त्वात्वपि वद्‌रौऽकिदिति रस्य पाक्षिकत्वं कर्म्मणा युद्धेन शत्रून्‌ अपनेष्यामि अपनेष्यामीति पाठे न्यूनीकरिष्यामीत्यर्थः । अद्य पतिनाशात्‌ सीतया शोकोऽनुभवितव्यः हनग्रहदृश च इति मिण्‌ ॥ ३० ॥ भ०

मन्तूयिष्यतीत्यादि । यक्षेन्द्रो धनदः दाशरथिमापन्नं श्रुत्वा मन्तूयिष्यति दुर्मना भविष्यति यमश्च न वल्गूयिष्यति हृष्टमना न भविष्यति मन्तुवल्गुशब्दाभ्यां कण्ड्वादिभ्यो युक्‌ तदन्तात्‌ ऌट्‌ वने वानरयोषितः अपतिपुत्राः सत्यः ग्लास्यन्ति ग्लानिं यास्यन्ति ॥ ३० ॥ ज०म०

मन्तूयिष्यतीत्यादि । यक्षेन्द्रः कुवेरो मन्तूयिष्यति मन्तुश्च रोषवैमनस्ययोः अपराधे चेति चन्द्रादयः तं करोतीति कण्ड्वादित्वात्‌ यः कण्ड्वादीनां लिङ्गत्वं धातुत्वञ्चेति टीकाकृद्भिरुक्तं धातुपक्षे स्वार्थे य इति च यमो वल्गूयिष्यति शोभनो नो भविष्यति दौर्मनस्यात्‌ वल्गु [illegible]

सुखं स्वप्स्यन्ति रक्षांसि भविष्यन्ति च निर्भयम् ।
न विक्रोक्ष्यन्ति राक्षस्यो नरांस्त्रास्यन्ति हर्षिताः ॥ २२ ॥
प्राङ्मुहूर्त्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी ।
आगामिनि ततः काले यो द्वितीयः क्षणोऽपरः ॥ २३ ॥

जांमाधुर्य्ययोः कण्ड्वादिः वानराणां योषितश्च पतिपुत्त्ररहिताः सत्यो वने ग्लास्यन्ति ग्लै क्षमे ॥ २१ ॥ भ०

सुखमित्यादि । रक्षांसि चेतानि सुखं स्वप्स्यन्ति निर्भयञ्च भविष्यन्ति राक्षस्यश्च न विक्रोक्ष्यन्ति न क्रन्दिष्यन्ति क्रुश आह्वाने रोदने च हर्षिताश्च सत्यो नरानत्स्यन्ति भक्षयिष्यन्ति ॥ २२ ॥ ज०म०

सुखमित्यादि । अतो रक्षांसि सुखं शयिष्यन्ते ष्वपौष्लुञ्शये निर्भयञ्च भविष्यन्ति भस्य जपा चाले क्रमिष्यन्तीति क्वचित्पाठः राक्षस्यो न क्रन्दिष्यन्ति क्रुशजौ रोदने हृतौ हृष्टाः सत्यो नरांश्च भक्षयिष्यन्ति अदृलौ भोक्षे हृषु हृष्यजि इरहृष्टौ तः वाऽऽमामक्लवेति पाक्षिक इम् पूरीघृषेत्यादौ सेमोर्घुरित्यस्य योगविभागात् हर्षार्थे गुणः किंवा हर्षो जात आसामिति इतोऽस्य जाते इति इतः अन्ये तु जातवत्वोर्हृषधोर्लोम्नि विस्मये प्रतिघाते च रोमहर्षार्थे गुणश्चेत्याहुः । हर्षिता मत्सराक्रमेण विस्मिता इत्यर्थ इति विद्यासागरस्तन्न साधु तत्र गुणाभावात् ॥ २२ ॥ भ०

प्रागित्यादि । योऽयमागामी प्रभातकालः मुहूर्त्तद्वयसम्मितः तस्मिंस्तस्येति षष्ठीसप्तम्योरभेदात् यो द्वितीयो मुहूर्त्तः तस्मात् प्राक् प्रथमे मुहूर्त्ते अहमवश्यं सुखीभविष्यामि तदानीं हतशत्रुत्वात् ततः प्रभातादागामी यः कालः क्षणद्वयसम्मितः तस्मिन्नागामिनि काले यो द्वितीयः तस्मादपरक्षणः पूर्वः तत्रेति वक्ष्यमाणेन सम्बन्धः ॥ २३ ॥ ज० म०

प्राङ्मुहूर्त्तादित्यादि । प्रभाते प्रातःकाले मुहूर्त्तत्रयात्मके तृतीयमुहूर्त्तात् प्राक् प्रथममुहूर्त्तद्वये अहमवश्यं सुखीभविष्यामि तदानी-

तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरम् ।
ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः ॥२४॥ (युग्मकम्) ।
तमेवंवादिनं मूढमिन्द्रजित् समुपागतः ।
युयुत्सिष्येऽहमित्येवं वदन् रिपुभयङ्करः ॥ २५ ॥

सैव शत्रुहननात् ततः प्रभातादागामिनि काले चणद्वयात्मकद्वितीयचणा-न्तरः पूर्वचणस्तत्र जेतुं गमिष्यामीति वक्ष्यमाणेन सम्बन्धः ॥ २३ ॥ भ०

तत्रेत्यादि । तत्र चणे त्रिदशेन्द्रं सहामरं देवैः सहितं जेतुं द्रुतं गमि-ष्यामि प्राक् सुकूलात् सुखी भविष्यामि चणाद्यदपरं तत्र जेतुं गमिष्या-मीति कालविभागे वा अहोरात्राणामिति अनद्यतनवत् प्रत्ययप्रतिषेधे लृट् तत्र हि नानद्यतनवदिति मर्य्यादावचने परस्मिन्निति चानुवर्त्तते तत्र जेतुं कालमर्य्यादाविभागे सति योऽपर आद्यप्रविभागः तत्र भवि-ष्यति काले अनद्यतनवत्प्रत्ययविधिर्न भवति ततो लुट्प्रतिषेधाल्लृडेव भ-वति ततः परेणेति यस्मिन्नागामिनि काले शक्रं जेतुं गमिष्यामि तत्र द्वितीयो यः चणस्तस्मात् परेणोपरिष्टात्तं शक्रं जित्वा भूयोऽपि लङ्का-मेष्यामि आगमिष्यामि स्वः पूर्वस्मिन् रूपं अमत्सरो विगतक्रोधः सन् अपरस्मिन् विभाषेत्यनेन विभाषालुट्प्रतिषेधाल्लृट् तत्र हि कालविभागे सति भवि-ष्यति कालेपरस्मिन् विभाषा अनद्यतनवत्प्रत्ययविधिर्न भवतीत्युक्तम् ॥ २४ ॥ ज०म०

तत्रेत्यादि । तस्मिन् चणे सहामरं देवैः सहितं त्रिदशेन्द्रं शक्रं जेतुं गमिष्यामि गेधौरणधिन इति इणवर्ज्जनात् आदिगेचोरिति वृिः ॥ २४ ॥ भ०

तमित्यादि । तं रावणं मूढत्वादेवंवादिनं एवंभाषणशीलं इन्द्रजित् रिपोर्भयङ्करः समुपागतः युयुत्सिष्येऽहं योद्धुमिच्छां करिष्यामीति ब्रु-वन् ॥ २५ ॥ ज०म०

तमित्यादि । एवंवादिनं शोकात् मूढं रावणं रिपूणां भयङ्कर इन्द्रजित् समुपागतः किं कुर्वन् इतीत्थं वदन् किं वदन्नित्याह अहं योद्धुमिच्छां करिष्यामि युधधोः सन् ॥ २५ ॥ भ०

नाभिज्ञा ते महाराज ! जेष्याव: शक्रपालितम् ।
इद्धदेवगणाकीर्णमावां सह सुरालयम् ॥ ३६ ॥
नाभिज्ञा ते सयचेन्द्रं भङ्क्ष्यावो यद्यमं बलात् ।
रत्नानि च,हरिष्याव: प्राप्स्यावश्च पुरीमिमाम् ॥ ३७ ॥
एष पेक्ष्याम्यरीन् भूयो न शोचिष्यसि रावण ! ।
जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिश: ॥ ३८ ॥

तेन सह योद्धुमिच्छामीति चेदाह

नाभिज्ञेत्यादि । हे महाराज ! ते तव नाभिज्ञा स्मृति: सुरालयं शक्रेण पालितं इद्धैश्च देवगणैराकीर्णं व्याप्तम् आवां द्वावपि सह सम्भूय जेष्याव: जितवन्तौ अभिज्ञावचने लृट् तत्र भूतानद्यतन इति वर्त्तते ॥ ३६ ॥ ज०म०

नाभिज्ञा त इत्यादि । हे महाराज ! तवाभिज्ञा स्मृतिर्नास्ति आवां त्वञ्च अहञ्च सम्भूय इन्द्रेण पालितं इद्धेन देवगणेन व्याप्तं सुरालयं स्वर्गं जितवन्तौ स्मर्थं स्मयदित्वतीत इति तौ ॥ ३६ ॥ भ०

नाभिज्ञेत्यादि । न तेऽभिज्ञास्ति सयक्षेन्द्रं धनदसहितं यमं बलात् सामर्थ्येन आवां भङ्क्ष्याव: भग्नवन्तौ रत्नानि च ताभ्यां बलादाहरिष्याव: इमाञ्च पुरीं लङ्कां प्राप्स्याव: विभाषासाकाङ्क्ष इति लृट् लक्ष्यणयो: सम्बन्धे प्रयोक्तुराकाङ्क्षा तत्र भञ्जनं लक्षणं रत्नाद्याहरणञ्च लक्ष्यम् ॥ ३७ ॥ ज० म०

नाभिज्ञा त इत्यादि । तव नाभिज्ञा स्मृतिर्नास्ति यत् सयक्षेन्द्रं कुवेरसहितं यमं बलादावां भग्नवन्तौ भन्जोधौ मोटने तत्सम्बन्धीनि रत्नानि च हृतवन्तौ इमां लङ्कापुरीं प्राप्तवन्तौ च वानेकस्मार्थे इति भूते तौ ॥ ३७ ॥ भ०

एष इत्यादि । एषोऽहं भूय: पुनररीन् पेक्ष्यामि चूर्णयिष्यामि वर्त्तमानसामीप्ये वर्त्तमानिकप्रत्ययस्य विकल्पेन विधानात् लृडेव भवति तेन हे रावण ! न शोचिष्यसि शोकं न करिष्यसि भविष्यति लृट् जगत्

सहभृत्यः सुरावासे भयं भूयो विधास्यसि ।
प्रणंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम् ॥ ३९ ॥
भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।
ज्ञास्येऽहमद्य संग्रामे समस्तैः शूरमानिभिः ॥ ४० ॥

नीरामं रामरहितं द्रक्ष्यसि दिशश्च सर्वा अवगाहिष्यसे व्याप्स्यसि ॥३८॥ ज० म०

एष इत्यादि । एषोऽहं तव अरीन् चूर्णयिष्यामि चौरादिकश्चूर्णने वर्त्तमानसामीप्यविवक्षयात्र तौ हे रावण ! भूयस्त्वं न शोकं करिष्यसि शुच शोके जगद्रामशून्यं द्रक्ष्यसि निर्भयः सन् दिशोऽवगाहिष्यसे ॥ ३८ ॥ भ०

सहेत्यादि । भृत्यैः सह सुरावासे स्वर्गे भूयो भयं विधास्यसि करिष्यसि देवेन्द्रश्च त्वां प्रणंस्यति त्वदीयोऽहमिति निवेदयिष्यति वक्ष्यति च सन्नतिं भविष्यति च नमस्कारम् ॥ ३९ ॥ ज०म०

सहभृत्य इत्यादि । भृत्यैः सहितस्त्वं सुराणामावासे स्वर्गे भूयः पुनरपि भयं जनयिष्यसि शक्रोऽपि त्वां भूयो नमस्करिष्यति भवद्भयात् सन्नतिं निरहङ्कारतां वक्ष्यति वहेर्णौ प्रापणेधारणेऽपि दृश्यत इति श्रीपतिः। नतिं नमस्कारं वक्ष्यति वदिष्यति वदो रूपमिति केचित् ॥३९॥ भ०

भेष्यत इत्यादि । मुनिभिस्त्वत्तो भेष्यते भीतैर्भवितव्यं भावे लृट् त्वमधिष्ठास्यसि द्विषः शत्रून् परिभविष्यसि अधिशीङिति कर्मसंज्ञा यादृशश्चाहं तादृशः संग्रामे ज्ञास्ये ज्ञातो भविष्यामि कर्मणि लृट् कैः समस्तैः शूरमानिभिः वयं शूरा इत्यात्मानं मन्यमानैः आत्ममाने खश्च ॥४०॥ज०म०

भेष्यत इत्यादि । त्वत्तो मुनिभिर्भयं प्राप्स्यते ञिभीञि भीत्यां भावे रूपं त्वं द्विषः शत्रून् अधिष्ठास्यसि तेषु प्रभुर्भविष्यसीत्यर्थः । कर्म्मक्रियेत्यादिना षत्वं गीक इति षत्वं अद्य संग्रामे समस्तैः शूरम्मन्यैरहं ज्ञातो भविष्यामि कर्मणि तौ आत्मानं शूरं मन्यत इति णिनिरिति परमते तु ग्रहादित्वात् णिन् अयं मननार्थोऽभिधानात् किं वा शूरसम्बन्धि मानो विद्यते येषामिति नैकाज्ञादितीन् ॥ ४० ॥ भ०

त्रायिष्यन्ते मया चाद्य वीरम्मन्या द्विषद्गणाः ।
गूहिष्यामि क्षितिं छन्नैरद्य गात्रैर्वनौकसाम् ॥ ४१ ॥
आरोक्ष्यामि युगान्तवारिदघटासंघट्टधीरध्वनिं
निर्यास्यन् रथमुच्छ्रितध्वजधनुः खड्गप्रभाभासुरम् ।

त्रायिष्यन्त इत्यादि एते च द्विषां गणाः शत्रुसंघाः वीरम्मन्याः अद्य मया त्रायिष्यन्ते परिच्छेत्स्यन्ते यादृशा इति कर्मणि लृट् चिण्वदिट् वनौकसां कपीनां गात्रैः छिन्नैरद्य क्षितिं गूहिष्यामि ॥ ४१ ॥

त्रायिष्यन्त इत्यादि । मयापि वीरमात्मानं मन्यमाना द्विषद्गणा त्रातव्याः हनग्रहदृश इति सिण् यनञ्णिदिति यन् मन्यात्स्वार्थे इति मन् छन्नैश्छिन्नैः कपीनां गात्रैरद्य भूमिश्छादयिष्यामि गुहूञ्संवृतौ गुहेर्णौ रुः ॥ ४१ ॥ भ०

आरोक्ष्यामीत्यादि । अतोऽहं रथमारोक्ष्यामि निर्यास्यन् इतो निर्गच्छन् आरोक्ष्यामीति क्रियायां क्रियार्थायामुपपदे निर्यास्यन्निति लृट् शेषे चेति चकाराल्लृट् कीदृशं रथं युगान्ते प्रलयकाले या वारिदघटास्तासां यः संघट्टः परस्परसंमर्दः तस्येव धीरो गम्भीरो ध्वनिर्यस्य रथस्य उच्छ्रिता ध्वजाः धनूंषि च यत्र खड्गप्रभाभिश्च भासनशीलो यः पश्चाद्विशेषणसमासः उच्छ्रितानां वा ध्वजादीनां प्रभाभिर्भासुर इति योज्यम् विकीर्णा इतस्ततो विक्षिप्ताः वृक्णाः छिन्नाः विमुखाः छिन्नमस्तकाः पराङ्मुखा व्यापन्ना मृताः शत्रवो यस्मिन् रणे क्रव्याशिनः शृगालादीन् क्रोशतः फूत्कुर्वतः अद्य श्रोष्यसि कीदृशान् दृप्तान् शोणितमांसोपयोगात् शोणितेन शोणानि लोहितानि तत एव भीषणानि भयङ्कराणि मुखानि येषामिति दृप्तेरोदितो निष्ठानत्वस्याविद्वत्वात् चोः कुत्वे वृक्ण इति ॥ ४२ ॥ज०भ०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लृड्विलसितस्तृतीयः परिच्छेदः ।

काव्यस्य रावणविलापो नाम षोड़शः सर्गः ।

शोष्यस्यद्य विकीर्णरुक्णविमुखव्यापन्नशत्रौ रणे
त्वत्तांच्छोणितशोणभीषणमुखान् क्रव्याशिनः क्रोशतः॥ ४२॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो नाम
षोड़शः सर्गः ।

आरोक्ष्यामीत्यादि । इतो निर्य्यास्यन् निर्गमिष्यन्नहं रथमारोक्ष्यामि रुद्दौ जन्यां कीदृशं रथं युगान्ते प्रलये या वारिदघटा मेघपङ्क्तयस्तासां संघट्टः परस्परसम्बन्धस्तस्येव धीरो गम्भीरो ध्वनिर्यस्य उच्छ्रितानां ध्वजादीनां प्रभाभिभासनशीलं त्वमपि अद्य क्रोशतः शब्दं कुर्व्वाणान् क्रव्याशिनः शृगालादीन् शोष्यसि कीदृशान् रणे त्वत्तान् शोणितेन शोणानि रक्तानि अतएव भीषणानि भयङ्कराणि मुखानि येषां रणे कीदृशे विकीर्णा विक्षिप्ता रुक्णाश्छिन्ना विमुखाः पराङ्मुखाः व्यापन्ना हताश्च शत्रवो यत्र इत्येवं वदन्निति सम्बन्धः ॥ ४२ ॥ म०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां
मुग्धबोधिन्यां भट्टिटीकायां रावणविलापो नाम
षोड़शः सर्गः ।

---

# सप्तदशः सर्गः।



आशासत ततः शान्तिमस्नुरग्नीनहावयन्।
विप्रानवाचयन् योधाः प्राकुर्वन्मङ्गलानि च॥ १॥

इतः प्रभृति लुङमधिकृत्य विलसितमाह तत्र भूतानद्यतने लुङ्
ततोऽन्यत्र दर्शयिष्यति

आशासतेत्यादि। ततः प्रतिज्ञानन्तरं योधाः इन्द्रजित्सम्बन्धिन
इत्यर्थात् उपद्रवपरिहारार्थं शान्तिमाशासत अभीष्टवन्तः आङः शासु
इच्छायामित्यनुदात्तेत् आत्मनेपदेष्वन्यतरस्यामित्यदादेशः शान्तिञ्च दर्श-
यन्नाह अस्नुः स्नाताः स्नाशौचे आत इत्यधिकृत्य लङः शाकटायनस्यै-
वेति झेर्जुस् अस्य पदान्तादिति पररूपं अग्नीनहावयन् अग्निकर्म्म
कारितवन्तः विप्रानवाचयन् स्वस्तिवाचनं कारितवन्तः मङ्गलानि मङ्गल-
युक्तानि कर्म्माणि कृतवन्तः॥ १॥ ज०म०

अथ शेषमधिकृत्योच्यते पाणिनिना अस्य लङिति संज्ञितो लङ्
भूता नद्यतन इत्युक्ता अन्यत्रापि प्रयोगत इति तद्व्यभिचारमाहुरन्ये।
स्वमते भवद्भूतभव्ये विश्व इति भूतसामान्ये ह्याद्य उक्ताः किञ्च स्मृते-
र्यदित्यतीते इतयत्र ह्यपवादोऽयमित्युक्तवतां परेषां भूतानद्यतनपरोक्ष-
त्वादौ लङादिविधानमप्युक्तितम्

आशासतेत्यादि। तत इन्द्रजित्प्रतिज्ञानन्तरं योधाः कुशलार्थं शा-
न्तिमभीष्टवन्तः आङ्पूर्वास्तु शसिङ्शासुनङ्ङ्षि स्नुता शास्लङ् अने-
कार्थत्वादिच्छायामपि लुगङ्गोऽपः मान्तोऽदनतः शान्तिं दर्शयति अस्नुः
स्नानं चक्रुः ष्णाशोधने द्विषविदातोऽनुस्वा उस्येचोतत्यालोपः अग्नीन्
अहावयन् होमं कारितवन्तः हुवि होमेऽदने ञिः विप्रान् अवाचयन्

अपूजयन् कुलश्रेष्ठानुपागूहन्त बालकान् ।
स्त्रीः समावर्द्धयन् सास्राः कार्य्याणि प्रादिशंस्तथा ॥२॥
आच्छादन् व्यलिम्पंश्च प्राश्नन्नथ सुरामिषम् ।
प्रापिबन्मधु माध्वीकं भक्ष्यांश्चाद्न् यथेप्सितान् ॥३॥

स्वस्तिवाचनं कारयन्तः मङ्गलानि दध्यक्षतानि प्राकुर्वन् प्रस्तुतानि चक्रुः तनुभ्यः सुप्गुणः इत्योऽद्ध्योरे ॥ १ ॥ भ०

अपूजयन्नित्यादि । कुलज्येष्ठान् वृद्धानपूजयन् पूजितवन्तः पादपतनादिना बालकानुपागूहन्त आश्लिष्टवन्तः गतानां किं भविष्यतीति सास्राः स्त्रीः योषितः वाम्शसोरितीयङभावपक्षे रूपम् समावर्द्धयन् ताम्बूलादिना संवर्द्धितवन्तः प्रातिपदिकाद्धात्वर्थे इति णिच् तथा कार्य्याणि गृहकार्य्याणि प्रादिशन् निर्दिष्टवन्तः इदमिदं कार्य्यमिति ॥ २ ॥ ज० म०

अपूजयन्नित्यादि । योधाः कुलश्रेष्ठान् वृद्धान् पूजितवन्तः पूजक्पूजे बालकानाश्लिष्टवन्तः पतिनाशशङ्कया सास्रा रोदनान्विताः स्त्रियः समवर्द्धयन् आश्वासितवन्तः इदं कर्त्तव्यमिति कार्य्याणि प्रदिष्टवन्तः दिशेस्तुदादित्वात् दिवकुटदेति शः अपित्त्वस्य ङित्वाद्गुणाभावः ॥ २ ॥ भ०

आच्छादयन्नित्यादि । आच्छादयन् वस्त्राणि पिनद्धवन्तः छद संवरणे चुरादिः व्यलिम्पंश्च समालिप्तवन्तः लिप उपदेहे शेमुचादीनामिति नुम् न व्यप्रशानिति नुत्वं पूर्वस्यानुनासिकः अथानन्तरं सुरामिषं प्राश्नन् अभ्यवहृतवन्तः मधुना माध्वीकं मध्वासवं प्रापिबन् सुष्ठु पीतवन्तः भक्ष्यांश्च खण्डपायसादीन् यथेप्सितमदन् भक्षितवन्तः अदितस्तुहन्तौ अदः सर्वेषामित्यप्रत्ययः ॥ ३ ॥ ज०म०

आच्छादयन्नित्यादि । योधा आच्छादयन् वस्त्राणि परिहितवन्तः छदकिञ्संवृतौ व्यलिम्पन् अङ्गरागं चक्रुः लिलिपो शपज् लेपे मुचादित्वान्नुण् अनन्तरं सुराणामामिषञ्च भक्षितवन्तः अशभोजने क्र्यादित्वात् आद्योरालोप्योऽथो मधु माध्वीकं मद्यविशेषं पीतवन्तः पा पाने

न्यश्यन् शास्त्राण्यभीष्टानि समनह्यंश्च वर्म्मभिः ।
अध्यासत सुयानानि द्विषद्भ्यश्चाशपंस्तथा ॥ ४ ॥
अपूजयंश्चतुर्वक्त्रं विप्रानार्च्चंस्तथास्तुवन् ।
समालिपत शक्रारिर्यानञ्चाभ्यलषद्वरम् ॥ ५ ॥

घे शप्रे स्वादानेति पिब लोपोऽतोऽदेचोः यथेप्सितान् भक्ष्यान् खण्डा-
दीन् भक्षितवन्तः अद्लौ भक्षे ॥ ३ ॥ भ०

न्यश्यन्नित्यादि । अभीष्टानि यथानुभावितानि शस्त्राणि न्यश्यन्
तेजितवन्तः शोतनूकरणे ओतः श्यनीतयोकारलोपः कर्म्मभिश्च कवचैः स-
मनह्यन् संनद्धाः शरीराण्याछतवन्त इत्यर्थः । सुयानानि शोभनयानानि
अध्यासत आरूढ़ाः अधिशीङिति कर्मसंज्ञा तथा द्विषद्भ्योऽशपन् आ-
क्रुष्टवन्तः पापाः ! क यास्यथेति श्लाघह्नुङित्यादिना सम्प्रदानसंज्ञा ॥
४ ॥ ज० म०

न्यश्यन्नित्यादि । योधा अभीष्टानि शस्त्राणि न्यश्यन् शितानि
चक्रुः शोयनिशाने दिवादित्वात् श्यन् यन्योत्शमादीति ओकारलोपः
वर्म्मभिः करणैः सन्नहनं शरीराच्छादनं चक्रुः नह्यजौ बन्धे दिवादिः
शोभनानि यानानि अध्यासत कर्म्मक्रियेत्यादिना डस्य ढत्वं द्विषद्भ्योऽ-
शपन् शपञ् क्रोशे यस्मै दित्स्येति सम्प्रदानत्वम् ॥ ४ ॥ भ० .

अपूजयन्नित्यादि । चतुर्वक्त्रं ब्रह्माणमपूजयन् अर्च्चितवन्तः विप्रा-
नर्च्चन् दाननमस्कारादिना पूजितवन्तः तथा अस्तुवन् परस्परं स्तुतवन्तः
शक्रारिश्च इन्द्रजित् समालिपत समालिप्तवान् यानं वरमुत्कृष्टमभ्यलषत्
अभीष्टवान् वाभ्राश्लेत्यादिना श्यनो विकल्पितत्वात् पक्षे शप् ॥ ५ ॥
ज०म०

अपूजयन्नित्यादि । योधाश्चतुर्वक्त्रं ब्रह्माणं पूजितवन्तः विप्रान्
अर्च्चितवन्तः अर्च्च च चकारात् पूजे तथास्तुवन्तः ष्टुञ्स्तुतौ श्नुभ्वोरि-
त्युव शक्रारिन्द्रजिदङ्गानि लिप्तवान् वरमुत्कृष्टं यानमिच्छति स्म लष्अ-
लषञ्स्पृहि क्रमलसेत्यादिना श्यनो विभाषितत्वात् पक्षे शप् ॥५॥ भ०

आमुञ्चद्वर्म्म रत्नाढ्यमबध्नात् खड्गमुज्ज्वलम्।
अध्यास्त स्यन्दनं घोरं प्रावर्त्तत ततः पुरः॥ ६॥
आघ्नन् भेरीर्महास्वानाः कम्बूंश्चाप्यधमन् शुभान्।
अताडयन् मृदङ्गांश्च पेराश्चापूरयन् कलाः॥ ७॥
अस्तुवन् वन्दिनः शब्दानन्योन्यञ्चोदभावयन्।
अनदन् सिंहनादांश्च प्राद्रवत हयद्विपम्॥ ८॥

आमुञ्चदित्यादि। रत्नाढ्यं रत्नप्रचुरं वर्म्म कवचमामुञ्चत् शरीरे आमुक्तवान् पिनद्धवानित्यर्थः। खड्गञ्चोज्ज्वलमबध्नात् कक्षपार्श्वाश्रितं कृतवान् घोरं भीषणं स्यन्दनमध्यास्त आरूढः ततोऽनन्तरं पुरः पुरतः प्रावर्त्तत प्रवृत्तः॥ ६॥ ज० म०

आमुञ्चदित्यादि : इन्द्रजिद्रत्नव्याप्तं वर्म्म कवचं आमुञ्चत् पिहितवान् मुच्लृमपञ्चौ मोचे आङ्पूर्वः परिधाने वर्त्तते नुमागमो मुचादीनिति नुम् उत्तमं खड्गं पार्श्वे बद्धवान् बन्धोगब्बन्धक् बन्धे क्र्यादित्वात् श्ना अपिदृत्स्य ङित्त्वात् हलुङ्नलोपः घोरं भीषणं रथमध्यास्त आरूढः इतोऽनन्तरं शत्रूणां पुरः प्रवृत्तः॥ ६॥ भ०

आघ्नन्नित्याह। तस्मात् प्रवृत्ताः महास्वनाः महानादाः स्वनहोर्वेत्यप् भेरीः आघ्नन् ताडितवन्तः वादका इत्यर्थात् शुभान् सुस्वरान् कम्बून् शङ्खानधमन् शब्दितवन्तः पाघ्रेत्यादिना धमादेशः मृदङ्गांश्चाताडयन् आहतवन्तः ताड आघात इति चुरादिः॥ ७॥ ज० म०

आघ्नन्नित्यादि। तस्मिन् प्रवृत्ते वाद्यकारा महानादा भेरीराहतवन्तः हनलौ बधे गतौ आङ्पूर्वत्वादाघाते शोभनान् शङ्खान् अधमन् वादितवन्तः ध्मा अग्नियुतौ ध्वनौ स्यादानघेति धमादेशः मृदङ्गांस्ताडितवन्तः तडकद्विषि आहताः कला अव्यक्तमधुरस्वराः पेरा वाद्यविशेषाः पूरितवन्तः पूरकच चकारात् पूर्त्तौ॥ ७॥ भ०

अस्तुवन्नित्यादि। वन्दिनः स्तुतिपाठका अस्तुवन् जय जीवेत्यादिना स्तुतिं कृतवन्तः अन्योन्यं अन्यस्य अन्यस्य च शब्दात् संग्रामे नामानि

अनिमित्तान्यथापश्यन्नस्फुटद्रविमण्डलम् ।
औक्षन् शोणितमम्भोदा वायवोऽवान् सुदुःसहाः ॥ ९ ॥
आर्च्छन् वामं मृगाः कृष्णाः शस्त्राणां व्यस्मरन् भटाः ।
रक्तं न्यष्ठीवदक्षाम्यदखिद्यद्वाजिकुञ्जरम् ॥ १० ॥

उदभावयन् उद्घाटितवन्तः सैनिका इत्यर्थात् सिंहनादांश्चानदन् शब्दितवन्तः हयद्विपं पशुद्वन्द्वस्य विभाषैकवत् प्राह्रेकत शब्दितवत् ह्रेकशब्दोत्साह इत्यनुदात्तेत् ॥ ८ ॥ ज० म०

अस्तुवन्नित्यादि । वन्दिनः स्तुतिपाठका इन्द्रजितमस्तुवन् जयशब्दं चक्रुः अन्योन्यं नामानि उद्घोषितवन्तः अमुकस्त्वमीदृगित्युक्तवन्तः इत्यर्थः सिंहनादं चक्रुः सैनिका इत्यर्थात् हयद्विपं गतिं चक्रे हयश्च द्विपाश्चेति समाहारः ह्रेटृङ् सर्पणे पाणिनीयास्तु ह्रेषधातुरनेकार्थत्वादव्यक्तशब्देऽपि तेन प्राह्रेषत अव्यक्तं शब्दं चकारेत्याहुः प्राह्रेकतेति पाठे ह्रेकृशेकृङ्स्तनोत्साहे औज्ज्वल्यमिति क्षीरस्वामी । उत्साहो वृद्धिरिति चन्द्रः ॥ ८ ॥ भ०

अनिमित्तानीत्यादि । अनिमित्तानि कुत्सितनिमित्तानि नञत्र कुत्सायां गच्छन्तोऽपश्यन् दृष्टवन्तः तानि दर्शयति रविमण्डलमस्फुटत् स्फुटितं अम्भोदाः शोणितमौक्षन् वृष्टाः उक्षसेचने वायवः सुदुःसहाः प्रचण्डा अवान् वान्ति स्म शाकटायनमतादन्यत्र उसादेशः ॥ ९ ॥ज०म०

अनिमित्तानीत्यादि । अथानन्तरं इन्द्रजित्प्रभृतयो निन्दितानि निमित्तानि अपश्यन् स्यादानमेति इणः पश्य कुत्सायामत्र नञ् यदुक्तं तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता इति । अनिमित्तानि दर्शयति रविमण्डलं स्फुटितं विदीर्णं स्फुटश्च विकाशे मेघा रक्तं वर्षन्ति स्म उक्षष्टिवासगमनहिंसयोः द्विषविदातोऽनुस्रवेत्यस्याप्रवृत्तिपक्षे रूपम् ॥ ९ ॥ भ०

आर्च्छन्नित्यादि । निर्गच्छतां वामपार्श्वं कृष्णमृगा आर्च्छन् गताः ऋच्छेः पाघ्रेति ऋच्छादेशः ऋच्छगतावित्यस्य वा रूपं भटाश्च शस्त्राणि

न तानगणयन् सर्व्वानास्कन्दंश्च रिपून् द्विषः ।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११॥
न्यक्रन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम् ।
भल्लैरविध्यन् प्रापैरदृंहंस्तोमरैरलम् ॥ १२ ॥

व्यस्मरन् विस्मृतवन्तः अधीगर्थेति कर्म्मणि षष्ठी वाजिकुञ्जरमखिन्नमश्रान्तमपि रक्तं न्यष्ठीवत् ष्ठिवु निरसन इति भौवादिकस्य ग्रहणं ष्ठिवुक्लमाचमां शितीति दीर्घः अक्लाम्यत् क्लान्तश्च ॥ १० ॥ ज०म०

आर्च्छन्नित्यादि । कृष्णा खगा यामं पार्श्वं गताः ऋ प्रापणे च चकारान्नत्यां स्यादानपाघ्रेति ऋच्छादेशः ऋच्छ मूर्त्तौ गमनमोहयोरित्यस्य वा रूपं भटा योधाः शस्त्राणां विस्मृतवन्तः कर्म्मणि षष्ठी वाजिनश्च कुञ्जराश्च वाजिकुञ्जरं रक्तं न्यष्ठीवत् प्रच्छादितवत् ष्ठिवु ष्ठिव्यष्ठीवनिरासे भ्वाद्यादिषु इत्यादौ ष्ठिववर्ज्जनाच्च षत्वं ष्ठिवुक्लमाचम इति दीर्घः अक्लाम्यत् क्लान्तश्चाभवत् जिक्लिग्लक्लमुभिग्लानौ शमादित्वात् दीर्घः अखिद्यत् खिन्नश्चाभवत् खिदअध्यौ दैन्यके अखिद्यदपि अश्रान्तमपि रक्तं न्यष्ठीवदक्लाम्यच्चेति वा योज्यम् ॥ १० ॥ भ०

न तानित्यादि । तान् सर्व्वानशुभान्नागणयन् नादृतवन्तः किमेतैरिति अपितु रिपूनास्कन्दन् अभिगतवन्तः द्विषो राक्षसास्तीक्ष्णैरसिभिररीनच्छिन्दन् छिन्नवन्तः तथा तोमरैस्तीक्ष्णैरभिन्दन् विदारितवन्तः ॥ ११ ॥ ज० म०

न तानित्यादि । द्विषो राक्षसास्तान् सर्व्वान् पूर्व्वोक्तान् रविमण्डलविदारणादीनशुभान् नागणयन् अवज्ञातवन्तः किमेभिः कार्य्यमिति भावः शत्रून् अभिगतवन्तश्च पुनरसिभिश्छिन्नवन्तः रिपूनित्यर्थात् छिदेरुधादित्वात् श्नन् नशो न्ऽप्याविति आकाररहितत्वं तथा तोमरैर्विदारितवन्तः भिदेः पूर्व्ववत् यत् ॥ ११ ॥ भ०

न्यक्रन्तन्नित्यादि । चक्रधाराभिः न्यकृन्तन् छिन्नवन्तः तुचादित्वान्नुम् शक्तिभिश्च दृढमत्यर्थमतुदन् व्यथितवन्तः भल्लैरविध्यन् ताडितवन्तः

आस्यन् प्लवङ्गमा वृक्षानधून्वन् भूधरैर्भृशम् ।
अहिंसन् मुष्टिभिः क्रोधाददशन्दशनैरपि ॥ १३ ॥
प्रादुन्वन् जानुभिस्तूर्णमतुदंस्तलकूर्परैः ।
प्राह्विण्वन्नरिमुक्तानि शस्त्राणि विविधानि च ॥ १४ ॥

ग्रहिज्येति सम्प्रसारणं उपाग्रैस्तीक्ष्णाग्रैस्तोमरैरलं पर्य्याप्तमहन् हतवन्तः हन हिंसायां रुधादित्वात् श्नम् अल्लोपानुस्वारौ ॥१२॥ ज०म०

व्यक्तन्नित्यादि । राक्षसाश्चक्रधाराभिर्व्यक्तन्नन् कर्त्तीरुपच्छिदि तुचादित्वात् तुन् शक्तिभिर्हं व्ययमासुः तदशत्रौ व्यथे उपाग्रैर्भल्लैरविध्यन् व्यधौ ताड़ने दिवादित्वात् श्यन् अपिद्रस्य ङित्त्वात् ग्रहज्याद्योरिति जिः अलमत्यर्थं तोमरैर्हिंसितवन्तः तहधहन्‌भूशहिंसे रुधादित्वात् नम् नणो नेऽणौ अहं हन् स्थूलपट्टिशैरिति क्वचित् पाठः। पट्टिशो लौहदण्डो यस्तीक्ष्णधारः क्षुरोपोम इति वैजयन्ती ॥ १२ ॥ भ०

आस्यन्नित्यादि । प्लवङ्गमा अपि वृक्षानास्यन् क्षिप्तवन्तः असु क्षेपणे तथा भूधरैः पर्वतैरधून्वन् हतवन्तः उपधायाश्चेति दीर्घः क्रोधान्मुष्टिभिरहिंसन् ताड़ितवन्तः दशनैर्दन्तैरदशन् खादितवन्तः दन्शसन्जस्वन्जां शपीत्यनुनासिकलोपः ॥ १३ ॥ ज० म०

आस्यन्नित्यादि । वानरा वृक्षान् आस्यन् क्षिप्तवन्तः असु इर्क्षेपे पर्वतैर्हिंसितवन्तः धुर्विहिंसेर्व्यनचतयीति दीर्घः क्रोधात् मुष्टिभिरहिंसन् हिसधिकिहिंसे रुधादित्वात् श्नम् नणोनल्लोप्य इति इदनुबन्धजातनकारस्य लोपः ततो नणोनेऽणौ दन्तैः खादितवन्तः दन्शौ दंशने सन्जदन्शस्वन्जस्वन्जोऽपि न लोपः ॥ १३ ॥ भ०

प्रादुन्वन्नित्यादि । जानुभिस्तूर्णं प्रादुन्वन् पीडितवन्तः टुदु उपतापे स्वादिः तलकूर्परैः हस्ततलैः प्रकोष्ठैश्चातुदन् व्यथितवन्तः अरिभिर्मुक्तानि विविधानि यानि शस्त्राणि तानि प्राह्विण्वन् प्रह्वितवन्तः ॥ १४ ॥ ज० म०

प्रादुन्वन्नित्यादि । जानुभिः प्रादुन्वन् पीड़ितवन्तः ट्वोडुनङ्गोपतापे स्वादित्वात् श्नु च्छ्वौरिति वत्वं तलैश्चपेटैः कूर्परैः कफोणिभिश्चातुदन्

अतृणेट् शक्रजिच्छत्रू नभ्राम्यच्च समन्ततः ।
अध्वनच्च महाघोरं न च काञ्चन नादुनोत् ॥ १५ ॥
नाजानन् सन्दधानन्तं धनुर्नैक्षन्त विभ्रतम् ।
नेषूनचेतन्नस्यन्तं हतास्तेनाविदुर्द्विषः ॥ १६ ॥

तुदशओ व्यथे अनुदन्निति पाठे नुदशओ प्रेरणे तत्रश्चाधः स्वरूपे च खड्गमुष्टिचपेटयोरिति विश्वः । स्यात् कफोणिस्तु कूर्पर इत्यमरः । अरिभिर्निशाचरैर्यानि शस्त्राणि मुक्तानि तानि पुनस्तेभ्य एव प्रहितवन्तः छिनवर्द्धने गतौ प्राग्वन्नोण इति णत्वम् ॥ १४ ॥ २०

अतृणेडित्यादि । ततः शक्रजिदिन्द्रजित् शत्रूनतृणेट् हिंसितवान् तृहेः श्नम् तस्य तृणह इम् हलङ्यादिलोपः हकारस्य ढत्वजस्त्वचर्त्वानि समन्ततश्चाभ्राम्यत् भ्रान्तवान् महाघोरञ्च भीषणं स्वनं अध्वनत् नादितवान् नच काञ्चन नादुनोत् काञ्चिदपि न नोपतापितवान् अपितु सर्व्वानपि पीडितवानित्यर्थः ॥ १५ ॥ ज० म०

अतृणेडित्यादि । इन्द्रजित् अरीन् हिंसितवान् तृहधुहनुभुश हिंसे रुधादित्वाच्छ्नम् तृहइणपिङ्स्ते इति इन हल्ङ्याद्भ्यादिसेरिति दिलोपः होढः समन्तात् सर्व्वतो भ्राम्यति स्म भ्राम: शमादित्वात् दीर्घः महाघोरं ध्वनिञ्च न नादुनोदिति न किन्तु पीड़ितवान् ॥ १५ ॥ भ०

नाजानन्नित्यादि । धनुषि शरं सन्दधानमारोपयन्तमिन्द्रजितं नाजानन् न ज्ञातवन्तः धनुर्विभ्रतं नैचन्त धनुर्द्धारयन्तं न दृष्टवन्तः इषून् शरानस्यन्तं क्षिपन्तं नाचेतन् हस्तलाघवात् न ज्ञातवन्तः चिती संज्ञाने ङ्मो ह्रस्वादिति ङमुट् तेन हताः सन्तो द्विषः आविदुः ज्ञातवन्तः पूर्व्वोक्तं विजम्भस्तस्तदिभ्यस्त्वेति रोर्जुस् ॥ १६ ॥ ज० म०

नाजानन्नित्यादि । धनुषि शरं सन्दधानमारोपयन्तं तमिन्द्रजितं योधा न ज्ञातवन्तः ज्ञागबोधने स्यादानपाघ्रेति जादेशः धनुर्विभ्रतं धारयन्तं तं न ददृशुः इषून् बाणान् अस्यन्तं क्षिपन्तं अज्ञातवन्तः चिती ज्ञाने सर्व्वत्र हस्तलाघवं हेतुः केवलं तेन हताः सन्तो द्विषः

अशृण्वन्नन्यतः शब्दं प्रपलायन्त चान्यतः ।
आक्रन्दमन्यतोऽकुर्वंस्तेनाहन्यन्त चान्यतः ॥ १७ ॥
प्रालोठन्त व्यभिद्यन्त परितो रक्तमस्रवन् ।
पर्य्यश्राम्यन्नतृषंश्च हतास्तेनाम्रियन्त च ॥ १८ ॥

कपयः पूर्व्वोक्तं ज्ञातवन्तः विदज्ञ मतौ द्विषत्रिदात इति अन् छसः ॥ १६ ॥ भ०

अशृण्वन्नित्यादि । अन्यतः अन्यस्मिन् प्रदेशे केचिद्द्विषः आक्रन्दन् शब्दमशृण्वन् श्रुवः शृचेति शृभावः श्नुप्रत्ययश्च अन्यत्र स्थिताः प्रपलायन्त पलायिता अन्यतोऽन्यत्र प्रदेशे स्थिताः आक्रन्दं व्यकुर्व्वन् रोदनं कृतवन्तः अन्यतोऽन्यत्र तेनेन्द्रजिता अहन्यन्त व्यापादिताः कर्म्मणि लङ् सर्व्वत्राद्यादित्वात् त्रिः ॥ १७ ॥ ज०भ०

अशृण्वन्नित्यादि । केचित् द्विषोऽन्यतोऽन्यस्मिन् देशे तस्य शब्दं श्रुतवन्तः श्रोश्रुर्भैर इति श्रु र्जिश्नोरिति सामान्योक्तत्वात् श्रुगताविति भौवादिकस्य श्रुन गतौ श्रुताविति स्वादिपठितस्य च ग्रहणं श्रवणार्थकोऽपि पाणिनिप्रकृतिभिर्भ्वादौ पठ्यते भ्वादिपाठवचनात् भवतीत्यपि स्यादिति टीकाकृतः। अन्यत्र च पलायिताः अन्यत्र स्थिता रोदनञ्चक्रुः तेनेन्द्रजिता चान्यत्र हताः तसूक्तेरिति सप्तम्यां तस् ॥१७॥ भ०

प्रालोठन्तेत्यादि । तेन हताः सन्तः केचिद्भूमौ प्रालोठन्त लुठ लोठने भ्वादितस्ततो व्यभिद्यन्त व्यनीयन्त हताः सन्त इतस्ततो नीताः कर्म्मणि लङ् परितः समन्ताद्रक्तमस्रवन् स्रुतवन्तः पर्य्यश्राम्यन् खिन्नाः अतृष्यन् पिपासिताः दिवादित्वात् श्यन् केचिदम्रियन्त म्रियतेर्लुङ्लिङोश्चेति तङ् ॥ १८ ॥ ज० भ०

प्रालोठन्तेत्यादि । तेनेन्द्रजिता हताः केचित् भूमौ प्रालोठन्त लुठङ् प्रतिघाते व्यभिद्यन्त भिदेः कर्म्मणि रूपं परितः समन्तात् रक्तञ्च स्रुतवन्तः पर्य्यश्राम्यन् परिश्रान्ताः श्रमुश्यजि इत्यपः शेदयोः श्रमादित्वाद्दीर्घः अतृष्यन् पिपासिताः अम्रियन्त हताः लङ्दीर्घमस्य ॥ १८ ॥ भ०

सौमित्रिराकुलस्तस्मिन् ब्रह्मास्त्रं सर्वरक्षसाम्।
निधनायाजुहूषत्तं व्यष्टम्भाद्रघुनन्दनः॥ १९॥
ततो मायामयीं सीतां घ्नन् खड्गेन वियद्गतः।
अदृश्यतेन्द्रजिद्वाक्यमवदत्तं मरुत्सुतः॥ २०॥
मापराधीदियं किञ्चिदभ्रश्यत् पत्युरन्तिकात्।
सीतां राक्षस! मास्मैनां निरष्ठाः पाप! दुःखिताम्॥ २१॥

सौमित्रिरित्यादि। तस्मिन् इन्द्रजिति तथाभूते सति सौमित्रिराकुलो व्यस्तचित्तः सर्वरक्षसां निधनाय ब्रह्मास्त्रमाजुहूषत् आह्वातुमैच्छत् अभ्यस्तस्य चेति अभ्यस्ताकारस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणं तञ्च सौमित्रिं रघुनन्दनो रामः व्यष्टम्भात् निवारितवान् मा भूद्विभीषणस्यापि नाश इति स्तन्भु स्तन्भित्यादिना श्नाप्रत्ययः स्तम्भेरिति मूर्द्धन्यः॥ १९॥ ज० म०

सौमित्रिरित्यादि। तस्मिन्निन्द्रजिति अर्थात्तथाभूते सति सौमित्रिर्लक्ष्मण आकुलः सन् सर्वेषां रक्षसां निधनाय ब्रह्मास्त्रं आह्वातुमैच्छत् ह्वोद्देर्जिः घोऽङ्कानिङ्गमां तं सौमित्रिं रामो निवारितवान् विभीषणनाशभयात् स्तम्भुः सौत्रः स्वादिः गोक इत्यादिना षत्वम्॥ १९॥ भ०

तत इत्यादि। ततोऽनन्तरं इन्द्रजित् वियद्गतः आकाशगतः सीतां मायामयीं मायानिर्मितां खड्गेन घ्नन् व्यापादयन्नदृश्यत दृष्टः कर्मणि लङ् तथाभूतं राक्षसं मरुत्सुतो हनूमान् वाक्यमवदत् भाषितवान्॥ २०॥ ज० म०

तत इत्यादि। तदनन्तरमाकाशगतो मायानिर्म्मितां सीतां खड्गेन मारयन्निन्द्रजिद्दृष्टो हनूमतेत्यर्थात् कर्म्मणि रूपं तं तथाभूतं मरुत्सुतो हनूमान् वाक्यमवदत्॥ २०॥ भ०

मापराधीदित्यादि। हे पाप! राक्षस सीता पत्युरन्तिकादभ्रश्यत् अपगता इयं भवतो नापराधीत् नापराद्धा राधसाधसंसिद्धाविति स्वादौ तस्मादेनां दुःखितां मास्म निरष्ठाः मा बधीः स्मोत्तरे लङ्चेति वर्त्तमाने लङ्॥ २१॥ ज० म०

पीडाकरममित्राणां कर्त्तव्यमिति शक्रजित् ।
अब्रवीत् खड्गकृष्टश्च तस्या मूर्द्धानमच्छिनत् ॥ २२॥
यत्कृतेऽरीन् व्यग्रहीम समुद्रमतराम च ।
सा हतेति वदन् रामुपातिष्ठन्मरुत्सुतः ॥ २३ ॥

मापराध्मीदित्यादि । हे पाप ! राक्षस ! इयं सीता पत्युरन्तिकात् अभ्यशत् अपगता न किञ्चिदपराधं चकार राध्मीयविद्धौ श्नन् घिर्व्यु अधःपाते तस्मादेनां दुःखितां मास्म निग्रहीः मा बधी मास्मेन घीर्थौ ॥ २१ ॥ म०

पीड़ाकरमित्यादि । इयमपराद्धा भवतु न वा सर्वथा यदमित्राणां पीडाकरं तदवश्यं कर्त्तव्यमिति शक्रजिदब्रवीत् उक्तवान् खड्गकृष्टश्च कृष्टः खड्गो येन प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः तस्या मूर्द्धान-मच्छिनत् छिन्नवान् तियोहलङ्यादिलोपः दकारस्य चर्त्वम् ॥ २२ ॥ ज०म०

पीड़ाकरमित्यादि । अमित्राणां पीड़करं कर्म्म अवश्यं कर्त्तव्यमि-त्यनपराधाया अप्यस्या बधो युक्त इत्यर्थः इति इन्द्रजिदब्रवीत् ब्रुधातुर्जौ पिङ्गसर्वेम ब्रुव इतीम् सुकृष्टः खड्गो येन ताडयः सन् तस्या मूर्द्धानं छिन्नवान् प्रहरणस्योभयथेति परनिपातः स्वमतेऽभिधानं नियामकम् ॥ २२ ॥ भ

यत्कृत इत्यादि । यस्याः कृते यन्निमित्तं परान् अशोकवनिका-स्थितान् व्यग्रहीम विगृहीतवन्तः नित्यङित इति लङि उत्तमस्य लोपः समुद्रं चातराम तीर्णवन्तः अतो दीर्घोयञीति दीर्घः सा सीता हतेति वदन्मरुत्सुतः राममुपातिष्ठत् ढौकितवान् अत्र यमुना गङ्गामुप-तिष्ठत इत्येवं सङ्गतकरणं उपश्लेषो नास्तीति उपाद्देवपूजेत्यादिना तङ् न भवति ॥ २३ ॥ ज० म०

यत्कृत इत्यादि । यस्याः सीतायाः कृते निमित्ते वयं शत्रून् निगृहीतवन्तः समुद्रमुत्तीर्णवन्तश्च सा सीता हता इति वदन् मरुत्सुतो

ततः प्रामुह्यतां वीरौ राघवावारुतां तथा ।
उष्णञ्च प्राणितां दीर्घमुच्चैर्व्याक्रोशतां तथा ॥ २४ ॥
तावभाषत पौलस्त्यो मास्म प्ररुदितं युवाम् ।
भ्रुवं स मोहयित्वास्मान् पापोऽगच्छन्निकुम्भिलाम् ॥२५॥
मा स्म तिष्ठत तत्रस्थो बध्योऽसावकृतानलः ।

रामं उपस्थितवान् मैताध्वमङ्गाराधे इत्यत्र यङ्क उपश्लेषः स नास्तीति न सम् ॥ २२ ॥ भ०

तत इत्यादि । ततो हनूमद्वचनानन्तरं राघवौ वीरौ प्रामुह्यतां मोहं गतौ अथारुतां क्रन्दितवन्तौ रुशब्दे ततो वृद्धिर्न भवति तत्रापि सार्वधातुक इत्यनुवर्त्तते तथा दीर्घमुष्णञ्च प्राणितां निश्वसितवन्तौ अन प्राणने रुदादिभ्यः सार्वधातुक इतीट् तथा उच्चैराक्रोशतां हा सीतेति आहूतवन्तौ ॥ २४ ॥ ज० म०

तत इत्यादि । हनूमतो वचनानन्तरं वीरौ रामलक्ष्मणौ मोहं जग्मतुः मुह्यत्विति वैचित्ते तथा अरुतां क्रन्दितवन्तौ रुलध्वनौ दीर्घमुष्णञ्च प्राणितां निश्वसितवन्तौ अनघ्लु प्राणने रुद्राद्यो योऽहलस्येम् आग्वलोपः उच्चैर्व्याक्रोशतां हा सीतेत्याहूतवन्तौ क्रुशजौ वादे इतौ ॥ २४ ॥ भ०

तावित्यादि । पौलस्त्यो विभीषण आगत्य तौ तथाभूतावभाषत उक्तवान् युवां मास्म प्ररुदितं मा रोदिष्टं स्मोत्तरे लङ् चेति लङ् यतो ध्रुवमवश्यं स इन्द्रजित्पापः अस्मान् मोहयित्वा मायया विमोह्य सुहेरकर्म्मकत्वाद्गतिबुद्धीत्यादिना कर्मसंज्ञा निकुम्भिलामग्निगृहमगच्छत् गतवान् तत्र भूतानद्यतन एव लङ् ॥ २५ ॥ ज० म०

तावित्यादि । पौलस्त्यो विभीषणस्तौ राघवावुक्तवान् युवां रोदनं न कुरुतं स पाप इन्द्रजित् निश्चितं अस्मान् मोहयित्वा निकुम्भिलां यज्ञस्थानविशेषं गतवान् सुहेरकर्म्मकत्वात्प्रयोज्यस्य कर्मत्वम् ॥२५॥ भ०

मास्मेत्यादि । मास्म तिष्ठत मा विलम्बध्वं गच्छत स्मोत्तरे लङ्

अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्ज्जिते ॥ २६ ॥
ब्रह्मादधाद्वधं तस्य तस्मिन् कर्मण्यसंस्थिते।
प्रायच्छदाज्ञां सौमित्रे र्यूथपानाञ्च राघवः ॥ २७ ॥
तां प्रत्यैच्छन् सुसंप्रीतास्ततस्ते सविभीषणाः।
निकुम्भिलां समभ्यायन्नबध्यन्त च राक्षसैः ॥ २८ ॥

अतस्तवस्यो निकुम्भिलास्थोऽसावहुतानलः अकृताग्निकार्य्यो बध्यः शक्यो हन्तुं शकि लिङ् चेति चकारात् लङ् कृताश्चेति वचनात् लङ् कृताश्चेति वचनात् हनो बधश्चेति उपसंख्यानाद्यत् कथमहुतानलो बध्य इति चेत् अस्त्रे ब्रह्मशिरसि ब्रह्मशिरोनाम्नि उग्रे दुःप्रयोगे स्यन्दने च अनुपार्ज्जितेऽप्राप्ते सति ॥ २६ ॥ ज० म०

याक्षेत्यादि। यूयं मा तिष्ठत न विलम्बध्वं यतस्तवस्योऽसौ इन्द्रजित् अहुतानलोऽकृतयज्ञ एव बध्यः कथमित्याह ब्रह्मशिरोनाम्नि उग्रे दुःसहे अस्त्रे स्यन्दने रथे च अनुपार्ज्जिते अप्राप्ते सति तदुभयप्राप्तेरबध्यः स्यादिति भावः ॥ २६ ॥ भ०

कथमुभयं तेनोपार्ज्यत इत्याह

ब्रह्मेत्यादि। यतस्तस्यां निकुम्भिलायां कर्मण्यसंस्थिते असमाप्ते ब्रह्मा बधं तस्मादधात् धारितवान् उक्तवानित्यर्थः स्तौह्विर्वचनं एवं विभीषणवचः श्रुत्वा राघवः सौमित्रे र्यूथपानाञ्च गन्तुमाज्ञां प्रायच्छत् दत्तवान् दाणदाने पाघ्रादिना यच्छादेशः ॥ २७ ॥ ज० म०

ब्रह्मेत्यादि। तस्मान्निकुम्भिलायां तस्मिन् होमकर्मणि असंस्थिते अप्राप्ते सति तस्य मेघनादस्य बधं ब्रह्मा आहितवानुक्तवानित्यर्थः डुधाञ्धारणे पुष्टौ ह्लादीरेष्टिः इति विभीषणवचः श्रुत्वा इन्द्रजिद्वधार्थं रामो लक्ष्मणस्य कपियूथपानाञ्च सुग्रीवादीनाञ्चाज्ञां दत्तवान् सम्बन्धे षष्ठी दाणदाने स्यादानमेति यच्छादेशः दाणोजुहोत्यादिनिरासार्थं नानुबन्धस्य पूर्व्वाचार्य्यकृतत्वात् सूत्रे तथा गृहीतम् ॥ २७ ॥ भ०

तामित्यादि। ततस्ते सविभीषणाः सुसंप्रीतास्तामाज्ञां प्रत्यैच्छन्

दिक्पालैः कदनं तत्र सेने प्राकुरुतां महत् ।
एतां रक्षांसि निर्जित्य दूरं पौलस्त्यलक्ष्मणौ ॥ २९ ॥
तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितम् ।
सोऽजुहोत् कृष्णवर्त्मानमामनन्मन्त्रमुत्तमम् ॥ ३० ॥

प्रतीष्टवन्तः प्रतिगृहीतवन्तः इषु इच्छायां इषुगमियमां छः ते च निकुम्भिलां समस्थायन् समभिगताः अयगतौ तत्र च ये दिक्पालाः राक्षसाः तैररुध्यन्त रुद्धाः प्रवेष्टुं पन्थानं न लब्धवन्तः कर्म्मणि लङ् ॥ २८ ज० म०

तामित्यादि । ततोऽनन्तरं विभीषणसहितास्ते लक्ष्मणादयः सुसम्प्रीताः सन्तः तामाज्ञां प्रत्यैच्छन् जगृहुः इषुगमियमां छे स्यादानपेति इच्छादेशः ततस्ते निकुम्भिलां समाजग्मुः ते च राक्षसैर्दिक्पालैश्च निरुद्धाः निकुम्भिलाप्रवेशे निवारिताः कर्म्मणि रूपम् ॥ २८ ॥ भ०

दिक्पालैरित्यादि । तत्र निकुम्भिलोद्देशे उभे अपि सेने महत्कदनं विनाशनं युद्धं वा प्राकुरुतां कृतवन्तौ तानि रक्षांसि निर्जित्य पौलस्त्यलक्ष्मणौ दूरमैतां गतवन्तौ इणगतौ अणि वृद्धिः ॥ २९ ॥ ज०म०

दिक्पालैरित्यादि । दिक्पालैरिति पूर्व्वश्लोकेनान्वयः तत्र निकुम्भिलायां द्वे सैन्ये महत्कदनं चक्रतुः कदनं युद्धमाहव इति कोषः तानि रक्षांसि निर्ज्जित्य विभीषणलक्ष्मणौ दूरमैतां जग्मतुः दूरोभूयोऽम् ॥ २९ ॥ भ०

तत्रेत्यादि । निकुम्भिलायां तावैक्षेतां दृष्टवन्तौ इन्द्रजितं कृतधिष्ण्यं कृताग्न्यगारं समाहितं एकाग्रमनसं स इन्द्रजित् कृष्णवर्त्मानमजुहोत् हुतवान् मन्त्रमुत्तममामनन् आवर्त्तयन् म्ना आवर्त्तने शतरि पाघ्रादिना मनादेशः ॥ ३० ॥ ज०म०

तत्रेत्यादि । निकुम्भिलायां कृतधिष्ण्यं कृताग्निगृहं कृतासनं वा समाहितमेकाग्रचित्तं इन्द्रजितं तावैक्षेतां दृष्टवन्तौ ईक्षङ् दर्शने स इन्द्रजित् कृष्णवर्त्मानमग्निं हुतवान् उत्तमं मन्त्रं जपन् म्नाभ्यासे स्यादानेति मनादेशः धिष्ण्यं स्याने गृहे भेऽग्नावित्यमरः ॥ ३० ॥ भ०

अध्यायच्छक्रजिद्ब्रह्म समाधेरचलन्न च ।
तमाह्वयन् सौमित्रिरगर्ज्जच्च भयङ्करम् ॥ ३१ ॥
अक्रुध्यदिन्द्रजित्तत्र पितृव्यञ्चागदद्वचः ।
त्वमत्राजायथा देहमिहापुष्यः सुरामिषैः ॥ ३२ ॥
इहा जीव इहैव त्वं क्रूरमारभथाः कथम् ।

अध्यायदित्यादि । शक्रजिदिन्द्रजित्परं ब्रह्माध्यायत् चिन्तितवान् ध्यै चिन्तायां आत्वं शिति न भवति न च समाधेश्चित्तवृत्तिनिरोधादचलत् चलितवान् तं तथाभूतमिन्द्रजितं सौमित्रिर्युद्धायाह्वयत आहूतवान् भयङ्करं चागर्ज्जत् शब्दितवान् ॥ ३१ ॥ ज०म०

अध्यायदित्यादि । इन्द्रजित् ब्रह्म वेदमात्मानं वा अध्यायत् ध्यै ङ चिन्तने समाधेश्चित्तनिरोधान्न चलितः तं तथाभूतमिन्द्रजितं लक्ष्मणो युद्धायाहूतवान् भयङ्करं गर्ज्जनं कृतवांश्च ॥ ३१ ॥ भ०

अक्रुध्यदित्यादि । तत्र तस्मिन्नाह्वाने कृतवति गर्ज्जिते च सति अक्रुध्यत् क्रुद्धः क्रुधकोधे दैवादिकः पितृव्यञ्च पितृभ्रातरं विभीषणं पितृशब्दाद्भ्रातरि व्यन्निपातितं वचो वक्ष्यमाणमगदत् उक्तवान् अत्रास्मिन् राक्षसकुले त्वमजायथाः जातोऽसि जनी प्रादुर्भावे दैवादिकोऽनुदात्तेत् इह च देहः सुरामिषैरपुष्यत् वृद्धिं गतः पुषिर्दैवादिकः देहमपुष्यः इति पाठान्तरं तत्र देहं पोषितवानसि अन्तर्भावितण्यर्थो द्रष्टव्यः ॥ २२॥ ज०म०

अक्रुध्यदित्यादि । तत्र निकुम्भिलायां लक्ष्मणे गर्ज्जिते सति इन्द्रजित् अक्रुध्यत् क्रुध इकोपे पितृभ्रातरं विभीषणं वाचा जगदे च पितुर्भ्राता पितृव्यो निपातनात् अत्र राक्षसकुले त्वं जातः जनीध्यङ्जनने ज्ञाजनोर्जेति जादेशः इह त्वं सुराभिरामिषैश्च सुराणामामिषैर्वा देहं वर्द्धितवानसि त्वपुषश्री वृद्धौ चकारात् पुष्टौ सकर्म्मकोऽयं पुष्यति श्रिर्यं भिक्षामित्यादि प्रयोगात् जयमङ्गलायामकर्म्मकत्वं भ्रान्त्योक्तं ॥ ३२॥ भ०

इहेत्यादि । इहाजीवः जीवितोऽसि कथमिहैव त्वं क्रूरं कर्म्म

नापश्यः पार्ष्णिमार्द्रं त्वं बन्धुत्वं नाप्यपैक्षथाः ॥ ३३॥
अधर्म्मान्नात्रसः पाप ! लोकवादान्न चाबिभेः ।
धर्मदूषण ! नूनं त्वं नाजाना नाशृणोरिदम् ॥ ३४ ॥
निराकृत्य यथा बन्धून् लघुत्वं यात्यसंशयम् ।

आरभथाः आरब्धवानसि आर्द्रं पार्ष्णिञ्च नापश्यस्त्वं न दृष्टवानसि या-वता कालेन भुक्त्वा पार्ष्णिः शुष्यति तावन्तमपि कालं नापेक्षितवानसो-त्यर्थः आस्तां तावदेतत् बन्धुत्वमपि एकगोत्रत्वमपि न पैक्षथाः ॥ ३३ ॥ ज०म०

इहाजीवेत्यादि । अस्मिन् वंशे त्वं जीवितोऽसि जीवस्य जीवः प्राणे तत्कथमिहैव त्वं क्रूरं कर्म आरब्धवानसि रभौडन्स्यात्तु रामस्य कथमार्द्रं पार्ष्णिं न दृष्टवानसि भोजनानन्तरं यावन्न शुष्कः तावदेव स्थित-वानसीति लोकोक्तिस्थापनायेदमुक्तं तव स्नेहात् ममार्द्रं हिंसाशून्यं पार्ष्णिं कुतो न दृष्टवानसीत्यन्ये । आस्तां तावदन्यत् बन्धुत्वमेकगोत्रमपि कुतो नापेक्षितवानसि ॥ ३३ ॥ भ०

अधर्म्मादित्यादि । हे पाप ! अधर्म्मादपि नात्रसः न त्रस्तोऽसि त्रसी उद्वेगे दिवादौ वाभ्राशेत्यादिना पक्षे श्यप् लोकवादात् जनापवादात् न चाबिभेः न भीतोऽसि श्लौद्विर्वचनं धातोर्गुणः भीत्रार्था-नामित्यपादानसंज्ञा हे धर्मदूषण ! धर्मस्य दूषण ! धर्मोच्छेदक ! अतिवि-परीते स्थितत्वात् दुषवैकृत्ये दोषोणाविन्दुपधाया जत्वम् दूषयतीति दूषणः कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् नतु नन्द्यादिपाठे ल्युः तत्र हि न दिवाधिमदिदूषिसाधिषर्चिशोभिरोचिभ्यो ण्यन्तेभ्यः पूजा-यामित्युक्तं न चात्र पूजा गम्यत इति नूनं अवश्यं त्वं नाजानाः स्वयमिदं न ज्ञातवानसि ज्ञा अवबोधने क्रियादावुदात्तेत् ज्ञाजनोर्जा इदमन्यतोऽपि नाशृणोः द्विषद्भ्यो न श्रुतवानसि श्रुचः शृच् ॥ ३४ ॥ ज० म०

अधर्म्मादित्यादि । हे पाप ! अधर्म्मादपि न त्रस्तोऽसि त्रस त्रसी-

पितृव्येण ततो वाक्यमभ्यधीयत शक्रजित् ॥ ३५ ॥
मिथ्या मास्म व्यतिक्रामो मच्छीलं मा न बुध्यथाः ।
सत्यं समभवं वंशे पापानां रक्षसामहम् ॥ ३६ ॥
न त्वजायत मे शीलं तादृग्याद्दक् पितुस्तव ।

त्वामशे क्रमक्षमभ्रमेत्यादिना श्यनः पाक्षिकत्वात् शप् लोकापवादादपि न भीतोऽसि त्रिभीत्रिभीतमां हे धर्मदूषण ! धर्मच्छेदक ! कुलोच्छेदकत्वात् नूनं निश्चितं त्वमिदं वक्ष्यमाणं न ज्ञातवान् न श्रुतवानसि ॥ ३४ ॥ भ०

किन्तदित्याह

निराकृतेरित्यादि । यथा बन्धून् निराकृत्य परित्यज्य लघुतां यात्व-संशयमसन्देहं ततः पुत्त्रोक्तेरनन्तरं पितृव्येण विभीषणेन शक्रजिद्वाक्यम-भ्यधीयत अभिहितः कर्मणि लङ् घुमेतीत्वम् ॥ ३५ ॥ ज० म०

निराकृत्येत्यादि । यथा बन्धून् निराकृत्य परित्यज्य असंशयं निश्चितं लघुत्वं लोको याति गच्छति इदं नाजाना इति पूर्वेणान्वयः शीप्रकरणे यातीति कोप्रवेशो शोविषयेऽपि भूतसामान्ये क्वचित् को स्या-दिति सूचनाय वस्तुतस्तु प्रतिज्ञातस्यैकस्य सिद्ध्यर्थमस्यार्पणं न दोषावहं ततस्तद्वचनानन्तरं पितृव्येण विभीषणेन शक्रजित् वक्ष्यमाणवाक्यमुक्तः अभिपूर्वधाङ् कर्मणि यक् दामागेत्यागिति ईः ॥ ३५ ॥ भ०

मिथ्येत्यादि । मिथ्या मृषा मास्म व्यतिक्रामः मा परिभूः शिति क्रमेत्यादिना दीर्घः शीलं स्वभावः मा न बुध्यथाः मा न बुद्धास्त्वं अपितु ज्ञातवानसि स्मोत्तरेलङ् वा पापानां रक्षसां वंशेऽहं सत्यं समभवं स-म्भूत इति ॥ ३६ ॥ ज०म०

मिथ्येत्यादि । मिथ्या व्यतिक्रामः न कुरु क्रमः पेऽपिर्घः मम शीलं स्वभावं न बुद्धवानसि न किञ्चित् ज्ञातवानस्येव बुध्यौङ् वेदने पापानां रक्षसां वंशे सत्यमहं सम्भूतोऽस्मि किन्तु तादृक् न शीलमिति वक्ष्यमा-णेनान्वयः ॥ ३६ ॥ भ०

न त्वित्यादि । यद्यप्यहं राक्षसकुले जातस्तथापि तव पितुर्यादृक्

क्षयावहेषु दोषेषु वार्य्यमाणो मयारमत् ॥ २७ ॥
दशग्रीवोऽहमेतस्मादत्यजं न नु विद्विषन् ।
परस्वान्यार्ज्जयन्नारीरन्यदीयाः परामृशत् ॥ २८ ॥

शीलं स्वभावस्तादृक् मे न त्वजायत नैवाभूत् यतोऽसौ क्षयमावहन्तीति क्षयावहाः पचाद्यच् तेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि दशग्रीव इति सम्बन्धः अरमत् रतिं कृतवान् व्याङ्परिभ्यो रम इति परस्मैपदम् ॥ २७ ॥ ज०म०

न त्वजायतेत्यादि । यादृशं तव पितुः शीलं जातं न मम तादृशं शीलं जातं स्यादानेति जनीजा स हि क्षयावहेषु दोषेषु परस्त्रीहरणादिषु मया वार्य्यमाणोऽपि रतिं कृतवान् रमङ्जौ क्रीडे आङ्पूर्वः शेषंपरेत्यादिना पं क्षयं नाशमावहन्ति कुर्वन्तीति पचादित्वादच् ॥ २७ ॥ भ०

दशग्रीव इत्यादि । एतस्मात्कारणादहं रावणमत्यजं त्यक्तवानस्मि पुनर्द्विषन् अमित्रीभवन् द्विषोऽमित्र इति शतृप्रत्ययः तान् दोषानाह परस्वानि परवित्तानि आर्ज्जयत् अन्यैर्याहितवान् अर्ज्जसर्ज्जन इति भ्वादौ अर्ज्ज प्रतियत्न इति चौरादिकस्य वा रूपं अन्यदीयाः नारीश्च परामृशत् स्पृष्टवान् मृश आमर्शन इति तुदादावनुदात्तेत् ॥ २८ ॥ ज०म०

दशग्रीव इत्यादि । तस्मात्कारणादहं दशग्रीवं त्यक्तवान् नतु शत्रुर्भवन् परमते द्विषः शत्रौ शतृ स्वमते न विभीषणेन विद्वेषं वैरं कुर्वन्नित्यर्थः शत्रुवाचित्वे वृद्धिः तान् दोषानाह परधनानि आर्ज्जयत् आनीय संस्कृतवान् हृतवानित्यर्थः । अर्ज्जक् संस्कारे किंवा अर्ज्ज अर्ज्जने ञिः प्रेरणे अन्यदीया नारीः परामृशत् अपहृतवान् मृशशौ-मृशि अन्येषामिमा इति विकारसङ्घेत्यादिना ईयः दकारागमो निपातनात् किंवा अनेकेषां पतिश्वशुरादीनां दा शुद्धिर्याभ्यस्ता अन्यदाः सा-ध्वीरित्यर्थः । दैपशोधने क्विप् ततः स्वार्थे ईयः ॥ २८ ॥ भ०

व्यजिष्टयत् सुरान्नित्यं प्रामाद्यद्गुणिनां हिते ।
आशङ्कत सुहृद्बन्धून्नष्टवान् बह्वमन्यत ॥ ३९ ॥
दोषैररमतैभिर्स्तो पितात्यज्यत यैर्मया ।
ततोऽरुष्यदनर्दच्च द्विविंशतिभिरेव च ॥ ४० ॥
शरैरताडयद्बन्धुं पञ्चविंशतिभिर्नृपम् ।

व्यजिष्टयदित्यादि । सुरान् नित्यं व्यजिष्टयत् विपक्षीतुमैच्छत् गुणिनां माल्यवत्प्रभृतीनां यदुक्तं हितं तस्मिन् विषये प्रामाद्यत् प्रमादं गतः मदो हर्षे शमामष्टानामिति दीर्घः सुहृदो बन्धूंश्च सुहृद्बन्धून् आशङ्कत विकल्पितवान् अष्टवान् अविदुषः प्रहस्तादीन् बह्वमन्यत श्लाघितवान् ॥ ३९ ॥ ज० म०

व्यजिष्टयदित्यादि । नित्यं देवान् निग्रहीतुं योधयितुं इष्टवान् यहेः सन् ग्रहस्वपप्रच्छां जि नेसुगुहग्रहः सुनीनिमि होढः भ्भान्तस्येति षः षढोः कः गुणिनां मातामहादीनां सम्बन्धे हिते सश्लोकानां हिते वा प्रामाद्यत् अनवहितोऽभवत् प्रमादोऽनवधानतेति कोषः। मदोभिर्यञ्जि हर्षे शमादित्वाद्दीर्घः सुहृदो बन्धून् ज्ञातींश्च शङ्कितवान् शकिङ्कत्वाशङ्कयोः अष्टवान् अपण्डितान् प्रहस्तादीन् बहु अमन्यत उरु श्लाघितवान् ॥ ३९ ॥ भ०

दोषैरित्यादि । एभिर्दोषैस्तव पिता रावणः अरमत क्रीडितवान् यैर्दोषैर्मया अत्यज्यत कर्मणि लङ् ततः पितुर्दोषप्रकाशनवचनादनन्तरं रावणिरिति वक्ष्यमाणेन सम्बन्धः अरुष्यत् रुटः रुष रुषौ अनर्दच्च विस्फूर्जितवांश्च ॥ ४० ॥ ज० म०

दोषैरित्यादि । एभिर्दोषैस्तव पिता रावणो रमते स्म यैर्दोषैर्मया त्यक्तः कर्मणि रूपं ततः पितृदोषश्रवणात् रावणिरिति वक्ष्यमाणेन सम्बन्धः अरुष्यत् रुषेर्ङिक्रुधि अनर्दत् शब्दं चकार द्विविंशतिभिरिति उत्तरश्लोकेनान्वयः ॥ ४० ॥ भ०

शरैरित्यादि । बन्धुं विभीषणं द्विविंशतिभिरताडयत् चत्वारिंश-

रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान् ॥ ४१ ॥
सारथिञ्चालुनाद्वाणैरभनक् स्यन्दनन्तथा ।
सौमित्रिमकिरद्वाणैः परितो रावणिस्ततः ॥ ४२ ॥
तावस्फावयतां शक्तीर्बाणांश्चाकिरतां मुहुः ।
वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित् ॥ ४३ ॥

तेत्यर्थः द्वे विंशती येषां शराणामिति बहुव्रीहिः एवञ्च द्व्यष्टनः संख्या-यामित्यात्वं न तथा पञ्चविंशतिभिः शरैर्नृपं लक्ष्मणं अताडयत् शते-नेतर्यर्थः द्वौ च विंशतिश्च पञ्चविंशतिश्चेत्यस्मिन् व्याख्याने द्वाविंशत्या पञ्चविंशतेर्न च प्राप्नोति सौमित्रिस्तु तस्य रावणेश्चतुर्हयान् वाणैरम-थ्नात् मथ विलोडन इति क्रियादौ ॥ ४१ ॥ ज० म०

शरैरित्यादि । बभ्रुं विभीषणं द्विविंशतिभिः शरैः रावणिरताड-यत् नृपं लक्ष्मणं पञ्चविंशतिभिः शरैरताडयत् द्वे विंशती संख्ये येष्विति बहुव्रीहिः सौमित्रिस्तस्येन्द्रजितोऽश्वान् बाणैर्हिंसितवान् मन्थगगाहे ॥ ४१ ॥ भ०

सारथिमित्यादि । तस्य रावणेः सारथिं चालुनात् छिन्नवान् प्वादीनां ह्रस्वः तथा स्यन्दनमभनक् भग्नवान् भञ्जो मर्दन इति रुधादिः ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात् वाणैरकिरत् छादितवान् ॥ ४२ ॥ ज० म०

सारथिञ्चेत्यादि । लक्ष्मणो रावणिं सारथिञ्च वाणैश्छिन्नवान् लूञ्‌ छिदि प्वादेः स्वोने इति ह्रस्वः तथा स्यन्दनं रथं भग्नवान् भनुजो आमोटने नशोनलोप्यः इमदङ्ग्रां दिशोरिति दिलोपः चुकिति कङ् ततोऽनन्तरं रावणिः सौमित्रिं परितः समन्तात् वाणैराच्छादित-वान् कॄ विक्षेपे ऋदिरणाविति इर् ॥ ४२ ॥ भ०

तावित्यादि । ताविन्द्रजिल्लक्ष्मणौ शक्तिं सामर्थ्यमस्फावयतां वर्द्धि-तवन्तौ स्फायोवः वाणांश्च मुहुरकिरतां क्षिप्तवन्तौ वारुणमस्त्रं लक्ष्म-णोऽक्षिप्यत् दैवादिकस्य रूपं इन्द्रजिद्रौद्रं पाशुपतमक्षिपत् क्षिप्तवान् तौदादिकस्य रूपम् ॥ ४३ ॥ ज० म०

ते परस्परमासाद्य शस्त्रे नाशमगच्छताम् ।
आसुरं राक्षसः शस्त्रं ततो घोरं व्यसर्ज्जयत् ॥ ४४ ॥
तस्मान्निरपतद्भूरि शिलाशूलर्ष्टिमुद्गरम् ।
माहेश्वरेण सौमित्रिस्तम्भरास्त्रत् सुदुर्ज्जयम् ॥ ४५ ॥
ततो रौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत् ।
तेनागम्यत घोरेण शिरश्चाक्रियत द्विषः ॥ ४६ ॥

तावस्फावयतामित्यादि । तौ इन्द्रजिल्लक्ष्मणौ शक्तिं स्वसामर्थ्यं वर्द्धितवन्तौ शक्तीरिति पाठे अस्त्रविशेषानित्यर्थः स्फायीङ् वृद्धौ ञिः पातिस्फायोरिति वङ् मुहुर्व्वारं वारं वाणानकिरतां क्षिप्तवन्तौ लक्ष्मणो वरुणदैवताकमस्त्रं प्रेरितवान् इन्द्रजिद्रुद्रदैवतमस्त्रं प्रेरितवान् क्षिप प्रेरणे क्षिप्यो लुङि ॥ ४३ ॥ भ०

ते परस्परमित्यादि । ते शस्त्रे परस्परमासाद्य प्राप्य नाशमगच्छतां गते ततस्तन्नाशादनन्तरं राक्षसो रावणिः आसुरं असुरदैवतं शस्त्रं घोरं भीषणं व्यसर्ज्जयत् क्षिप्तवान् ॥ ४४ ॥ ज० भ०

ते परस्परमित्यादि । ते इन्द्रजिल्लक्ष्मणसम्बन्धिनी शस्त्रे परस्परं प्राप्य नाशं जग्मतुः तदनन्तरं राक्षस इन्द्रजित् घोरं असुरसम्बन्धि शस्त्रं विसर्ज्जितवान् ॥ ४४ ॥ भ०

तस्मादित्यादि । तस्मादासुरादस्त्रात् शिलाशूलेष्टिमुद्गरं निरपतत् ऋष्टिः प्रहरणविशेषः तच्चासुरं सुदुर्ज्जयं सौमित्रिः माहेश्वरेण अस्त्रात् स्तम्भितवान् स्तम्भित्यादिना श्ना चकारात् श्नश्च ॥ ४५ ॥ ज० भ०

तस्मादित्यादि । तस्मादासुरास्त्रात् भूरि प्रचुरं शिलादिकं निरपतत् निर्गतं ऋष्टिः खड्गः प्रसारोऽसिर्धर्म्मपालः प्रजाकर इति वैजयन्ती सौमित्रिस्तत् सुदुर्ज्जयमासुरास्त्रं महेश्वरदैवतेन शस्त्रेण स्तम्भितवान् स्तन्भुस्तुम्भुस्कन्भुस्कुन्भ ग्लु बोधने ॥ ४५ ॥ भ०

तत इत्यादि । ततोऽनन्तरं रौद्रसमायुक्तं रौद्रास्त्रेण सहितं माहेन्द्रमस्त्रं लक्ष्मणोऽस्मरत् चिन्तितवान् तेन स्मरणादेवागम्यत आगतं

अतुष्यन्नमराः सर्वे प्राहृष्यन् कपियूथपाः ।
पर्य्यष्वजत सौमित्रिं मूर्द्धन्यजिघ्रच्च राघवः ॥ ४७ ॥
अरोदीद्राक्षसानीकमरोदन्नृभुजां पतिः ।
मैथिल्यै चाशपद्धन्तुं तां प्राक्रमत चातुरः ॥ ४८ ॥
अयुक्तमिदमित्यन्ये तमामात्याः प्रत्यवारयन् ।
न्यरुन्धंश्चास्य पन्थानं बन्धुता शुचमारुणत् ॥ ४९ ॥

भावे लङ् तस्य द्विषः शत्रोः शिरश्चाच्छियत छिन्नं कर्मणि लङ् ॥ ४६ ॥
ज० म०

तत इत्यादि । तदनन्तरं रुद्रदैवतेनास्त्रेण संयुक्तं महेन्द्रदैवतमस्त्रं लक्ष्मणः सस्मार तेनास्त्रेण स्मरणात् आगतं भावे यक् घोरेण द्विष इन्द्रजितः शिरो हृतं छिन्नमित्यर्थः कर्मणि यक् ॥ ४६ ॥ म०

अतुष्यन्नित्यादि । तस्मिन् हृते अमरा देवाः अतुष्यन् तुष्टाः कपियूथपाः प्राहृष्यन् प्रहृष्टाः राघवश्च सौमित्रिं पर्य्यष्वजत् आश्लिष्टवान् दन्शसन्जेत्यनुनासिकलोपः प्राक्सितादड्व्यवायेऽपीति वचनात् परिनिविभ्य इत्यादिना षत्वं मूर्द्ध्नि जिघ्रच्च आघ्रातवान् ॥ ४७॥ ज० म०

अतुष्यन्नित्यादि । तस्मिन् हृते सति सर्वे देवास्तुष्टाः तुषत्त्ष्यौ-ष्णिच चकारात् तुष्टौ कपियूथपाः सुग्रीवादयः सर्वे हृष्टाः हृष्य जि-तुष्टौ रामः सौमित्रिं आलिङ्गितवान् ष्वनुजौ सङ्गे सनुजदनुशस्वनु-जोऽपि नलोपः शीक इत्यादिना षत्वं मूर्ध्नि तमाघ्रातवांश्च घ्रा गन्ध-ग्रहणे स्यादानेत्यादिना जिघ्रः ॥ ४७ ॥ भ

अरोदीदित्यादि । राक्षसानीकं राक्षससैन्यमरोदीत् रुदितं रुदश्च पञ्चभ्य इतीट् नृभुजां पतिः रावणः अरोदत् रुदितः अड्गार्ग्यगालव-योरित्यडागमः मैथिल्यै चाशपत् आक्रुष्टवान् सर्वदोषस्य मूलमिति श्लाघह्नुङित्यादिना कर्मणि सम्प्रदानसंज्ञा ताञ्च हन्तुं आतुरो मन्युवशः प्राक्रमत प्रारब्धवान् प्रोपाभ्यामिति तङ् ॥ ४८ ॥ ज० म०

अरोदीदित्यादि । राक्षससैन्यं अरोदीत् रुधिरुदरोदे० रुदा-

आस्फायतास्य वीरत्वममर्षश्चाप्यतायत ।
रावणस्य ततः सैन्यं समस्तमयुयुत्सयत् ॥ ५० ॥
अग्नीनवरिवस्यंश्च ते नमस्यंश्च शङ्करम् ।
द्विजानप्रीणयन् शान्त्यै यातुधाना भवद्भियः ॥ ५१ ॥

चक्रे सैरिति दिप ईम् रक्षसां पती रावणस्य अरोदत् दिस्रोरम्बेति दिपः पञ्चेऽस् सीतायै चाशपत् आक्रुष्टवान् शपौत् क्रोधे यस्मै दिस्रे-त्यादिना सम्प्रदानत्वं क्रोधेनातुरः सन् तां हन्तुं प्रारब्धवान् प्रोपादा-रम्भ इति मम् ॥ ४८ ॥ भ०

अयुक्तमित्यादि । अन्ये आप्ताः राक्षसाः अयुक्तमेतदिति मन्य-मानाः तं तथाविधं प्रत्यवारयन् आवार्य स्थिताः वृञ् वरण इति चुरादिः अरुन्धंश्च हस्तपादादिग्रहणेन रुद्धवन्तः बन्धुता बन्धुसमूहः अस्य शोकमारुणत् अपनीतवती रुधङ्यादि लोपः धकारस्य जश्-त्वम् ॥ ४९ ॥ ज० म०

अयुक्तमित्यादि । अन्ये आप्ता एतदिष्टा राक्षसा अयुक्तमेतत् स्त्रीहननमित्युक्त्वा तं निवारितवन्तः शनैः पादादिग्रहणैस्तं रुद्धवन्तः बन्धुता बन्धुसमूहस्तस्य शोकमारुणत् अपनीतवान् ॥ ४९ ॥ भ०

आस्फायतेत्यादि । अथ निरुद्धशोकस्य रावणस्य वीरत्वं शौर्य्यं आस्फायत वृद्धिं गतं अमर्षस्य क्रोधः अतायत विस्तारं गतः ततः स रावणः समस्तं सैन्यं अयुयुत्सयत् युयुत्समानं प्रयोजितवान् ॥ ५० ॥ ज० म०

आस्फायतेत्यादि । अथ शोकापनयनानन्तरं रावणस्य वीरत्वं शौर्य्यं वर्द्धते स्म स्फायीङ् संवृद्धौ अमर्षः क्रोधस्य विस्तीर्णः तायृङ् पा-लनसन्तत्योः तदन [illegible] स रावणः समस्तं सैन्यं योद्धुमिच्छां कारयति स्म युधेः सनन्तात् [illegible] ॥ ५० ॥ भ०

अग्नीनित्यादि । [illegible] यातुधानाः भवद्भियः उत्पद्यमानभीतयः अग्नी-नवरिवस्यन् परिचर्य[illegible]न्तः नमोवरिव श्चित्रङ इजिति कृरिवसः प-

परितः पर्य्यवाद्वायुराज्यगन्धिर्मनोरमः ।
अश्रूयत सपुण्याहः स्वस्तिघोषः समुच्चरन् ॥ ५२ ॥
योद्धारोऽबिभरुः शान्त्यै साक्षतं वारि मूर्द्धभिः ।
रत्नानि चाददुर्गाश्च समवाञ्छन्नथाशिषः ॥ ५३ ॥

चर्य्यायामिति क्यच् तदन्ताल्लङ् शङ्करञ्च महादेवमनमस्यन् पूजितवन्तः अत्र नमसः पूजायां क्यच् द्विजांश्च शान्त्यै शान्त्यर्थमप्रीणयन् प्रीणितवन्तः धूञ्प्रीञोर्नुग्वक्तव्यः ॥ ५१ ॥ ज० म०

अग्नीमित्यादि । भवन्ती उत्पद्यमाना भीर्भयं येषां ते राक्षसा अग्नीन् सेवितवन्तः नमस्तपोवरिव इति क्यः शङ्करं प्रणतः पूर्ववत् क्यः शान्त्यै कल्याणाय द्विजान् प्रीणितवन्तः प्रीधूञोर्नुग्वा ॥ ५१ ॥ भ०

परित इत्यादि । अग्निसन्तर्पणादाज्यगन्धिः आज्यस्य गन्धो यस्मिन्नग्नौ स वायुर्मनोरमः परितः सर्वैः वेश्मसु पर्य्यवात् वाति स्म स्वस्तिघोषश्च सपुण्याहः पुण्याहशब्देन सह समुच्चरन्नश्रूयत श्रूयते स्म कर्मणि लङ् ॥ ५२ ॥ ज० म०

परित इत्यादि । परितः सर्वतः आज्यस्य घृतस्य गन्धो यस्मिन् स मनोहरो वायुः प्रकृष्टं वाति स्म गन्धशब्दात् स्वार्थे णिः आगन्तोर्वेति समासान्त इति परः गन्ध इति क्वचित्पाठः पुण्याहसहितः स्वस्तिघोषः समुच्चरन् जनैः श्रूयते स्म ॥ ५२ ॥ भ०

योद्धार इत्यादि । योद्धारः शान्त्यै शान्त्यर्थं साक्षतं अक्षततण्डुलैर्युक्तं सलाजञ्च वारि जलं मूर्द्धभिरविभरुः दधति स्म भिजभ्यस्तेति टर्जुस् भञ्भिदितीत्वं रत्नानि गाश्चाददुः दत्तवन्तः आशिषश्चेष्टेभ्यः समावाञ्छन् काङ्क्षितवन्तः वाञ्छि इच्छायाम् ॥ ५३ ॥ ज०म०

योद्धार इत्यादि । योद्धारः शान्त्यर्थं मूर्द्धभिर्लक्षितं तण्डुलादिसहितं वारि दधति स्म टुडुभ्रञभ्रतिपुञ्जोः ह्रादीरेद्दिः एश्चादेर्ङि:-स्वेरे अनुस्विद्धैः गुरुस्थयां रत्नानि गाश्च द्विजेभ्योऽददुः उक्षेचीतनेगोपः अन्ये आशीर्वादांश्च तेभ्यो वाञ्छितवन्तः स्वजोऽकङिति भिरिति पक्षे भिः ये गजादीन् समारूढाः अथ त्वरान्विताः प्रस्थिताः ॥५३॥भ०

अदिहंश्चन्दनैः शुभ्रैर्विचित्रं समवस्त्रयन् ।
अधारयन् स्रजः कान्ता वर्म्म चान्येऽदधुर्द्रुतम् ॥ ५४ ॥
समक्ष्णुवत शस्त्राणि प्रामृजन् खड्गसंहतीः ।
गजादीनि समारोहन् प्रातिष्ठन्ताथ सत्वराः ॥ ५५ ॥
अपूरयन्नभः शब्दो बलसम्वर्त्तसम्भवः ।
अपूर्य्यन्त च दिग्भागास्तुमुलैस्तूर्य्यनिस्वनैः ॥ ५६ ॥

अदिहन्नित्यादि । शुभ्रैः शुक्लवर्णैश्चन्दनैः अदिहन् गात्राणि लिप्तवन्तः दिह उपचये विचित्रं शोभनं समवस्त्रयन् आच्छादितवन्तः सुण्डमिश्रेत्यादिना वस्त्रात्समाच्छादने णिच् कान्ताः शुभ्राः स्रजः अधारयन् धारितवन्तः धृञ् धारणे अस्यन्तस्य प्रयोग एव नास्ति अन्ये च वर्म्माणि कवचानि द्रुतमदधुः धारितवन्तः ॥ ५४ ॥ ज० म०

अदिहन्नित्यादि । शुक्लैश्चन्दनैर्गात्राणि लिप्तवन्तः दिहश्रो लिपि विचित्रं वस्त्रं परिहितवन्तः विचित्रं शोभनं समाच्छादयन्ति स्रेतशर्थे वा वस्त्रात् समाच्छादने परिधाने वा ञिः कल्यादेरिति ञिः कान्ताः शोभनाः स्रजो धारितवन्तः धृक् च चकारात् धृतशं अन्ये कवचं धृतवन्त. ॥ ५४ ॥ भ०

समक्ष्णुवतेत्यादि । शस्त्राणि समक्ष्णुवत क्ष्णु तेजने समःक्ष्णुव इति तङ् खड्गसंहतीः प्रामृजन् शोधितवन्तः मृजेरजादौ विभाषा वृद्धिः गजादीनि यानानि समारोहन् आरूढाः गजादिष्विति पाठान्तरं तत्राधिकरणत्वं विवक्षितं अथानन्तरमारूढाः सत्वराः प्रातिष्ठन्त प्रस्थिताः समवप्रविभ्यः स्थ इति तङ् ॥ ५५ ॥ ज० म०

समक्ष्णुवतेत्यादि । योधाः शस्त्राणि निशितानि चक्रुः क्ष्णु तेजने सक्ष्णोरिति सं खड्गसमूहान् शोधितवन्तः मृजोऽकङिति वृद्धिरिति पक्षे वृद्धिः गजादीन् समारूढाः अथ त्वरान्विताः प्रस्थिताः ॥ ५५ ॥ भ०

अपूरयदित्यादि । बलानां संवर्त्त एकीभावः तस्मात्सम्भवो यस्य स

आसीद्द्वारेषु सङ्घट्टो रथाश्वद्विपरक्षसाम् ।
सुमहाननिमित्तैश्च समभूयत भीषणैः ॥ ५७ ॥
कपयोऽबिभयुस्तस्मिन्नभञ्जंश्च महाद्रुमान् ।
प्रोदखायन् गिरींस्तूर्णमगृह्णंश्च महाशिलाः ॥ ५८ ॥
ततः समभवद्युद्धं प्राहरन् कपिराक्षसाः ।

शब्दः नभ आकाशमपूरयत् पूरितवान् तुमुलैस्तूर्य्यनिस्वनैः महद्भिर्घोषै-र्दिग्भागा अपूर्य्यन्त पूर्णाः कर्म्मणि लङ् ॥ ५६ ॥ ज० म०

अपूरयदित्यादि । शब्दो नभः पूरितवान् पूरकच चकारात् पूर्त्तौ कीदृशः बालानां सम्बर्त्त एकीभावस्तस्मात् सम्भवो यस्य सम्भवति यस्मा-दिति व्युत्पत्त्या स एव सम्भवो यस्येति वा तूर्य्याणां तुमुलैः संकुलैः शब्दै-र्दिग्भागाः पूरिताः कर्मणि रूपम् ॥ ५६ ॥ भ०

आसीदित्यादि । रथादीनां निर्गच्छतां लङ्काद्वारेषु सङ्घट्टः सुमहा-नासीत् जनभूयस्तया सङ्कर्णोऽभूत् अस्तिबितोऽपृक्त इतीट् अनिमित्तैः स्वभीषणैर्भयङ्करैर्महद्भिः समभूयत व्यवकरैर्निमित्तैर्भूतं भावे लङ् ॥ ५७ ॥ ज० म०

आसीद्द्वारेष्वित्यादि । लङ्काद्वारेषु रथादीनां निर्गच्छतां सुमहान् सङ्घट्ट आसीत् रुदाद्यस्तीति ईम् भीषणैर्भयानकैरनिमित्तैरनाकुलैः सम्भूतं भावे यक् ॥ ५७ ॥ भ०

कपय इत्यादि । तस्मिन्निर्गते कपयोऽबिभयुः भीतवन्तः महाद्रु-मांश्च योद्धुमभञ्जन् भग्नवन्तः गिरीन् प्रोदखायन् उत्खातवन्तः खै खनने ऽशिति आत्वं न भवति महाशिला अगृह्णन् गृहीतवन्तः ॥५८॥ज० म०

कपय इत्यादि । तस्मिन् रावणे निर्गते सति वानरा भीताः ञि-भीलिभीत्यां अनुस्सिद्धेः गुरुस्थ्यां महाद्रुमान् योद्धुं भग्नवन्तः तुङ्गान् पर्व्वतान् उत्खातवन्तः खैतुर्य्यै खननहिंसयोः महाशिलाः गृहीतवन्तः ॥ ५८ ॥ भ०

तत इत्यादि । ततोऽनन्तरं युद्धं समभवत् प्रवृत्तं कपिराक्षसाः

अन्योन्येनाभ्यभूयन्त विमर्दमसहन्त च ॥ ५९ ॥
प्रावर्त्तत रजो भौमं तद्व्याश्नुत दिशो दश ।
परात्मीयविवेकञ्च प्रामुष्णात् कपिरक्षसाम् ॥ ६० ॥
ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः ।
अद्विषन् वानराश्चैवं वानरेभ्योऽपि निर्दयाः ॥ ६१ ॥

प्राहरन् प्रहृतवन्तः अन्योन्येनाभ्यभूयन्त कपयो राक्षसैः राक्षसाश्च कपिभिरिति कर्मणि लङ् विमर्दमसहन्त च सोढवन्तः ॥ ५९॥ ज० म०

तत इत्यादि । तदनन्तरं युद्धं विस्तृतं कपयो राक्षसाश्च प्रहारं चक्रुः अन्योन्यं अभ्यभूयन्त कपयो राक्षसैस्ते च कपिभिरभिभूताः कर्म्मणि यक् ते विमर्दं सोढवन्तः ॥ ५९ ॥ भ०

प्रावर्त्तत इत्यादि । बलद्वयप्रक्षोभात् भौमं रजः प्रावर्त्तत प्रवृद्धं तद्रजो दश दिशो व्याश्नुत व्याप्नोत् अयं परोऽयं चात्मीय इति यो विवेकस्तञ्च प्रामुष्णात् अपनीतवत् मुषस्तेये क्र्यादिः ॥ ६० ॥ ज० म०

प्रावर्त्तत इत्यादि । भूमिसम्बन्धि रजः प्रवृद्धं सैन्यक्षोभात् तद्रजो दश दिशो व्याश्नुवत् अशूङ्व्याप्तिसंहत्योः अयं परः अयमात्मीय इति यः कपिरक्षसां विवेकस्तञ्च प्रामुष्णात् अपनिनाय मुषगस्तुषनलुटने ॥ ६० ॥ भ०

तत इत्यादि । ततोऽनन्तरं निरालोके समरे राक्षसाः स्वेभ्योऽन्येभ्यश्चाद्विषुः क्रुध्यन्ति स्म वानरा अपि वानरेभ्योऽद्विषन् निर्दयाः सन्तः अपिशब्दात् राक्षसेभ्योऽपि द्विषश्चेत्यनेन शाकटायनमते झेर्जुस् अन्येषां अद्विषन् क्रुधद्रुहेत्यादिना सम्प्रदानसंज्ञा ॥ ६१ ॥ ज० म०

तत इत्यादि । रजोबाहुल्यात् निरालोके रणे राक्षसाः स्वेभ्यो राक्षसेभ्यो अन्येभ्यो वानरेभ्यश्च द्वेषं चक्रुः वानरा वानरेभ्योऽपिशब्दात् राक्षसेभ्यश्च द्वेषं चक्रुः लद्विषोऽजवैरे द्विषविदातोऽनुस्वा यस्मादित्ये-त्यादिना चतुर्थी ॥ ६१ ॥ भ०

अघुरंस्ते महाघोरमस्रयोतन्नथ शोणितम् ।
समपद्यत रक्तेन समन्तात्तेन कर्द्दमः ॥ ६२ ॥
गम्भीराः प्रावहन्नद्यः समजायन्त च ह्रदाः ।
प्रवृद्धञ्च तद्रजोऽशाम्यत् समवेद्यन्त च द्विषः ॥ ६३ ॥
ततोऽचिचीयतास्त्रौघैर्धनुश्चाधूनयन्महत् ।
रामः समीहितं तस्य नाचेतन् स्वे न चापरे ॥ ६४ ॥

अघुरन्नित्यादि । अथानन्तरं ते हताः अघुरन् घोरं रौद्रं शब्दितवन्तः घुरभीमार्थशब्दयोः शोणितं चास्रयोतत् चरति स्म तेन च रक्तस्तु तेन समन्तात्सर्वतः कर्द्दमः समपद्यत सम्पन्नः कर्म्मणि लङ् ॥ ६२ ॥ ज० म०

अघुरन्नित्यादि । ते हताः कपिराक्षसा महाघोरं शब्दं चक्रुः घुरध्वनौ भीमार्थे अनन्तरं शोणितं अस्रयोतत् चरति स्म तेन रक्तेन समन्तात् कर्द्दमः सम्पन्नः यौपदङ्गतौ ॥ ६२ ॥ भ०

गम्भीरा इत्यादि । तेन रक्तेन वर्द्धिष्णुना गम्भीरा आगाधाः नद्यः प्रावहन् प्रवृत्ताः ह्रदास्तडागाः समजायन्त सञ्जाताः तच्च रजः प्रवृद्धमशाम्यत् शान्तं उद्गमाभावात् उत्पन्नस्य च पतनात् रजःशमनात् द्विषश्च समवेद्यन्त संवेद्यन्ते स्म विदवेदनाख्यानिवासनेष्विति चौरादिकः कर्म्मणि लङ् ॥ ६३ ॥ ज० म०

गम्भीरा इत्यादि । तेन रक्तेन गम्भीरा नद्यः प्रवहन्ति स्म गम्भीरा ह्रदाश्च सञ्जाताः ततः प्रवृद्धं तत्र रजः शान्तमभवत् ततश्च द्विषः शत्रवो ज्ञाता विदकञ्चेताख्यानिवासे कर्म्मणि यक् ॥ ६३ ॥ भ०

तत इत्यादि । ततोऽनन्तरं रामः शस्त्रौघैरचिचीयत आश्चर्य्यीभूतः नमोवरिव इति चित्रङ् आश्चर्य्ये ङित्वात्तङ् धनुश्च महदधूनयत् विधूनितवान् धूञ्प्रीञोर्नुग्वक्तव्यः तस्य रामस्य समीहितमभिप्रेतं स्वे आत्मीयाः वानराः न च अपरे परकीया नाचेतन् न ज्ञातवन्तः ॥ ६४ ॥ ज० म०

छिन्नानैक्षन्त भिन्नांश्च समन्ताद्रामसायकैः ।
क्रुष्टं हाहेति चाशृण्वन्न च रामं न्यरूपयन् ॥ ६५ ॥
अभिनच्छत्रुसङ्घातानचुणद्वाजिकुञ्जरम् ।
अपिनट् च रथानीकं न चाज्ञायत सञ्चरन् ॥ ६६ ॥
दश दन्तिसहस्राणि रथिनाञ्च महात्मनाम् ।
चतुर्दशसहस्राणि सारोहाणाञ्च वाजिनाम् ॥ ६७ ॥

तत इत्यादि । तदनन्तरं अस्त्रसमूहैराश्चर्य्यरूपैर्जातं चितीच आश्चर्ये कण्डादिः रामस्य महद्धनुराधूनितवान् धूनगिधुञ्च चकारात् कम्पे प्रीधूञोर्णन्वा तस्य रामस्य समीहितं अभिप्रेतं स्वे वानरा अपरे राक्षसाश्च न ज्ञातवन्तः शीघ्रकारित्वात् चिती ज्ञाने ॥ ६४ ॥ भ०

छिन्नानित्यादि । रामसायकैश्छिन्नान् भिन्नांश्च समन्तादैक्षन्त हाहेति च क्रुष्टं शब्दमन्योन्यस्य चाशृण्वन् न च नैव रामं न्यरूपयन् राम इति च न निश्चितवन्तः रूपप्याक्रियायामिति चौरादिकः ॥ ६५ ॥ ज० भ०

छिन्नानित्यादि । संग्रामस्थाः कांश्चित् रामस्य सायकैर्वाणैश्छिन्नान् खण्डितान् कांश्चिद्भिन्नान् विदारितान् ईक्षन्ते स्म समन्तात् सर्वतः हाहेति क्रुष्टं शब्दं श्रुतवन्तः अत्र रामोऽस्ति न वेति नैवेति निश्चितवन्तः शीघ्रभ्रमणात् रूपतुकततूक्तौ ॥ ६५ ॥ भ०

अभिनदित्यादि । शत्रुसङ्घातानभिनत् भिन्नवान् वाजिकुञ्जरमक्षुणत् सम्पिष्टवान् क्षुदि सम्पेषणे रथानीकं रथसमूहमपिनट् पिष्टवान् पिषॢ संचूर्णने सर्वे रौधादिकाः न च सञ्चरन् रामः अज्ञायत न ज्ञातः स्वैः परैर्वेत्यर्थात् कर्मणि लङ् ॥ ६६ ॥ ज० भ०

अभिनदित्यादि । रामः शत्रुसमूहान् बिभेद जघौ भिदिर्भिदि वाजिनः कुञ्जरांश्च चूर्णितवान् अक्षौत्क्षुदिर्क्षुदि रथसामीकं समूहञ्च पिष्टवान् शौपिषॢचूर्णने सञ्चरन् रामः परैर्न ज्ञातः ॥ ६६ ॥ भ०

दशेत्यादि । अनेन श्लोकद्वयेन राघवेण धनुर्धृता दिवसस्याष्टमे

लक्षे च द्वे पदातीनां राघवेण धनुर्भृता ।
अनीयन्ताष्टमे भागे दिवसस्य परिक्षयम् ॥ ६८ ॥
यमलोकमिवाग्रथ्नाद्रुद्राक्रीडमिवाकरोत् ।
शैलैरिवाचिनोद्भूमिं वृहद्भीराक्षसैर्हतैः ॥ ६९ ॥
अस्तुवन् देवगन्धर्वा व्यस्मयन्त प्लवङ्गमाः ।
कपीन्द्रेऽतन्यत प्रीतिः पौलस्त्योऽमन्यताद्भुतम् ॥ ७० ॥

भागे अर्द्धप्रहरे दन्तिनां दशसहस्राणि रथिनाञ्च महात्मनां चतुर्द्दशसहस्राणि सारोहाणाञ्च वाजिनां तावन्त्येव पदातीनां द्वे लक्षे परिक्षयं विनाशमनीयन्त नीताः कर्मणि लङ् अनीयतेति पाठान्तरं तत्र सर्वमेतदनीयतेति योज्यम् ॥ ६८ ॥ ज० म०

दशेत्यादि । अग्रिमश्लोकेनान्वयः धनुर्भृता रामेण दिवसस्याष्टमे भागे प्रहरार्द्धमध्ये दन्तिनां दशसहस्राणि महात्मनां रथिनाञ्च चतुर्द्दशसहस्राणि सारोहाणां वाजिनाञ्च चतुर्द्दशसहस्राणि पदातीनां लक्षद्वयञ्च परिक्षयं विनाशं नीतानि अनीयतेति पाठे सर्वमेतत्तु परिक्षयं नीतं भावे वा प्रत्ययः कर्म्मोपादानेऽपि भावे इति परवचनात् स्वमतेऽपि कर्म्मोपादाने भावप्रत्ययस्य न निषेधः ॥ ६८ ॥ भ०

यमेत्यादि । स राघवः तैः राक्षसैः हृहद्भिः यमलोकमिवाग्रथ्नात् सन्दर्भितवान् ग्रन्थग्रन्थसन्दर्भे इति क्र्यादिः रुद्राक्रीडमिव रुद्रस्य क्रीडास्थानं श्मशानमिवाकरोत् भूमिं शैलैरिवाचिनोत् छादितवान् ॥ ६९ ॥ ज० म०

यमलोकमित्यादि । वृहद्भिर्हतै राक्षसै रामो यमलोकमिव सन्दर्भितवान् चकारेत्यर्थः ग्रन्थकिदर्भे रुद्रस्याक्रीडं क्रीडास्थानं श्मशानमिव अकरोत् अतनोदिति क्वचित्पाठः भूमिं शैलैरिव अचिनोत् आच्छादितवान् रक्षसां वृहत्त्वात् चिनचिञ्चित्याम् ॥ ६९ ॥ भ०

अस्तुवन्नित्यादि । तमद्भुतकर्मकारिणं देवा अस्तुवन् स्तुवन्ति स्म प्लवङ्गमाः कपयः व्यस्मयन्त विस्मिताः ङित्वात्तङ् कपीन्द्रे सुग्रीवे प्रीति-

राक्षस्यः प्रारुदन्नुच्चैः प्राजुगुप्सन्त रावणम् ।
अमुह्यद्बालवृद्धञ्च समरौदितरो जनः ॥ ७१ ॥
सर्वतस्साभयं प्राप्नोन्नैच्छन्नृभ्यस्तु रावणः ।
फलं तस्येदमभ्यायाद्दुरुक्तस्येति चाब्रुवन् ॥ ७२ ॥

एतन्यत तन्यते स्म कर्मकर्त्तरि लङ् पौलस्त्यो विभीषणः आश्चर्य्यं ज्ञातवान् ॥ ७० ॥ ज० म०

अस्तुवन्नित्यादि । देवा गन्धर्व्वाश्च अर्थात् तमस्तुवन् स्तुवन्ति स्म कपयो विस्मयं प्राप्ताः सुग्रीवे प्रीतिर्विस्तृता विभीषणश्चाश्चर्य्यं ज्ञातवानित्यर्थः ॥ ७० ॥ भ०

राक्षस्य इत्यादि । राक्षस्यो भर्त्त्रादिवधदुःखिता उच्चैः प्रारुदन् रुदितवत्यः रुदादिभ्य इतीण् न भवति अचलादित्वात् रावणं प्राजुगुप्सन्त निन्दितवत्यः एतद्दुर्णयात् सर्वमिति बाला वृद्धाश्च तद्द्वयं अमुह्यत् भयान्मोहं गतं इतरो जनः राक्षसीबालवृद्धेभ्योऽन्यः समरौत् आक्रुष्टवान् रुशब्दे उतो वृद्धिर्लुकि ॥ ७१ ॥ ज० म० .

राक्षस्य इत्यादि । पत्यादिवधात् राक्षस्यो रोदनञ्चक्रुः उच्चै रावणं निन्दन्ति स्म गुपेः कित्तिजगुप इति निन्दायां सन् इमुनिषेधश्च बालवृद्धं कर्त्तृ भयात् अमुह्यत् मोहं प्राप बालाश्च वृद्धाश्चेति समाहारः इतरो राक्षसीबालवृद्धेभ्योऽन्योजनः संरावं चकार रुशब्दे संपूर्वं रपिद्धस्तुतोऽद्वेर्ब्रिः ॥ ७१ ॥ भ०

सर्वत इत्यादि । सर्वतो देवादिभ्यः अभयं रावणः प्राप्नोत् प्राप्तवान् यतो ब्रह्मणि वरं दातुमुद्यते देवादीनामवध्यो भूयासमित्युक्तवान् नृभ्यस्तु सकाशादभयं नैच्छन्नेष्टवान् के मम मानुषा इति तस्य दुरुक्तस्य फलम् अभ्यायात् उपागतं इतेरेवमपरे अब्रुवन् उक्तवन्तः ॥ ७२ ॥ ज० म०

सर्वतस्येत्यादि । रावणः सर्वेभ्यो देवगन्धर्वादिभ्योऽभयं प्राप्तवान् ब्रह्मणेयर्थात् नृभ्यो मनुष्येभ्यस्त्वभयमसौ नेष्टवान् ब्रह्माणं न प्रार्थितवान् तेषां भक्ष्यत्वात् तस्य दुरुक्तस्य दुष्टभषितस्य वरप्रार्थनाकाले मनुष्या-

ततोऽधावन्महाघोरं रथमास्थाय रावणः ।
अक्ष्मायत मही श्वभ्रास्समाराथ्यन्त भीषणाः ॥ ७३ ॥
मेघाः सविद्युतोऽवर्षंश्चेलक्नोपञ्च शोणितम् ।
अवान् भीमा नभस्वन्तः प्राकृवन्नशिवाः शिवाः ॥ ७४ ॥

वज्रास्त्रचक्रस्य फलमिदं अभ्यायात् उपगतमित्येवं केचिदुक्तावन्तः पूर्वश्लोकात् समरौदित्यस्य विभक्तिव्यत्ययेनानुषङ्गः ॥ ७२ ॥ भ०

तत इत्यादि । ततोऽनन्तरं महाघोरं रथमास्थायारुह्य रावणः योद्धुं वेगेन गतवान् तस्य च धावतो मही अक्ष्मायत कम्पिता क्ष्मायी विधूनने श्वभ्राश्च भीषणाः समरार्थ्यन्त अत्यर्थं गतवन्तः सूचिसूत्रिमूत्रिभ्यो यङ् सुधातीनां ग्रहणं यङ्धावनेकाजहलाद्यर्थमित्युपसंख्यानात् अर्त्तेर्यङ् गुणोर्त्तिसंयोगाद्योरित्यधिकृतय यङि चेति गुणः ॥ ७३ ॥ ज० म०

तत इत्यादि । तदनन्तरं महाघोरं रथमारुह्य रावणोऽधावत् वेगेन योद्धुं गत धावुङ्जवे सृजि परे तु सर्त्तेर्धावो वेगेशितीति सूतं कृत्वा सृगतावित्यस्य रूपं वदन्ति तत्तु व्यर्थं फलतो विशेषाभावात् दुर्निमित्तान्याह भूमिश्चलति स्म क्ष्मायीङ्विधूनने भीषणा श्वभ्रास्समत्यर्थं कुटिलञ्च गताः ऋप्रापणे च चकारात् गत्यर्थादिति यङ् सूत्रस्थलेत्यादिना वा पृथग्ग्रहणात् स्याद्यतृतोणुर्यङिति गुणः स्यादौ नन्द्रोऽये इति यसंयोगविषये द्वित्वस्य निषेधाभावः र्योऽनित इति वैदीर्घः ॥ ७३ ॥ भ०

मेघा इत्यादि । सविद्युतो मेघाश्चेलक्नोपं शोणितं रक्तं अवर्षन् वर्षितवन्तः यावता रक्तेन चेलं वासः क्नोपयते सिच्यते तावत्प्रमाणं दृष्टवन्तः क्नूयीशब्दे इत्यस्य ण्यन्तस्य अर्त्तिह्रीत्यादिना पुकि यलोपः चेले क्नोपेरिति णमुल् भीमाः नभस्वन्तः वायवः अवान् वान्ति स्म लङः शाकटायनस्यैवेति नियमादन्यमतेन तु सु न भवति शिवाः शृगाल्यः अशुभाः अनिष्टशंसिन्यः प्राकृवन् शब्दितवत्यः ॥ ७४ ॥ ज० म०

अटाट्यताऽवमत्यासौ दुर्निमित्तानि संयुगे ।
अधुनोद्धनुरस्त्रौघैः प्रौर्णोनूयत विद्विषः ॥ ७५ ॥
व्यनाशयंस्ततः शत्रून् सुग्रीवाद्या महीभृतः ।

मेघा इत्यादि । सविद्युतो मेघास्तेलक्लोपं वस्त्रक्लेदनप्रमाणं शोणितं वर्षन्ति स्म यावता रुधिरेण वस्त्रं सिच्यते तावत्प्रमाणमित्यर्थः । क्नुयी॰ शब्दे दुर्गन्धे आर्द्रत्वे शब्दे दीर्घेकारवानयं क्नुयी स्वायति ते विदेवयश्मे सेविश्वासविसर्येति च ञ्ये: स्वः हीव्लीरीक्नुयीनि पण् गुणश्च हसान्तोप इति वलोपः चेलं क्नोपयति क्लेदयतीति ढात्प्रण् वर्षणक्रियाविशेषणं एतद्विशेषणादेतन्मानं गम्यते अन्यथा एतद्विशेषणस्य वैयर्थ्यं स्यात् परे तु वस्त्रार्थादुद्दिष्टमाने क्नोपयतेः त्वाणमित्याहुः स्वमतेऽपि चणम्बेत्यस्य योगविभागात्तत्र चणम् स्यादेव तदा चेलं क्नोपयन्नित्यर्थः । भीमा वायवो वान्ति स्म द्विषविदात इत्यस्य पाक्षिकत्वान्नात डस् शिवाः शृगाला अशुभसूचकं रवं चक्रुः ॥ ७४ ॥ भ०

अटाट्यतेत्यादि । असौ रावणः दुर्निमित्तान्यवमत्य युद्धार्थमटाट्यत अत्यर्थमाटत् सूचिसूत्रीत्यादिना यङ् संयुगे युद्धे धनुरधुनोत् कम्पितवान् अस्त्रौघैर्विद्विषः शत्रून् प्रौर्णोनूयत भृशं छादितवान् ऊर्णुञ् आच्छादने ऊर्णोतेर्गुणवद्भावात् सूचिसूत्रीत्यादिना वा यङ् अजादेर्द्वितीयस्येति द्विर्वचने नन्द्रा इति रेफो न द्विरुच्यते नुशब्दस्य द्विर्वचनं गुणोयङ्लुकोरिति गुणः अकृत्सार्वधातुकयोरिति दीर्घः ॥ ७५ ॥ ज०म०

अटाट्यतेत्यादि । एतानि दुर्निमित्तानि अवमत्य अवज्ञाय असौ रावणो भृशं कुटिलञ्च अगच्छत् अट गतौ सूचसूत्रेति यङ् गत्यर्थादित्यादिना च संयुगे युद्धे धनुरधुनोत् कम्पितवान् धूञ्कम्पे अस्त्रौघैर्द्विषः शत्रून् भृशं पुनः पुनर्वा आच्छादितवान् ऊर्णुञ्आच्छादने सूत्रसूत्रेति यङ् स्वादीनवद्रोऽय इति निषेधात् रेकं विश्लिष्य नोयौ द्वित्वम्य इत्यनेन यसंयोगादिस्थितस्य निषेधाभावः ॥ ७५ ॥ भ०

व्यनाशयन्नित्यादि । ततोऽनन्तरं सुग्रीवाद्याः सुग्रीवेण चिह्ना म-

ततो व्यरसदग्लायदध्यशेत महीतलम् ॥ ७६ ॥
अश्च्योतद्रुधिरं तोयमलसच्चातिविह्वलम् ।
अशीयत नृमांसादां बलं सुग्रीवबाधितम् ॥ ७७ ॥
विरूपाक्षस्ततोऽक्रीडत् संग्रामे मत्तहस्तिना ।
मुष्टिनादालयत्तस्य मूर्द्धानं वानराधिपः ॥ ७८ ॥

महीभृतः पर्व्वताः शत्रुसैन्यं व्यनाशयन् नाशितवन्तः ततो मांसादां रक्षसां बलं सुग्रीवबाधितं पीडितमित्युत्तरश्लोकेन सम्बन्धः व्यरसत् आक्रन्दितवत् अग्लायत् ग्लानिं गतं महीतलमध्यशेत महीतले पतितं शीङः सार्वधातुके गुण : ॥ ७६ ॥ ज०म०

व्यनाशयन्नित्यादि । तदनन्तरं सुग्रीवेणास्ताः क्षिप्ताः महीभृतः पर्व्वताः शत्रून् नाशितवन्तः ततो नृमांसादां रक्षसां बलं सुग्रीवेण बाधितं सत् व्यरसत् आक्रन्दं चकार इत्युत्तरश्लोकेनान्वयः रसशब्दे ग्लै कान्तिसंक्षये भूतलमधिशेते स्म निपतितमित्यर्थः । शीङो रेगुः॥ ७६ ॥ भ०

अश्च्योतमित्यादि । रुधिरमश्च्योतत् अस्रवत् विह्वलञ्च सत् तोयमभ्यलसत् अभिलषितवत् वाभ्राशेत्यादिना विकल्पेन श्यन् अशीयत च अवसन्नं शदेः शित इति तङ् पाघ्रेत्यादिना शीयादेशः मांसमदन्तीति अदोनन्न इति विट् ॥ ७७ ॥ ज०म०

अश्च्योतदित्यादि। रुधिरं रक्तमक्षरत् पानार्थं तोयं जलमतिविह्वलं अतिकातरं यथा स्यात्तथा याचते स्म अशीयत च अवसादं प्राप्तमित्यर्थः । स्यादानेत्यादिना शीयादेशः शदोऽपि मभित्यादिना सम् ॥ ७७ ॥ भ०

विरूपाक्ष इत्यादि । ततो विरूपाक्षो नाम राक्षसः मत्तहस्तिना संग्रामे अक्रीड़त् भ्रान्तवान् तस्य मूर्द्धानं वानराधिपः सुग्रीवः मुष्टिना अदालयत् दलितवान् दल विदारणे चुरादिः ॥ ७८ ॥ ज०म०

विरूपाक्ष इत्यादि । ततो विरूपाक्षनामा राक्षसः सङ्गरे युद्धे मत्तहस्तिना क्रीड़ति स्म तस्य मूर्द्धानं सुग्रीवो मुष्टिना विदारितवान् दलभिभेदे ॥ ७८ ॥ भ०

अचूर्णयच्च यूपाक्षं शिलया तदनन्तरम् ।
सङ्क्रुद्धो मुष्टिनातुम्नादङ्गदोऽलं महोदरम् ॥ ७९ ॥
ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान् वनौकसाम् ।
अगोपायच्च रक्षांसि दिशश्चारीनभाजयत् ॥ ८० ॥
आलोकयत् स काकुत्स्थमशृणोद्घोरमध्वनत् ।
धनुरस्त्रमयच्छीसमभीषयत विद्विषः ॥ ८१ ॥

अचूर्णयदित्यादि । तदनन्तरं वानराधिपः यूपाक्षं नाम राक्षसं शिलया अचूर्णयत् चूर्णितवान् तत्करोतीति णिच् अङ्गदोऽपि संक्रुद्धः मुष्टिना महोदरं अलं पर्य्याप्तमतुम्नात् व्यापादितवान् नमतुम हिंसायां क्र्यादिः ॥ ७९ ॥ ज०म०

अचूर्णयच्चेत्यादि । विरूपाक्षवधानन्तरं वानराधिपः शिलया यूपाक्षं राक्षसं चूर्णितवान् संक्रुद्धोऽङ्गदोऽपि मुष्टिना महोदरमलमत्यर्थं अतुम्नात् जघान तुम्यगच चकारात् हिंसे ॥ ७९ ॥ म०

तत इत्यादि । ततो दशग्रीवः क्रुद्धः वनौकसां वानराणां प्राणान-कुष्णात् कुष्टवान् कुष निष्कर्षे रक्षांसि च राक्षसांश्चागोपायत् रक्षितवान् गुपूधूपेत्यादिना आयप्रत्ययः अरींश्च दिशोऽभाजयत् प्रतिहृतवान् ॥ ८० ॥ ज०म०

तत इत्यादि । अनन्तरं क्रुद्धो रावणो वानराणां प्राणानकुष्णात् देहेभ्यो वहिश्चकार कुषग निष्कर्षे रक्षांसि रक्षितवान् गुप रक्षे कान-क्रतो गुपूधूपेत्याय: अरींश्च दिशः प्रापितवान् भजोर्ञिः प्रेरणे ॥ ८० ॥ भ०

आलोकयदित्यादि । स दशग्रीवः काकुत्स्थमालो[illegible] दृष्टवान् घोरदर्शनमशृणोत् [illegible] इति [illegible] घोरमध्वनत् ध्वनि[illegible] मारयामीति भीमं [illegible] धत-वान् मितां ह्रस्वः [illegible] से विद्विषो [illegible] यत

तद्गवरूमहासर्पान् व्याघ्रसिंहांश्च भीषणान् ॥ ८६ ॥
न्यषेधत् पावकास्त्रेण रामस्तद्राक्षसस्ततः ।
अदीव्यद्रौद्रमत्युग्रं मुषलाद्यगलत्ततः ॥ ८७ ॥
गान्धर्व्वेण व्यविध्यत्तत् चितीन्द्रोऽथ नराशनः ।
सर्व्वमर्म्मसु काकुत्स्थमौम्भत्तीच्णैः शिलीमुखैः ॥ ८८ ॥

वान् स्रौ द्विर्वचनमभ्यासकार्य्यं श्नाभ्यस्तयोरित्याकारलोपः दधस्तथोश्चेति भष्भावः भषस्तथोर्धोध इति प्रतिषेधात् तकारस्य धत्वं न भवति तत्संहितं सर्पादीन् प्राचरत् सृष्टवत् ॥ ८६ ॥ ज० म०

समाधत्तेत्यादि । क्रूरविग्रहो भीमविग्रहो राक्षसः धनुषि असुरदैवतं अस्त्रं समाधत्त आरोपितवान् डुधाञ्‌धारणे पुष्टौ दाने सम्पूर्वः सन्धाने ह्वादीरेद्दिः श्नाद्योरातोप्य इत्यालोपो धोदधोऽन्तलोप इति खेर्धत्वं तत् अस्त्रं संहितं भीषणान् सर्पादीन् चरति स्म ॥ ८६ ॥ भ०

न्यषेधदित्यादि । तदासुरं अस्त्रं रामः पावकास्त्रेण न्यषेधत् निषिद्धवान् ततो राक्षसो रौद्रमस्त्रमत्युग्रमदीव्यत् चिप्तवान् अत्र ईदविर्गतौ वर्त्तते ततो रौद्रात् चिप्तात् मुषलादि प्रहरणमगलत् निर्गतवत् गल अदने अनेकार्थत्वाद्धातूनां गलिरत्र निर्गमे वर्त्तते ॥८७॥ज०म०

न्यषेधदित्यादि । रामस्तदासुरास्त्रं पावकास्त्रेण विनिवारितवान् षिधुगत्यां निपूर्व्वो निवारणे गीक इति षत्वं ततो राक्षसो रुद्रदैवतमत्युग्रमदीव्यत् तेन जिगीषाञ्चकार दिवो षेवेति करणे द्वी दिव्युजिगीषेच्छापणिद्युतेः क्रीड़ागत्योः गताविह दिवरिति जयमङ्गला व्यनच् तयीति दीर्घः ततो रौद्रास्त्रात् मुषलादि प्रहरणं गलितम् ॥ ८७॥ भ०

गान्धर्वेणेत्यादि । चितीन्द्रो रामः तद्रौद्रमस्त्रं गान्धर्वेणास्त्रेण व्यविध्यत् ताड़ितवान् अथ नराशनो राक्षसः शिलीमुखैर्बाणैः सर्वमर्म्मसु काकुत्स्थमौम्भत् पूरितवान् उम्भ पूरणे तुदादौ ॥ ८८ ॥ ज० म०

गान्धर्वेणेत्यादि । चितीन्द्रो रामो गन्धर्वदैवतेनास्त्रेण तत् रौ-

ततस्त्रिशिरसं तस्य प्राच्छल्लक्ष्मणो ध्वजम् ।
अमथ्नात् सारथिं चाशु भूरिभिश्चातुदच्छरैः ॥ ८९ ॥
अश्वान् विभीषणोऽतुम्नात्स्यन्दनं चाक्षिणोत् द्रुतम् ।
नाक्षुभ्नाद्राक्षसो भ्रातुः शक्तिं चोदवहद् गुरुम् ॥ ९० ॥

दूरात्तं विव्याध व्यध्यो ताडे ग्रहज्यापाद्योरिति जिः अथ नरायनो रावणस्तीक्ष्णैः शिलीमुखैर्बाणैः सर्वत्र मर्मस्थाने काकुत्स्थं पूरितवान् छनुभयुभग्रपूर्त्तौ तनुपां न लुग्वाग्रणाविति पक्षे नलोपाभावः ॥ ८८ ॥ ज० म०

तत इत्यादि । ततोऽनन्तरं लक्ष्मणस्तस्य रावणस्य ध्वजं त्रिशिरसं त्रिस्थूलाग्रं प्राच्छत् छिन्नवान् ओव्रश्चू छेदने तुदादौ सारथिं चामथ्नात् ध्वस्तवान् मथ विलोडने क्र्यादिः भूरिभिश्च प्रभूतैः शरैरतुदत् व्यथितवान् ॥ ८९ ॥ ज० म०

तत इत्यादि । तदस्तदनन्तरं लक्ष्मणस्तस्य त्रिशिरसं त्रिलेखं ध्वजं छिन्नवान् व्रश्चू छेदे ग्रहज्यापाद्योरिति जिः सारथिञ्च हृतवान् गमन्य च गात्रे भूरिभिर्बहुभिः शरैस्ताड़ितवान् तमितप्रघात् ॥८९॥ भ०

अश्वानित्यादि । विभीषणश्चाश्वानतुम्नात् हृतवान् तमतुभ हिंसायां स्यन्दनं चाक्षिणोत् भग्नवान् क्षिणु हिंसायां तनादौ राक्षसो रावणः नाक्षुभ्नात् न क्षोभं गतः क्षुभ सञ्चलने क्र्यादौ श्नश्यते न दिवादौ भ्रातुर्विभीषणस्य कृते गुरुं शक्तिमुदवहत् उद्यतवान् वह उद्यमने तुदादौ गुरुमिति योतो गुणवचनादिति विकल्पेन ङीष् ॥ ९० ॥ ज० म०

अश्वानित्यादि । तस्याश्वान् विभीषणो हृतवान् तुभ्यगच चकारात् हिंसे शीघ्रं स्यन्दनं चाक्षिणोत् क्षणक्षिणदुञ्जवधे नोप्यङो णुरिति गुणाभावः एतावत्यपि राक्षसो न क्षोभं प्राप क्षुभग च चकारात् सञ्चलने क्षनीमादित्वात् भकारतवर्गयुक्तस्य नत्वमिति बोध्यं भ्रातुर्विभीषणस्य कृते गुर्वीं शक्तिं अस्त्रविशेषं उत्थापितवान् शूदङ उद्यमे भ्रातुरुपरि नाक्षुभ्नात् शत्रुपचस्थितत्वादित्यन्ये योजयन्ति ॥ ९० ॥ भ०

तामापतन्तीं सौमित्रिस्त्रिधाकृन्तच्छिलीमुखैः ।
अशब्दायन्त पश्यन्तस्ततः क्रुद्धो निशाचरः ॥ ९१ ॥
अष्टघण्टां महाशक्तिमुदयच्छन्महत्तराम् ।
रामानुजं तयाविध्यत् स महीं व्यसुराश्रयत् ॥ ९२ ॥
राघवस्याभ्रशायन्त शायकास्तैरुपद्रुतः ।

तामित्यादि । तस्योपरि शक्तिमापयन्तीं सौमित्रिः शिलीमुखैस्त्रिधा त्रिप्रकारं अकृन्तत् छिन्नवान् कृती छेदने तुदादौ यत्र प्रेक्षकाः पश्यन्तः ते अशब्दायन्त शब्दं कृतवन्तः वीर लक्ष्मण साधु कृतमिति शब्दवैरेत्यादिना करोत्यर्थे यङ् ततोऽनन्तरं निशाचरः क्रुद्धः क्रोधं कृतवान् ॥ ९१ ॥ जं० म०

तामापतन्तीमित्यादि । विभीषणोपरि आपतन्तीं तां शक्तिं लक्ष्मणो बाणैः प्रकारत्रयेण कृन्तति स्म कृतीशपच्छिदि पश्यन्तः समरप्रेक्षका देवादयः शब्दशुक्रः शब्दसुखकष्टादेरिति ङ्यः तत इत्यादिकमुत्तरश्लोकेन सम्बध्यते ॥ ९१ ॥ म०

क्रुद्धो निशाचरः किं कृतवानित्याह

अष्टेत्यादि । अष्टौ घण्टा यस्यां महाशक्तौ तां शक्तिं प्रभावेण महत्तरां महतीं अतिशयेन महाप्रमाणां उदयच्छत् उद्यतवान् समुदङ्भ्योयमोग्रन्थ इति तङ् भवति अकर्त्रभिप्रायत्वात् तया च करणभूतया रामानुजं लक्ष्मणमविध्यत् विद्धवान् राममनुजातवानिति जनीकर्मणीति डः स च लक्ष्मणो विद्धः व्यसुः विगतप्राणः महीमाश्रयत् आश्रितवान् भुवि पतित इत्यर्थः ॥ ९२ ॥ जं० म०

अष्टघण्टामित्यादि । तदनन्तरं क्रुद्धो रावणो महाप्रमाणां शक्तिं उदयच्छत् उत्थापितवान् कीदृशीं अष्टौ घण्टा यस्यास्तां प्रभावेण महत्तरां महतीशब्दात्तरप्रत्यये सति पुंवत् स्यादानेति यमेर्यङः तया शक्त्या रामानुजं लक्ष्मणमविध्यत् ताडितवान् स लक्ष्मणो व्यसुर्विगतप्राणः सन् भूमिमाश्रितवान् ॥ ९२ ॥ म०

ततस्तूर्णं दशग्रीवो रणक्ष्मां पर्य्यशेषयत् ॥ ९३ ॥
सस्फुरश्चोदकर्षच्च सौमित्रेः शक्तिमग्रजः ।
असिञ्च दोषधीस्ता याः समानीता हनूमता ॥ ९४ ॥
उदजीवत् सुमित्राभूर्भ्राताश्लिष्यत्तमायतम् ।
सम्यगमूर्द्धन्युपाशिङ्घदपृच्छच्च निरामयम् ॥ ९५ ॥

राघवस्येत्यादि । तस्मिन् पतिते राघवस्य सम्बन्धिनो वाणाः अभ्यशायन्त अभृशा भृशा अभवन् शीघ्रगतयो जाता इत्यर्थः ततस्तैरुपद्रुतो दशग्रीवः तूर्णीभूत्वा रणक्ष्मां रणभूमिं पर्य्यशेषयत् त्यक्तवान् शिष असर्व्वोपयोगे चुरादिः ॥ ९३ ॥ ज० म०

राघवस्येत्यादि । लक्ष्मणे पतिते सति राघवस्य शराः पूर्व्वमभृशास्तदानीं भृशा अभवन् शीघ्रगतयो जाता इत्यर्थः भृशादेश्च्व्यर्थे इति क्यङ् तदनन्तरं तैः सायकैरुपद्रुतो दशग्रीवस्तूर्णं शीघ्रं रणभूमिं पर्य्यशेषयत् त्यक्तवान् शिषकि असर्व्वोपयोगे ॥ ९३ ॥ भ०

सस्फुरस्येत्यादि । अग्रजश्च रामः सौमित्रेः सस्फुरस्य उच्छ्वसतः शक्तिं हृदयलग्नामुदकर्षत् उत्कृष्टवान् याश्च हनूमतौषध्यः समानीतास्ता असिञ्चत् व्रणदेशेषु चारितवान् ॥ ९४ ॥ ज० म०

सस्फुरस्येत्यादि । सोऽग्रजो रामः सस्फुरस्य उच्छ्वसतः सौमित्रेः शक्तिं हृदि लग्नां उदकर्षत् आकृष्टवान् स्फुरधि स्फूर्त्तौ चले पचादित्वादन् कुटादित्वात् कुटांगुणोञ्णितीति निषेधाच्च गुणः या ओषधयो हनूमता समानीतास्ता ओषधीरसिञ्चत् व्रणदेशे इत्यर्थात् षिचप्सौञ् क्षरणे ॥ ९४ ॥ भ०

उदजीवदित्यादि । ततः सुमित्राभूर्लक्ष्मणः उदजीवत् प्रत्युज्जीवितवान् तञ्च जीवितं भ्राता रामः आयतं दीर्घकालमश्लिष्यत् आलिङ्गितवान् मूर्द्धनि च सम्यगुपाशिङ्घत् आघ्रातवान् शिघि आघ्राणे निरामयञ्च कुशलमपृच्छत् पृष्टवान् किं व्यपगता पीडेति ॥ ९५ ॥ ज०म०

उदजीवदित्यादि । सुमित्राभूर्लक्ष्मण उज्जीवितवान् भ्रातृनामस-

ततः प्रोद्हसन् सर्वे योद्धमभ्यद्रवत् परान् ।
अकच्छायत च प्राप्तौ रथेनान्येन रावणः ॥ ९६ ॥
भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः ।
आहरद्रथमत्युग्रं सग्रस्त्रं मघवाज्ञया ॥ ९७ ॥

क्लीर्त्तनं पराजितत्वेनापकर्षात् भ्राता राम आयतं दीर्घकालं तं लक्ष्मणमालिङ्गितवान् स्निग्धौ यत्नेन आलिङ्गनमूर्द्धनि च सम्यगाघ्रातवान् घ्राणे स्नेहाभिव्यञ्जकमिदं निरामयं पीडाया अभावञ्च पृष्टवान् आमयस्याभाव इत्यव्ययीभावः ॥ ९५ ॥ भ०

तत इत्यादि । पुनः सर्व एव रामादयो योद्धुं प्रोदसहन् प्रोत्साहितवन्तः सहमर्षणे इति चौरादिकः परस्मैपदी आघृषाद्वेति णिज् भवति नतु भौवादिकः तस्मादात्मनेपदित्वात् रावणस्यान्येन रथेन प्राप्तः सन् परानुत्सहतोऽभ्यद्रवत् अभिमुखं गतवान् अकच्छायत च कच्छाय पापाय कर्मणे क्रमितवान् सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यमिति क्यङ् कण्वचिकीर्षा पापचिकीर्षा ॥ ९६ ॥ ज० म०

तत इत्यादि । पुनः सर्व एव रामादयो योद्धुं प्रोत्सहन्ते स्म सह्यक्रियकौ क्यनुबन्धत्वाद्वा चुरादिः रावणोऽपि अन्येन रथेन सम्प्राप्तः सन् परान् शत्रून् अभ्यद्रवत् अभिमुखं गतः आत्मनश्च कच्छ्रं इन्द्रजिद्वधादिजन्यं वेदितवान् सुखादित्वात् शब्दसुखकष्टादेरिति ङ्यः कच्छ्रं कर्म्म करोतीति कष्टादिरित्यन्ये तन्मते कूटयुद्धादिना पापवृत्तिः प्रकृत्यन्तरमिति कालापाः कच्छ्रशब्दस्य तद्वति पुरुषे वर्त्तमानत्वात् कच्छ्रवानिवाचरति स्मेति धातुङ्यकौ इति ङ्य इति केचित् ॥ ९६ ॥ भ०

भूमिष्ठस्येत्यादि । भूमिष्ठस्य रामस्य अश्वाक्षेति मूर्द्धन्यः रथस्थेन रावणेन सह योद्धुमसममतुल्यमयुक्तमिति निरूपितवतो मघवतः इन्द्रस्य आज्ञया मातलिः सग्रस्त्रं रथमत्युग्रमाहरत् आनीतवान् ॥ ९७ ॥ ज० म०

भूमिष्ठस्येत्यादि । भूमिस्थितस्य रामस्य रथस्थितेन रावणेन सह युद्धमसममतुल्यमयुक्तमिति विचारयतो मघोन इन्द्रस्याज्ञया मातलिस्तस्य

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः ।
निरास्थत दशास्यस्तच्छक्रास्त्रेणाजयन्नृपः ॥ ९८ ॥
ततः शतसहस्रेण रामः प्रौर्णोन्निशाचरम् ।
वाणानामच्छिणोद्धुर्यान् सारथिञ्चालुनोद्द्रुतम् ॥ ९९ ॥
अदृश्यन्तानिमित्तानि प्राहलत् च्छितिमण्डलम् ।

सारथिः मयस्त्रं अग्रं रथं आहरत् आनीतवान् भूमौ तिष्ठतीति ष्ठन-जनादिति डः मनोषादित्वात् षस् ॥ ९७ ॥ भ०

सोऽध्यष्ठीयतेत्यादि । स रथो रामेणाध्यष्ठीयत अध्यासितः कर्मणि लङ् षमास्थे तीत्वं गुणोपृक्त इत्यादिना षत्वं अड्व्यवायेऽपि ततोऽनन्तरं दशास्यः पाशुपतमस्त्रं निरास्थत क्षिप्तवान् उपसर्गादस्यत्यूह्योर्वा वचनमिति तङ् तत्पाशुपतं नृपो रामः शक्रास्त्रेणाजयत् जितवान् ॥ ९८ ॥ ज० स०

सोऽध्यष्ठीयतेत्यादि । स रथो रामेणाधिष्ठितः कर्मणि यक् दाम-गेहागित्यादिना ङीः गीक इति षत्वं ततो दशास्यः पशुपतिदेवत्तं शस्त्रं क्षिप्तवान् गेर्वास्योह इति पक्षे मं नृपो रामस्तत् पाशुपतशस्त्रं शक्रास्त्रेण जितवान् ॥ ९८ ॥ भ०

तत इत्यादि । ततोऽनन्तरं रामः निशाचरं वाणानां शतसह-स्रेण लक्षेण प्रौर्णौत् छादितवान् गुणोपृक्त इति गुणः द्रुतं धुर्यानश्वान् धुरोयड्ढाविति यत् अच्छिणोत् हतवान् सारथिं चादुनोत् उपतापित-वान् ॥ ९९ ॥ ज० स०

तत इत्यादि । तदनन्तरं रामो वाणानां शतसहस्रेण लक्षेण निशाचरं रावणं प्रौर्णोदाच्छादितवान् ऊर्णुञ् आच्छादने व्यासेति गुणः द्रुतं धुर्यान् रथाश्वान् अच्छिणोत् हिंसितवान् क्षणुक्षिणुञ् बधे धुरं वहतीति ढधेकादिति यः व्यंनच्‌तयोत्थक्तेर्न दीर्घः सारथिञ्च पीडित-वान् ॥ ९९ ॥ भ०

अदृश्यन्तेत्यादि । रावणस्यानिमित्तानि अदृश्यन्त दृष्टानि कर्मणि

रावणः प्राच्छिनोच्छूलं शक्तिमैन्द्रीं महीपतिः ॥ १०० ॥

ताभ्यामन्योन्यमासाद्य समवाप्यत संशमः ।

लक्षेण पत्रिणां रक्षः क्रुद्धो रामस्य वाक्षसः ॥ १०१॥

अस्तृणादधिकं रामस्ततोऽदेवन् शायकैः ।

अक्लाम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ १०२ ॥

लङ् क्षितिमण्डलं प्राह्वलत् चलितं ह्वलचलने रावणश्चानिमित्तानि दृष्ट्वा अक्लाम्यच्छूलं प्राच्छिनोत् छिन्नवान् महीपतिः स रामः ऐन्द्रीं शक्तिं प्राच्छिनोत् छिगतौ स्वादि ॥ १०० ॥ ज० म०

अदृश्यन्तेत्यादि । रावणेन अनिमित्तानि दुर्निमित्तानि दृष्टानि कर्मणि यक् क्षितिमण्डलं प्राह्वलत् चचाल ह्वलह्मल चाले रावणः शूलं प्राच्छिनोत् छिन्नवान् महीपतौ राम ऐन्द्रीं शक्तिं प्राच्छिनोत् छिन् वर्द्धने गतौ ॥ १०० ॥ म०

ताभ्यामित्यादि । ताभ्यां शूलशक्तिभ्यामन्योन्यमासाद्य संश्लिष्य संशमः संशमनं घञि नोदात्तेति वृद्धिप्रतिषेधः समवाप्यत प्राप्तः कर्मणि लङ् अनन्तरं क्रुद्धो राक्षसः पत्रिणां शराणां शतसहस्रेण लक्षेण रामस्य वक्षः अस्तृणादिति वक्ष्यमाणेन सम्बन्धः छादितवान् स्तृञादीनां ह्रस्वः ॥ १०१ ज० म०

ताभ्यामित्यादि । ताभ्यां शूलशक्तिभ्यां अन्योन्य मासाद्य आश्लिष्य संशमः क्षयः प्राप्तः कर्मणि यक् संशमनं संशमः घञि जनवधः शेम इति ह्रस्वः ततो रावणः क्रोधात् पत्रिणां वाणानां लक्षेण रामस्य वक्षो हृदयं अस्तृणादित्युत्तरश्लोकेनान्वयः स्तृञ गच्छादने प्वादेः स्रोले इति ह्रस्वः ॥ १०१ ॥ म०

अस्तृणादित्यादि । ततोऽनन्तरं रामो राक्षसादधिकं अदेवत क्रीडितवान् तुष्टदेष्टदेवन इति स्वादावनुदात्तेत् स तथा देवमानेनाहतो रावणः अक्लाम्यत् ग्लानिमुपगतः तस्य तथाभूतस्य रावणस्य सूतः सारथिः स्वामिजीवितेच्छया रथमनाशयत् दूरं अपनीतवान् ॥ १०२ ॥ ज० म०

राक्षसोऽतर्ज्जयत् सूतं पुनश्चाढौकयद्रथम् ।
निरास्येतामुभौ वाणानुभौ धुर्य्यानविध्यताम् ॥ १०३ ॥
उभावक्रन्ततां केतूनव्यथेतामुभौ न तौ ।
आदीप्येतामुभौ धृष्णू प्रायुञ्जाताञ्च नैपुणम् ॥ १०४ ॥

अस्तृणादित्यादि । ततो रामो रावणसायकाधिकसायकैरदेवत क्रीडितवान् देहृङ्देवने रामेण हतो रावणोऽक्लाम्यत् क्लम्युञ्जिभिर्ग्लानौ तस्य तादृशस्य रावणस्य सूतः सारथी रथं अनाययत् स्वामिजीवनेच्छया दूरमपनीतवान् नसृयूनाये ञिः ॥ १०२ ॥ म०

राक्षस इत्यादि । राक्षसो रावणः सूतमतर्जयत् भर्त्सितवान् हा पाप किं मत् समीपाद्रथं पराङ्मुखयसीति इत्थं संतर्जितः सूतः पुनरपि रथमढौकयत् ढौकितवान् रामसमीपमित्यर्थात् उभौ रामरावणौ वाणान्निरास्येतां क्षिप्तवन्तौ अस्यत्यूहृोर्वेति तङ् धुर्य्यानश्वानविध्यतां ताडितवन्तौ ॥ १०३ ॥ ज० म०

राक्षस इत्यादि । रावणः सूतं तर्जितवान् रथापसरणेन लज्जोपादानात् तर्ज कड्तर्ज भर्त्सने चुरादित्वात् आवु भयपदित्वं चुभ्यौं ञिर्वेति ञिः पाक्षिकत्वात्तदभावपक्षे ङनुबन्धादात्मनेपदं कानुबन्धान्नित्यमप्राप्नतेति चेत् क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वं परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनमित्यादि प्रयोगदर्शनात् भौवादिकात् प्रेरणाभावर्थासङ्गतिः कर्मकर्तृत्वविवक्षया पुनः प्रेरणे ञिरिति केचित् पुनश्च रथं अढौकयत् रामान्तिकं प्रापितवान् ढौकृत्वौकतिकङ् गत्यां प्रेरणे ञिः उभौ रामरावणौ वाणान् क्षिप्तवन्तौ गेर्वोऽप्योह इति मं ततो धुर्य्यानश्वान् अविध्यताम् ॥ १०३ ॥ म०

उभावित्यादि । तावुभौ रामरावणौ केतून् ध्वजानक्रन्ततां छिन्नवन्तौ तावुभौ नाव्यथेतां न व्यथितवन्तौ उभावदीप्येतां शोभितवन्तौ धृष्णू च प्रगल्भौ नैपुणं कौशलं प्रायुञ्जातां प्रयुक्तवन्तौ ॥ १०४ ॥ ज० म०

उभावित्यादि । तत उभौ रामरावणौ केतून् ध्वजान् अक्रन्ततां

उभौ मायां व्यतायेतां वीरौ नाश्राम्यतामुभौ ।
मण्डलानि विचित्राणि क्षिप्रमाक्रामतामुभौ ॥ १०५ ॥
न चोभावप्यलक्ष्येतां यन्तारावाह्वतामुभौ ।
स्यन्दनौ समपृच्येतामुभयोर्दीप्तवाजिनौ ॥ १०६ ॥

क्ततोषपर्क्छेर्दि तावुभौ न व्यथेतां न भीतौ व्यथभङ् दुःखे चालेभये उभौ अदीप्येताम् शोभितवन्तौ दीपीङ्ग्रकदीपने दृष्णु प्रगल्भौ नैपुण्यं युद्धकौशलं प्रयुक्तवन्तौ युजिर्धौञिच युतौ युजिरोद्गच इति सं निपुणाङ्गाने विवारसंघेति ण्णः ॥ १०४ ॥ भ०

उभौ मायामित्यादि । तावुभौ मायां व्यतायेतां विस्तारितवन्तौ तायृसन्तानपालनयोः भ्वादौ उभौ वीरौ नाश्राम्यतां न श्रान्तौ युद्धमानौ च तावुभौ मण्डलानि विचित्राणि मतिवैचित्र्यात् क्षिप्रमाक्रामतां भ्रान्तौ वाभ्राशेति शप् ॥ १०५ ॥ ज० म०

उभौ मायामित्यादि । उभौ मायां व्यतायेतां विस्तारितवन्तौ तायृङ्पालनसन्तत्योः नाश्राम्यतां न श्रान्तौ यतो वीरौ युध्यमानावुभौ विचित्राणि मण्डलानि क्षिप्रमाक्रामतां भ्रान्तौ क्रमः पेपिषैः ॥ १०५ ॥ भ०

न चेत्यादि । तावुभौ नाप्यलक्ष्येतां प्रेक्षकैर्न ज्ञातौ अयं रामः अयञ्च रावण इति कर्मणि लङ् यन्तारौ सूतौ कर्मपदमेतत् उभौ परस्परमाह्वतवन्तौ अनुदात्तोपदेशेत्यादिनानुनासिकलोपः स्यन्दनौ रथौ उभयोः रामरावणयोः दीप्तवाजिनौ चामरादिमण्डनात् दीप्ता उज्ज्वला वाजिनो ययोः तयोः स्यन्दनौ समपृच्येतां संपृक्तौ पृचीसम्पर्के कर्मणि लङ् ॥ १०६ ॥ ज० म०

न चेत्यादि । तावुभौ न चालक्ष्येतां प्रेक्षकैर्न दृष्टौ लक्षकञ् दर्शनेऽङ्के कर्मणि यक् तावुभौ यन्तारौ सारथी सकर्मकत्वान्न मं ह्वलेरनिमृत्वात् वनतनाद्यनिसामिति नलोपः उभयोस्तयोः स्यन्दनौ संपृक्तौ पृचधीसम्पर्के कर्मणि कर्मकर्त्तरि वा यक् चामरादिना दीप्ता वाजिनोऽश्वाः ययोः स्यन्दनयोः ॥ १०६ ॥ भ०

ततोमायामयान्मूर्द्धो राक्षसोऽप्रथयद्रणे ।
रामेणैकशतं तेषां प्रावृश्चत शिलीमुखैः ॥ १०७ ॥
समक्षुभण्न्नुदन्वन्तः प्राकम्पन्त महीभृतः ।
सन्त्रासमबिभः शक्रः प्रैङ्खच्च क्षुभिता क्षितिः ॥ १०८

तत इत्यादि । ततोऽनन्तरं राक्षसः मायामयान् मायास्वभावा-न्मूर्द्धः शिरांसि अप्रथयत् प्रदर्शितवान् प्रथप्रख्याने इति घटादौ तेषाञ्च शिरसाम् एकशतं एकाधिकं शतं रामेण शिलीमुखैः शरैः प्रावृश्चत छिन्नं कर्म्मणि लङ् ॥ १०७ ॥ ज० म०

तत इत्यादि । तदनन्तरं रावणो मायामयान् मायास्वभावान् मूर्द्धः शिरांसि अप्रथयत् विस्तारितवान् स्वाभाविकमस्तकानां रक्षार्थे बहिर्वर्त्तीन्यन्यानि शिरांसि कृतवानिति भावः प्रथप्रख्याने घटादि-त्वात् ह्रस्वः मयट्तद्रूपे तेषां शिरसामेकाधिकं शतं रामेण प्रावृश्चत छिन्नं कर्म्मणि यक् ॥ १०७ ॥ म०

समक्षुभण्णित्यादि । छिन्नानाञ्च पततां क्षोभादुदन्वन्तः सागराः समक्षुभ्णन् सञ्चलिताः क्षुभसञ्चलने इति क्रयादि महीभृतः प्राकम्पन्तः कम्पिताः शक्र इन्द्रः संत्रासमबिभः भृतवान् पततां शिरसां पुनः पुनरु-दयात् मायया विमोहाय रामसमर्जेषीदिति विभर्त्तेः श्लौद्विर्व्वचनं भृञामित् धातोर्गुणः परक्षपत्वमिति लोपविसर्ज्जनीयौ प्रैङ्खत् क्षुभितश्च स शक्र उखेत्यादा इखिरिति पठ्यते क्षितिश्च क्षुभिता चलिता ॥ १०८ ॥ ज० म०

समक्षुभण्णित्यादि । छिन्नानां मूर्द्धां पतनादुदन्वन्तः समुद्राः सं-क्षोभिताः क्षुभ्यगच चकारात् सञ्चले मनीषादित्वाणभावः पर्वताः कम्पिताः शक्रः सन्त्रासं बभार छिन्नानां शिरसां खड्गेनाद्युद्धोपप्लवात् भृहुडुञ-भृतिपुष्चोः ह्वादीरेद्विः पृभ्रादेर्ङिः गुर्णेङ इति गुणः हृसड्ञामिति द्विपलोपः मस्तकाभारात् प्राक्षुभिता क्षितिः प्रैङ्खत्कम्पिता इखिदेखिगतौ शक्रः प्रैचत् क्षितिः प्रक्षुभितेत्यन्ये ॥ १०८ ॥ म०

ततो मातलिना शस्त्रमस्मार्य्यत महीपतिः ।
बाधाय रावणस्योग्रं स्वयम्भूर्यदकल्पयत् ॥ १०९ ॥
नभस्वान् यस्य वाजेषु फले तिग्मांशुपावकौ ।
गुरुत्वं मेरुसङ्काशं देहः सूक्ष्मो वियन्मयः ॥ ११० ॥
राजितं गारुडैः पक्षैर्विश्वेषां धाम तेजसाम् ।
स्मृतं तद्रावणं भित्वा सुघोरं भुव्यशाययत् ॥ १११ ॥

तत इत्यादि । रावणस्य बधाय स्वयम्भूर्यदस्त्रमकल्पयत् कल्पितवान् क्रमेर्णौ गुणः क्रपेरोलः तदस्त्रं मातलिना अस्मार्य्यत स्मारितं स्मरतेर्ण्यन्तात् कर्मणि लङ् मित्त्वाद्ध्रस्वत्वं महीपतेरित्यधीगर्थेति षष्ठी ॥ १०९ ॥ ज० म०

तत इत्यादि । तदनन्तरं रावणस्य बधाय, स्वयम्भूर्ब्रह्मा यदुग्रं शस्त्रं अकल्पयत् तत् शस्त्रं मातलिना महीपती रामोऽस्मार्य्यत स्मारितः स्मृ स्मृतौ अन्तात् कर्मणि यक् महीपतेरिति पाठे भावे यक् कर्मणि सम्बन्धविवक्षया वा षष्ठी ॥ १०९ ॥ भ०

कीदृशं तदित्याह

नभस्वानित्यादि । यस्य शस्त्रस्य वाजेषु नभस्वान् वायुःसन्निहित इत्यर्थात् फले तिग्मांशुरादित्यः पावकश्च यस्य गुरुत्वं मेरुवत् मेरोरिव दृढत्वं मेरुसङ्काशमिति पाठान्तरं तत्र मेरुस्यगौरवंसदृशमित्यर्थः सूक्ष्मो देहो दिव्यचक्षुर्गम्यः वियन्मय आकाशस्वभावः ॥ ११० ॥ ज० म०

नभस्वानित्यादि । यस्यास्त्रस्य वाजेषु पक्षेषु नभस्वान् वायुः सन्निहित इत्यर्थात् यस्य फलेऽग्रे तिग्मांशुपावकौ सूर्य्योऽग्निश्च यस्य गुरुत्वं मेरुवत् मेरोरिव मेरुसङ्काशमिति पाठे मेरोर्यद्गुरुत्वं तत्तुल्यमित्यर्थः यस्य देहः सूक्ष्मः दिव्यदृष्टिदृश्यः अथच वियन्मय आकाशस्वभाव स्तत्मिति वक्ष्यमाणेनान्वयः ॥ ११० ॥ भ०

राजितमित्यादि । गारुडैः पक्षै राजितं शोभितं तेजसां विश्वेषां अनेकप्रकाराणां धाम स्थानं तदस्त्रं रामेण स्मृतं स्मृतिमागत्य सुघोरं

आबध्नन् कपिवदनानि संप्रहासं
प्राशंसत् सुरसमितिर्नृपं जितारिम् ।

रावणं भित्त्वा भुवि अशाययत् शायितवान् रावणस्योदरं भित्त्वा भूमौ पातितवानित्यर्थः ॥ १११ ॥ ज० म०

राजितमित्यादि । गरुड़सम्बन्धिभिः पत्रै राजितं दीप्तं विद्वेषां तेजसां धाम स्थानं तदस्त्रं रामेण सृतं सुघोरं अतिभीषणं रावणं हत्वा भुवि शायितवान् पातयामासेत्यर्थः शीय निशाने शिः प्रेरणे शाच्छासाह्वेति यन् ॥ १११ ॥ म०

आबध्नन्नित्यादि । तस्मिन् हते कपिवदनानि कर्तृभूतानि तोषात् प्रहासमाबध्नन् सेवितवन्ति सुरसमितिः सुरसमूहः नृपं जितारिं प्राशं-सत् स्तुतवती अन्येषां अन्यजनानां दिगन्ताः रावणवधाद्विगतपरिप्लवा निरुपद्रवा जाता इत्यर्थात् पौलस्त्यो विभीषणः विपन्नबन्धुः हतभ्रा-तृकः शुचं शोकमजुषत् सेवितवान् जुषिरुदादावनुदात्तेत् ॥ ११२ ॥ ज०म०

इति भट्टिकाव्यटीकायां तिङ्काण्डे लङ्विलसितश्चतुर्थः परिच्छेदः काव्यस्य रावणवधो नाम सप्तदशः सर्गः ।



अन्येषां विगतपरिप्लवा दिगन्ता
पौलस्त्योऽजुषत शुचं विपन्नबन्धुः ॥ ११२ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो नाम
सप्तदशः सर्गः ।

आबभ्रिरित्यादि । तस्मिन् हते सति कपीनां वदनानि सम्प्रसादं प्रसन्नतामाबबन्धुः सम्प्रकाशमिति क्वचित् पाठः सम्प्रहासमिति केचित् सुरसमितिः देवानां सभा जितारिं नृपं प्राशंसत् अन्येषां जनानां दिगन्ता रावणवधाद्विगतपरिप्लवा निरुपद्रवा अभवन् पौलस्त्यो विभीषणः विपन्नबन्धुर्हतभ्रातृकः शुचं शोकं जुषते स्म सेवितवान् षडोभिजुषसुदिसेवे । प्रहर्षिणीच्छन्दः लक्षणं यथा त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ॥ ११२ ॥ भ०

इति सद्वैद्यहरिहरखामवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां रावणवधो
नाम सप्तदशः सर्गः ।

# अष्टादशः सर्गः ।

—*—

व्यश्नुते स्म ततः शोको नाभिसम्बन्धसम्भवः ।
विभीषणमसावुच्चै रोदिति स्म दशाननम् ॥ १ ॥
भूमौ शेते दशग्रीवो महार्हशयनोचितः ।
नेक्षते विह्वलं माञ्च न मे वाचं प्रयच्छति ॥ २ ॥

इतः प्रभृति लटमधिकृत्य लड्विलसितमाह तत्र वर्त्तमाने लट् ततोऽन्यत्रापि दर्शयिष्यति

व्यश्नुत इत्यादि । ततो बधादनन्तरं शोको विभीषणं व्यश्नुते स्म व्याप्तवान् लङ् स्म इति भूतानद्यतन परोक्षे लट् नाभिसम्बन्धेन एकोदरसम्बन्धेन सम्भवो यस्य शोकस्य असौ प्रवृद्धशोको विभीषणः उच्चैर्महता शब्देन दशाननं नामग्राहं रोदिति स्म रुदितवान् ॥ १ ॥ ज० म०

अथ कौमधिकृत्याह अस्याः परमते लङिति संज्ञा

व्यश्नुते इत्यादि । ततो रावणबधानन्तरं शोको विभीषणं व्यश्नुते स्म व्याप्तवान् अश्नुङ्व्याप्तिसंहत्योः कौञ्नातीत इति भूते कौ कीदृशः शोकः नाभिसम्बन्धेन गोत्रसम्बन्धेन सम्भवः उत्पत्तिर्यस्य असौ शोकार्त्तो विभीषण उच्चैर्महाशब्देन दशाननं रोदिति स्म व्यशिरुदरोद पूर्ववद्भूते कौ रुद्गोऽय इतीम् ॥ १ ॥ भ०

तदेव दर्शयन्नाह

भूमावित्यादि । महार्हशयने उचितो यः स भूमौ शेते शोकाद्विह्वलञ्च मां नेक्षते मे वाचं प्रतिवचनं न प्रयच्छति न ददाति दाण-दाने पाघ्रेत्यादिना यच्छादेशः ॥ २ ॥ ज० म०

विपाकोऽयं दशग्रीव ! संदृष्टोऽनागतो मया ।
त्वं तेनाभिहितः पथ्यं किं कोपं न नियच्छसि ॥ ३ ॥
भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः ।
तान्मदान्नावतिष्ठन्ते ये मते न्यायवादिनाम् ॥ ४ ॥

भूमावित्यादि । दिव्यशय्याशायी दशग्रीवो भूमौ शेते शीङ् स्वप्ने भवद्भूतभव्ये इति वर्त्तमाने क्तौ शीङोरेणुः विह्वलं शोकव्याकुलं मां न ईक्षते न पश्यति ईक्षङ् दर्शने महां वाचं न प्रयच्छति न ददाति दा दाने स्यादानपेतियच्छादेशः ॥ २ ॥ भ०

विपाक इत्यादि । हे दशग्रीव ! अयं विपाको मरणलक्षणं फलं अनागतोऽभविष्यन्नेव मया संदृष्टः सम्यगुपलब्धः इदानीं पश्यसि तेन कारणेन योऽभिहितोऽसि सीतां मुञ्चेति अतः किमिति कोपं न नियच्छसि नापनयसि नाश्येव मम दोषः निपूर्बोयमिरपनयने वर्त्तते ॥३॥ ज०म०।

विपाक इत्यादि । हे दशग्रीव ! अयमनागतो भविष्यन् विपाको मरणरूपो मया संदृष्टः सम्यगुपलब्धः तेन कारणेन पथ्यं सीतां मुञ्चेति हितं त्वमभिहित उक्तोऽसि लोपोऽस्यमोरिति सलोप इदानीं स्रत एव किं कोपं न नियच्छसि नापनयसि मम दोषो नाश्येव यमौङ्विरतौ निपूर्बोऽपनयने स्यादानपेति यच्छादेशः ॥ ३ ॥ भ०

भजन्तीत्यादि । अन्यच्च ये स्वामिनो मदादवलेपात् न्यायवादिनां माल्यवत्प्रभृतीनां मते नावतिष्ठन्ते समवप्रविभ्य स्थ इति तङ् ते पुरुषाः विपदस्तूर्णं भजन्ति अससाटं सेवन्ते भजिरमयमदी सम्पदश्चातिक्रामन्ति त्यजन्ति ॥ ४ ॥ ज० म०

भजन्तीत्यादि । ये स्वामिनो न्यायवादिनां मते मदादहङ्कारात् नावतिष्ठन्ते प्रतिज्ञानिर्णयेत्यादिना अवपूर्वात् स्थो मं तान् विपदस्तूर्णं भजन्ति सेवन्ते भजञौभागसेवनयोः सम्पदस्तान् अतिक्रामन्ति त्यजन्ति क्रमःमेऽपिषः न्यायवादिनां माल्यवदादीनां यन्मतं त्वया नादृतं तेनेयं विपत् सम्पच्च गतेति भावः ॥ ४ ॥ भ०

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः।
प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः॥ ५॥
प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च।
तेऽवज्ञाता महाराज क्लाम्यन्ति विरमन्ति च॥ ६॥
लेढि भेषजवन्नित्यं यः पथ्यानि कटून्यपि।

अपथ्यमित्यादि। प्रायेण ह्यनुजीविनः प्रहस्तादिसदृशाः आयता-वागामिनि काले ह्युद्धावस्थायामपथ्यमनिष्टं फलं लोभेन तृष्णया वा प्रियमामनन्ति उपदिशन्ति साध्विदमिति तेभ्यो यः शृणोति तं सम्पदो न ऋच्छन्ति अर्ते ऋच्छादेशः॥ ५॥ ज० म०

अपथ्यमित्यादि। अनुजीविनः प्रहस्तादिसदृशाः प्रायेण लोभात् तृष्णया आयतौ उत्तरकाले अपथ्यमनिष्टफलं आपाततः सुखप्राप्यत्वात् प्रियं भर्तृष आमनन्ति उपदिशन्ति म्ना अभ्यासे स्वादानेति मनादेशः यस्तेभ्यः प्रियं साधूक्तमिदमिति शृणोति श्रोः श्रु र्धरेजिश्च सम्पदस्तं न ऋच्छन्ति न गच्छन्ति ऋप्रापणे च पूर्ववत् ऋच्छादेशः ऋच्छधातोरूपं वा ॥ ५॥ भ०

प्राज्ञाइत्यादि। ये प्राज्ञाः तेजस्विनः अस्मद्विधाः सम्यगविपरीतं शास्त्रचक्षुषा पश्यन्ति वदन्ति च सम्यक् हे महाराज! अवज्ञातास्ते निरस्कृताः क्लाम्यन्ति खिद्यन्ते विरमन्ति च विमुखा भवन्ति तदवज्ञानफल-मेतदिति भावः॥ ६॥

प्राज्ञा इत्यादि। ये प्राज्ञास्तेजस्विनोऽस्मद्विधाः सम्यक् अविपरीतं शास्त्रदृष्ट्या पश्यन्ति दृशेः पूर्ववत् पश्यादेशः ज्ञातिहितार्थं वदन्ति च हे महाराज! ते युष्मदत्कारोऽस्मद्विधास्त्वयावज्ञाताः तिरस्कृताः सन्तः क्ला-म्यन्ति खिद्यन्ति क्लमुभिर्ज्ञिग्लानौ यम्योतृष्ठमादीति घैः विरमन्ति मौन-माचरन्ति च घे पं पराङ्मुप्रतीत्यादिना विपूर्वैरमः पं तदवज्ञाफलमिद-मिति भावः॥ ६॥ भ०

लेढीत्यादि। यस्तु स्वामी आदौ कटून्यपि पथ्यानि परिणामसु-

तदर्थं सेवते चाम्नान् कदाचिन्न स सीदति ॥ ७ ॥
सर्वस्य जायते मानः स्वहिताच्च प्रमाद्यति ।
वृद्धौ भजति चापथ्यं नरो येन विनश्यति ॥ ८ ॥
द्वेष्टि प्रायो गुणिभ्योऽपि न च स्निह्यति कस्यचित् ।
वैरायते महद्भिश्च शीयते वृद्धिमानपि ॥ ९ ॥

स्वानि भेषजवदौषधिमिव नित्यं लेढि श्रोत्रेन्द्रियेणानुभवति तदर्थं चाम्ना-नविसम्वादिनः सेवते स कदाचिन्नावसीदति इह च परत्र चावसन्नो न भवति ॥ ७ ॥ ज० म०

लेढीत्यादि । यः स्वामी पथ्यानि सर्व्वदा हितानि कटून्यपि लेढि अभिलष्यति भेषजवत् तिक्तौषधमिव पिवति लिहौ लआस्वादे ह्वोढः ढभात्तयोर्धः ष्टुभिरिति ढः तदर्थं पथ्यार्थं आम्नान् अविसम्वादिनः सेवते स कदाचित् न अवसीदति नावसन्नो भवति स्यादानेति सदेः सीद ॥ ७ ॥ भ०

सर्वस्येत्यादि । प्रायेण वृद्धौ सत्यां सर्व्वो जनो मानी सञ्जायते वृद्धेश्चित्तविकारित्वात् स्वहिताच्च प्रमाद्यति हिताद्भ्रष्टो भवति अपथ्यञ्च भजति सेवते येनापथ्येन सेवितेन नरो विनश्यति ॥ ८ ॥ ज० म०

सर्वस्येत्यादि । प्रायेण वृद्धौ सत्यां सर्वस्य जनस्य मानोगर्वो जायते जनोश्यङ्जनने स्वहितात् प्रमाद्यति वृद्ध्या प्रमत्तमतित्वात् स्वीयमुपकारं न जानाति मदेः शमादित्वात् दीर्घः अपथ्यञ्च भजति सेवते येनापथ्येन विनाशं गच्छति णशल्दय् नाशे ॥ ८ ॥ भ०

द्वेष्टीत्यादि । यद्यस्माद् वृद्धौ सत्यां प्रायेण गुणिभ्यः वृद्धसेवित्वादिभ्यः प्रभुर्द्वेष्टि क्रुधद्रुहेति सम्प्रदानसंज्ञा न च कस्यचित् स्निह्यति प्रीयते महद्भिश्च सह वैरायते वैरं करोति शब्दवैरेति क्यङ् तस्मात्कारणात् वृद्धिमानपि शीयते विनश्यति शदेः शिति शीयादेशः शदेः शित इति तङ् ॥ ९ ॥ ज०म०

समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः ।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ ॥ १० ॥
अहो जागर्त्ति कृच्छ्रेषु दैवं यद्बलभिज्जितः ।
लुठ्यन्ति भूमौ क्लिद्यन्ति बान्धवा मे स्वपन्ति च ॥११ ॥

द्वेष्टीत्यादि । यः प्रभुः प्रायो गुणिभ्यो बहुपण्डितादिभ्यो द्रुह्यति ईर्ष्यापरोऽभवेर इत्यादिना चतुर्थी न च न कस्यचित् स्निह्यति प्रीयते सम्बन्धविवक्षया षष्ठी ष्णिहूयल्लप्रीतौ महद्भिः सह वैरं करोति शब्दसुखकष्टादिरिति ङ्यः तस्मात्कारणात् वृद्धियुक्तोऽपि शीयते विनश्यति स्थादानेति शदेः शीयादेशः ॥ ९ ॥ म०

समाश्वसिमीत्यादि । यस्य मम भ्राता लोकत्रयपतिः क्षितौ स्वपिति सोऽहं केनोपायेन समाश्वसिमि शोकं त्यजामि रुदादिभ्य इतीड् दुर्गतो दुःखितः कथं केन प्रकारेण प्राणिमि जीवामि जं० म०

समाश्वसिमीत्यादि । केन प्रकारेणाहं समाश्वसिमि रुदादित्वात् रुद्रोऽय इति इम् दुःखी अहं केन प्रकारेण प्राणिमि जीवामि पूर्ववदिमाप्राग्वन्नो णा इत्यादिना णत्वं यस्य मे मम त्रैलोक्यस्य शासिता भ्राता रावणः क्षितौ स्वपिति शेते पूर्ववदिम् सोऽहमिति योज्यम् ॥ १० ॥ भ०

अहो इत्यादि । अहो इति विस्मये कृच्छ्रेषु दुःखेषु दैवं जागर्त्ति अवहितमित्यर्थः नित्यं दुःखोत्पादनात् यद्यस्मात्कारणादपरमपि मम बन्धवाः बलभिज्जितः बलं भिनत्तीति बलभिदिन्द्रः तं जयन्तीति क्विप् भूमौ लुठ्यन्ति लुटलुठलोटने दिवादौ तथा क्लिद्यन्ति पूतीभवन्ति स्वपन्ति दीर्घनिन्द्रां प्रवेशिताः ॥ ११ ॥ ज० म०

अहो इत्यादि । अहो आश्चर्यं कृच्छ्रेषु कष्टेषु विषयेषु दैवं किं जागर्त्ति चेष्टते सदा देहिनां कष्टं जनयतीत्यर्थः यद्यस्मात् बलभिज्जितः शक्रपराभवकारिणोऽपि मम बान्धवा रावणादयो लुठ्यन्ति भूमौ लुठिता भवन्ति क्लिद्यन्ति क्लेदयुक्ता भवन्ति स्वपन्ति च महानिद्रां प्रविशन्तीत्यर्थः ॥ ११ ॥ भ०

शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितम् ।
दशग्रीवसनाभीनां समदन्त्यामिषं खगाः ॥ १२ ॥
येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाहवे ।
तस्यापीन्द्रजितो दैवात् ध्वाङ्क्षैः शिरसि लीयते ॥१३॥
स्वर्भानुर्भास्करं यस्तं निष्ठीवति कृताह्निकः ।
अभ्युपैति पुनर्भूतिं रामग्रस्तो न कश्चन ॥ १४ ॥

शिवा इत्यादि । दशग्रीवसनाभीनां दशग्रीवेण तुल्यगोत्राणां ज्योतिर्जनपदेत्यादिना समानस्य सभावः मांसानि शिवाः शृगालाः कुष्णन्ति कुष निष्कर्षे भूमिः शोणितं पिबति खगाः पक्षिणः मांसशोणितव्यतिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति ॥ १२ ॥ ज० म०

शिवा इत्यादि । दशग्रीवसनाभीनां रावणसजातीयानां मांसानि शिवाः शृगालाः कुष्णन्ति भूमिः पृथिवी च तेषां रक्तं पिबति खगाः पक्षिणस्तेषामामिषं मांसशोणितातिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति कुष निष्कर्षे ॥ १२ ॥ भ०

येनेत्यादि । येनेन्द्रजिता पूतक्रतोरिन्द्रस्य महाहवे महासमरे मूर्ध्नि अग्रतः स्थीयते स्म स्थितं अपरोक्षे चेति लट् विशेषणस्य ह्यपरोक्षभूतानद्यतनत्वादयं तस्यापीन्द्रजितः शिरसि दैवाद्रामाद्भूतात् ध्वाङ्क्षैः काकैर्लीयते वर्त्तमान एव भावे लट् ॥ १३ ॥ ज० म०

येनेत्यादि । येन इन्द्रजिता पूतक्रतोरिन्द्रस्य महाहवे महायुद्धे मूर्ध्नि अग्रतः स्थीयते स्म दामागेहागिति ङीः तस्यापि इन्द्रजितः शिरसि मस्तके दैवात् ध्वाङ्क्षैः काकैर्लीयते लीङ्श्लेषणे उभयत्र भावे कौ ॥ १३ ॥ भ०

स्वर्भानुरित्यादि । स्वर्भानुः राहुः भास्करं यस्तं ग्रासीकृतं कृताह्निकः कृताहारः निष्ठीवति स्वमुखान्निरस्यति रामग्रस्तो रामाभिभूतः पुनर्भूतिं नाभ्युपैति कश्चन कश्चिदपि भूतिं न प्राप्नोति एतत्ये धत्यूठ्स्विति वृद्धिः अभ्यमीति पाठान्तरं तदयुक्तं छान्दसत्वात् यतः अस्तो

त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमम् ।
दातुं नेच्छसि सीतां स्म विषयांश्च नेशिषे ॥ १५ ॥
मन्त्रे जातु वदन्त्यज्ञास्त्वं तानप्यनुमन्यसे ।
कथं नाम भवांस्तत्र नावैति हितमात्मनः ॥ १६ ॥

बहुलं छन्दसि ह्लादावनन्तरे सार्वधातुके तरस्तुशस्यमः सार्वधातुक इतीट् ॥ १४ ॥ ज०म०

स्वर्भानुरित्यादि । स्वर्भानूराहुर्यस्तं ग्रासीकृतं सूर्यं कृताह्निकः टन्य कृताहारः सन् निष्ठीवति निरस्यति ष्ठिवुक्लमाचम इति दीर्घः ष्ठ्यादि ष्ण इत्यादौ ष्ठिव वर्ज्जनादादौ पक्ष्म सत्वं रामेण यस्तोऽभिभूतः कश्चित् पुनर्भूतिं वृद्धिं नाभ्युपैति न प्राप्नोति गेधौरनेधिष इति इष वर्ज्जनात् आदिणेचोरिति वृद्धिः ॥ १४ ॥ भ०

त्वमित्यादि । हे राजन् ! त्वमिदं यथोदितमजानन् स्वविक्रममीडिषे स्म स्तुतवानसि ईडजनोर्ध्वे चेति चकारात्सेशब्दस्यापीट् एवञ्च कृत्वा त्वं सीतां दातुं नेच्छसि स्म नेष्टवानसि विषयाणां शब्दादीनां नेशिषे स्म विषयान्न जितवानसि ईशस इतीट् अधी गर्थेति कर्म्मषष्ठी सर्वत्रापरोक्षे चेति लट् ॥ १५ ॥ ज०म०

त्वमित्यादि । हे राजन् ! त्वमिदं यथोक्तं अजानन् अहमेव शूर इति स्वविक्रमं ईडिषे स्म स्तुतवान् ईडलङ्स्तुतौ सध्वोरस्येमिति इम् स्वपराक्रमाहङ्कारात् सीतां रामाय दातुमर्पयितुं नेच्छसि स्म इषुगमयमां छः स्यादानेत्यादिना इच्छादेशः विषयाणाञ्च न ईशिषे स्म न अर्थेष्टं विनियुङ्क्षे स्म सध्वोरस्येतीम् कर्म्मणि षष्ठी ॥ १५ ॥ भ०

मन्त्र इत्यादि । मन्त्रविषये अपण्डिताः मूर्खाः सन्तः जातु कदाचिदपि वदन्ति गर्हितमेतत् तानपि त्वमनुमन्यसे अनुमतवान् इदमप्यतिगर्हितं गर्हायां लडपि जात्वोरिति अपिजात्वोरुपपदयोः कालसामान्ये लट् कथमेतत् न्याय्यं यत्तत्र भवान् रावणः विद्वानपि नात्मनो हितमवैति न विदितवान् विभाषाकथमिति लङ् चेति कथंशब्द उपपदे

अपृष्टोऽनुब्रवीति त्वां मन्त्रे मातामहो हितम् ।
न करोमीति पौलस्त्य ! तदा मोहात्त्वमुक्तवान् ॥ १७ ॥
त्वं स्म वेत्थ महाराज ! यत्स्माह न विभीषणः ।
पुरा त्यजसि यत् क्रुद्धो मां निराकृत्य संसदि ॥१८॥

चकारात् गर्हायां लट् तत्र भवानिति इतराभ्योऽपि दृश्यन्त इति भवदादियोगे प्रथमान्तात् तल्प्रत्ययः ॥ १६ ॥ ज० म०

मन्त्र इत्यादि । मन्त्रणाविषये अज्ञा मूर्खा जातु कदाचिद्वदन्ति वक्ष्यन्ति गर्हितमेतत् अनधिकारात् तानपि त्वं अनुमन्यसे अनुमतवानसि एतदपि गर्हितं जात्वपिभ्यां सदाक्षेप इति लौ अज्ञा अपि वदन्तु तत्र भवान् रावणो विद्वानपि आत्मनो हितं नावैति नालोचितवान् कथन्नाम कथमेतदन्याय्यं कथमालोच वेति लौ । १६ ॥ भ०

अपृष्ट इत्यादि । कस्मिन्‌श्चित् काले युज्यत इति मन्त्रे मातामहो माल्यवान् अपृष्टः सन् हितं नु ब्रवीति हे पौलस्त्य ! त्वं पुनर्हितमकार्षीरिति माल्यवता पृष्टं तदा तस्मिन् काले न करोमीति मोहादज्ञानादुक्तवान् अत्र नुशब्दे नशब्दे चोपपदे ननौपृष्टप्रतिवचन इति भूते धात्वर्थे नन्वोर्विभाषेति विभाषा लट् ॥ १७ ॥ ज० म०

अपृष्ट इत्यादि । त्वया मन्त्रविषये प्रश्ने अपृष्टोऽपि मातामहो माल्यवान् स्वयमुपेत्य त्वां हितं ब्रवीति उक्तवान् अभिधानाद्वर्त्तमानसामीप्ये लौ पितृस्वसेम् ब्रुव इति इम् हे पौलस्त्य ! रावण ! न करोमीति मोहादज्ञानात् त्वं उक्तवान् ॥ १७ ॥ भ०

त्वमित्यादि । हे महाराज ! विभीषणो यदाह स्म उक्तवान् तत्त्वं न वेत्थ स्म न विदितवानसि किमेतेन हितमुक्तं न वेति उभयत्रापरोक्षे चेति लट् तत्र पूर्वस्मिन् विदोलटो वेति सिपस्थादेशः अपरस्य ब्रुवः पञ्चानामिति तिपोणलादेशः यद्यस्मात्त्वं क्रुद्धः सन् मां संसदि सभायां निराकृत्य पादप्रहारेण पुरा पूर्वं त्यजसि तत्यक्तवानसि पुरि लुङ् चास्म इति चकाराल्लट् ॥ १८ ॥ ज० म०

हविर्जक्षिति निःशङ्को मखेषु मघवानसौ ।
प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः ॥ १९ ॥
धनानामीशते यक्षा यमो दाम्यति राक्षसान् ।
तनोति वरुणः पाशमिन्दुनोदीयतेऽधुना ॥ २० ॥

त्वमित्यादि । हे महाराज ! विभीषणो यदाह स्म उक्तवान् पथ्यं तिष्यन्नवाकयेति अवक्षिपस्थाने पक्षे आह्वादेशश्च तत्त्वं न वेत्थ न ज्ञातवान् श्रुतवानित्यर्थः वेत्तेः कौपं ठौपं वेति विपरस्य यद्यस्मात् क्रुद्धः सन् त्वं सदसि सभायां मां पादप्रहारेण निराकृतः पुरा पूर्वं तर्जसि तर्जितवान् यावत्पुराभ्यां भव्य इत्यत्र चकाराध्याहारात् कौस्कनातीत इत्यस्मात् अतीत इत्यनुवर्त्तत इति बोध्यं तेनात्र पुरायोगे भूते की ॥ १८ ॥ भ०

हविरित्यादि । असौ मघवान् इन्द्रः मखेषु यज्ञेषु हविराज्यादिकमधुना जक्षिति भक्षयति रुदादिभ्य इतीट् वायुश्च स्वेच्छया प्रवाति गच्छति पवतीति पाठान्तरं पवित्रीकरोतीत्यर्थः भास्करश्च यथेष्टमुद्गच्छति उदेति ॥ १९ ॥ ज० म०

हविरित्यादि । असौ मघवानिन्द्रो निर्भयः सन् मखेषु यज्ञेषु हविर्हवनीयं घृतादिकं जक्षिति भक्षयति रुदादित्वादिम् वायुः स्वेच्छया वाति गच्छति भास्करः स्वेच्छया उद्गच्छति न वेद तं न यस्मात्त्वि स्वते त्वयि विपर्य्यः इति चतुर्थश्लोकेनान्वयः त्वयि सति एवं नासीदिति भावः ॥ १९ ॥ भ०

धनानामित्यादि । यक्षेन्द्रो धनानामीष्टे स्वयमेव धनस्वामी भवति ईश ऐश्वर्ये यमोऽपि राक्षसान् दाम्यति वशीकरोति वरुणः पाशन्तनोति विस्तारयति इन्दुनोदीयतेऽधुना भावे लट् अधुनेति. सर्वत्र योज्यं अणुनेति पाठान्तरं असंपूर्णत्वात् ॥ २० ॥ ज० म०

धनानामित्यादि । यक्षा धनानामीशते पालयन्ति ईश लङ ऐ-

शाम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः ।
नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः ॥ २१ ॥
श्रीर्न हृष्यति लङ्कायां विरज्यन्ति संहृतयः ।
न वेद तन्न यस्यास्ति ऋते त्वयि विपर्य्ययः ॥ २२ ॥

अर्थे भान्तोऽदन्तः यमो राक्षसान् दाम्यति वशीकरोतीति शमादित्वा-द्दीर्घः वरुणः पाशं तनोति विस्तारयति अधुना इदानीं शशिना उद्दी-यते भावे की अधुनेति सर्वत्र योज्यं पूर्वमेवं नासीदिति भावः ॥२०॥ भ०

शाम्यतीत्यादि । ऋतूनां समाहारः सम्भूयावस्थानं शाम्यति अपैति वनौकसो वनवासिनो मुनयः तपस्यन्ति तपश्चरन्ति कर्मणो रोमन्थे-त्यादिना क्यङ् तपसः परस्मैपदञ्च ते त्वद्बन्धूनमरा नो नमस्यन्ति न प्रण-मन्ति न वरिवस्यन्ति नाप्रतिषेधेन परिचरन्ति नमोवरिवश्चित्रङःक्यच् । अयास्यं हे नृभुजां पते ! ज्योतींषि नक्षत्राणि ययास्यं यथा प्रधान-माक्रमन्ते अधुना इदानीमैरावतो वज्रञ्च न पराजीयते तयोश्च वीर्य्यं वर्द्धते स्म ॥ २१ ॥ ज० म०

शाम्यतीत्यादि । ऋतूनां वसन्तादीनां समाहारः सम्भूयावस्थानं शाम्यति वनौकसो मुनयस्तपस्यन्ति तपः कुर्वन्ति नमस्तपोवरिव इति क्यः अमरास्तव बन्धून् नो नमस्यन्ति न प्रणमन्ति पूर्ववत् क्यः नच वरिवस्यन्ति न परिचरन्ति तव बन्धूनां परिचर्य्यां न कुर्व्वन्तीत्यर्थः पूर्ववत् क्यः ॥ २१ ॥ भ०

श्रीरित्यादि । लङ्कायां पुर्य्यां अधुना श्रीर्न कुप्यति कुप रोषे कुपिरञ्जोः प्राचांश्यन् परस्मैपदञ्च संहृतयश्च विरज्यन्ति अपयान्ति सर्वथा तदहन्तु न वेद न वेद्मि विदो लटो वेति मिपोणल् यस्य त्वयि ऋते न विपर्य्ययः नान्यथाभावः ॥ २२ ॥ ज० म०

श्रीरित्यादि । लङ्कायां श्रीर्न हृष्यति न हृष्टा भवति संहृतयो भूयो विरज्यन्ति विरक्ता भवन्ति रञ्ज्यरञ्जनमौऽनुरागे दिवादित्वात् श्यनु अपिद्रस्य ङित्वात् हृष्यञ्जोमेऽणौ त्वयि ऋते सति यस्य विपर्य्ययो

शचीं संस्वजते शक्रो गोपायति हरिः श्रियम् ।
देववन्द्यः प्रमोदन्ते चिचीयन्ते घनोदयाः ॥ २३ ॥
बिभ्रत्यस्त्राणि सामर्षा रणकाम्यन्ति चामराः ।
चकासति च मांसादास्तथा रन्ध्रेषु जाग्रति । २४ ॥

नास्ति यस्त्वत्कृतां मर्य्यादां न लङ्घते तमहं न वेद्मि वेत्तेः कीपर्सिति मिपोलुप् ॥ २२ ॥ भ०

शक्तिमित्यादि । शक्रः शक्तिं प्रहरणमधुना संस्वजते श्लिष्यति दनुशपनुजस्वनुजां शचीत्यनुनासिकलोपः हरिर्विष्णुः श्रियं गोपायति आत्मन्येव कृत्वा रक्षति देववन्द्यः प्रमोदन्ते हृष्यन्ति घनोदयाश्चिचीयन्ते नानारूपेणाद्भुतायन्ते स्तुते त्वयीति सर्वत्र योज्यम् ॥ २३ ॥ ज० म०

अन्यमपि विपर्य्ययमाह

शचीमित्यादि । शक्रः शचीं संस्वजते सम्यगालिङ्गते चिरं तदंकरणात् त्वद्वधहर्षाच्च स्वनुजौ श्लिषालिङ्गे पनुजदनुशस्वनुजोऽपि नलोपः हरिर्विष्णुः श्रियं लक्ष्मीं गोपायति रक्षति एतावन्तं कालं त्वद्गृहे सम्पद्रूपासीदिति भावः कमक्षतो गुपू इति आयः देवानां वन्द्यो हठस्त्रियः प्रमोदन्ते प्रहृष्यन्ति घनोदया मेघाश्चिचीयन्ते नानाविधा भवन्ति चित्रङाश्चर्य्ये कण्ड्वादि ॥ २३ ॥ भ०

बिभ्रतीत्यादि । अमराः सामर्षाः सकोपाः अस्त्राणि बिभ्रति धारयन्ति रणकाम्यन्ति च आत्मनो रणमिच्छन्ति आत्मेच्छायां काम्यच् चकासति चादीप्यन्ते च जक्षित्यादित्वादभ्यस्तसंज्ञायां झेरदादेशः तथा मांसादां राक्षसानां अदोऽनन्ने इति विट् रन्ध्रेषु व्यसनेषु जाग्रति सावधाना भवन्ति वा ॥ २४ ॥ ज० म०

बिभ्रतीत्यादि । अमराः सामर्षाः सकोपाः सन्तः अस्त्राणि बिभ्रति धारयन्ति विटुडुभृञ्भर्तिपुष्ट्योः ह्लादीरेद्विः पृभ्रादेङिः स्वेरे आत्मनो रणमिच्छन्ति च ते: काम्यक् स्वेच्छायां चकासति दीप्यन्ते च चकास्दृल् दीप्तौ अन्तोऽद्वेः तथा मांसादां राक्षसानां रन्ध्रेषु जाग्रति सावधाना भवन्ति जागृत्च लु जागरे ॥ २४ ॥ भ०

चञ्चूर्य्यन्तेऽभितो लङ्कामस्मांश्चाप्यतिशेरते ।
भूमयन्ति स्वसामर्थ्यं कीर्त्तिं नः कनयन्ति च ॥२५ ॥
दिशो व्यश्नुवते दृप्तास्त्वत्कृतां जहति स्थितिम् ।

चञ्चूर्य्यन्त इत्यादि । लङ्कामभितः वाह्यतोऽभ्यन्तरतश्च पर्य्यभिभ्यां सर्व्वोभयार्थे तसिः चञ्चूर्य्यन्ते गर्हितं चरन्ति लुपसदेति भावगर्हायां यङ् चरफलोश्चेत्यभ्यासस्य नुक् उत्परस्यात इत्युत्वं अतिशेरते च अतिशयिता भवन्ति च स्वसामर्थ्यं भूमयन्ति बहूयन्ति बहूनां भाव इति पृथ्वादिभ्य इमनिच् बहोर्लोपो भू च बहोरिति बहोर्भूयादेशः इमनिष्ठादिलोमस्य भूमानं कुर्व्वतीति णिचि णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावात् टिलोपयणादिपरलोपः णिण्मतोर्लुगर्थमिति वचनाद्वा टिलोपः किञ्च नोऽस्माकं कीर्त्तिं कनयन्ति अल्पां कुर्व्वन्ति अमरा इति योज्यं अल्पां कुर्व्वन्तीति णिचि णाविष्ठवद्भावाद्युवाल्पयोः कनन्यतरस्यामिति कनादेशः ॥ २५ ॥ ज० म०

चञ्चूर्य्यन्त इत्यादि । अमरा इत्यनुषज्यते लङ्कां अभितः उभयतो वाह्यतोऽभ्यन्तरतश्च चञ्चूर्य्यन्ते गर्हितं चरन्ति परिभ्रमन्तीत्यर्थः गत्यर्थात्कुटिलेपसदचरेति यङ् चरफलोरुत्वोऽङ् इति खेर्नुण् उङ उकारस्य लङ्कामिति धिक्समयेति द्वी तया अस्मानपि अतिशेरते अतिक्रामन्ति शिङ्गेरेणुः मान्तोरम् मान्तोदनतः स्वसामर्थ्यं स्वशक्तिं भूमयन्ति बहूयन्ति बहोर्भावे भूमादेशः भूयो भूमनुभूयिष्ठा इति निपातनात् बहुशब्दस्य इमनप्रत्ययान्तस्य रूपं तं करोतीति लेः तत्काख्यानेञ्जिः औमन्वेति डित टेर्लोपः भावयन्तीति क्वचित्पाठः तदा बहुशब्दस्य औ भ्वादेशः स्यादिति परः स्वमतेः भूधातोर्ज्ञन्तस्य रूपं एतावन्तं कालमनवस्थितत्वादुज्ज्वलयन्तीत्यर्थः भूययन्तीति क्वचित्पाठः तदा बहुशब्दस्य औ भूयादेशो वेति परः स्वमते बहुशब्दस्य ईयसौभूय इति रूपं तस्मात् ञिः बहुतरं कुर्व्वन्तीत्यर्थः तथा नोऽस्माकं कीर्त्तिं कनयन्ति अल्पयन्ति अल्पशब्दात् पूर्ववत् ञिः युवाल्पौकनुवेति कनादेशः ॥ २५ ॥ भ०

दिश इत्यादि । दृप्ताः सन्तः दिशो व्यश्नुवते व्याप्नुवन्ति स्थितिं व्यवस्थां

चोदयन्ति च नः क्षुद्राः हसन्तस्त्वां विपन्नतम् ॥२६॥
श्रमं श्रमं नभस्वन्तः पुनन्ति परितो जगत्।
उज्जिहीषे महाराज! त्वं प्रशान्तो न किं पुनः ॥२७॥
प्रोर्णोति शोकश्चित्तं मे सत्त्वं संशाम्यतीव मे।
प्रमार्ष्टि दुःखमालोकं मुञ्चाम्यूर्ज्जं त्वया विना ॥२८॥

त्वदन्ततां प्रत्ययोत्तरपदयोश्चेति त्वदादेशः जहति त्यजन्ति विपन्नतञ्च त्वां हसन्ति क्षुद्राः अल्पकायाः चोदयन्तीव क्षुद्रमिवाचक्षत इति भुवने यो हि न्यक्कृतत्रिलोकः स कथं क्षुद्र उच्यते स्थूलदूरेत्यादिना यौयणादि-परलोपः पूर्वस्य च गुणः ॥ २६ ॥ ज० म०

दिश इत्यादि। अत्राप्यमरा इत्यनुषज्यते दृप्ताः सन्तो दिशो व्यश्नुवते व्याप्नुवन्ति अशूङ् व्याप्तिसंहत्योः श्नुध्वोरित्युव मान्तोऽदन्तः त्वया कृतां स्थितिं व्यवस्थां जहति त्यजन्ति ओहाक् त्यागे श्नाभ्यस्तयोरातोऽलोपः अन्तोऽदृष्टेः चुद्रा अल्पा अपि विपन्नतं त्वां हसन्तो नोऽस्मान् चुद्रान् कुर्वन्त्याचक्षते वा क्षुद्रशब्दात् पूर्ववत् णिः याढान्तिकेत्यादिना चोदादेशः दृप्ता दुष्टलोकाः चुद्राः क्षुद्रलोका इत्यन्ये ॥ २६ ॥ भ०

श्रममित्यादि। नभस्वन्तो वायवः श्रमं श्रमं श्रान्त्वा श्रान्त्वा आभीक्ष्ण्ये णमुल् नोदात्तेति वृद्धिप्रतिषेधः आभीक्ष्ण्ये द्वे भवतः परितः सर्वतो जगत् पुनन्ति पवित्रयन्ति प्रशान्ता अपि पुनर्भूत्वा जगत् पुनन्ति हे महाराज! त्वं पुनः प्रशान्तोऽपि किन्नोज्जिहीषे नोत्तिष्ठसि ओहाङ्गता-वित्यस्याभ्यस्य भृञामित् पुमास्थादिन ईत्वम् ॥ २७ ॥ ज० म०

श्रममित्यादि। नभस्वन्तो वायवः श्रमं श्रमं श्रान्त्वा श्रान्त्वा परितो सर्वतो जगत् पुनन्ति पवित्रयन्ति पूञ् गिच चकारात् शोधे त्वादेः स्तोने इति ह्रस्वः चणम्वाभीक्ष्ण्ये इति श्रमेर्णमुल् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं हे महाराज! त्वं पुनः प्रशान्तः सन् किं न उज्जिहीषे न उद्गच्छसि ओहाङ् गतौ श्नाभ्यस्तयोरातोऽलोप इति ईः ॥ २७ ॥ भ०

प्रोर्णोतीत्यादि। हे महाराज! त्वया विना शोको मम चित्तं प्रोर्णोति आच्छादयति सत्त्वं अवष्टम्भः संशाम्यतीव अपगच्छतीव मां

केन संविद्रते नान्यस्त्वत्तो बान्धववत्सलः ।
विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवम् ॥ २९ ॥
रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वया ।
प्रमाणं नोपकाराणामवगच्छामि यस्य ते ॥ ३० ॥

त्यजतीत्यर्थः दुःखञ्च कष्टं आलोकं प्रज्ञानं प्रमार्ष्टि अपनयति अतस्त्वयां विना ऊर्जं बलं मुञ्चामि अलसो भवामीत्यर्थः ॥ २८ ॥ ज० म०

प्रोर्णौतीत्यादि । हे महाराज ! शोको मे मम चित्तं प्रोर्णौति वोर्णोः पिद्वत्त्वेगुरिति पक्षे गुः प्रोर्णौतीति पाठे गुणाभावपक्षेऽपिद्वत्त्वात् इति व्रिः सत्वं शाम्यतीव शान्तमिव दुःखं कष्टं आलोकमालोचनं प्रमार्ष्टि निवोधयति मृजोऽकङिति व्रिः ऊर्जं ऊर्जस्वलत्वं मुञ्चामि मुच्लृशपश्नौमोचे नुम् न त्वया विनेति सर्वत्र योज्यम् ॥ २८ ॥ भ०

के नेत्यादि । त्वत्तोऽन्यो बान्धववत्सलो नेति के न सम्विद्रते न जानते समोगमिति तङ् वेत्तेर्विभाषेति लुट् बन्धुरेव बान्धवः प्रज्ञादित्वादण् अतोऽहं शून्ये बन्धुविरहिते विरौमि फुत्करोमि कथं केन प्रकारेण मन्युसमुद्भवं शोकोत्पादं प्रोर्णौमि आच्छादयामि ॥ २९ ॥ ज० म०

के नेत्यादि । त्वत्तोऽन्यो बान्धवेषु वत्सलः स्नेहवान् नास्ति इति के जना न जानन्ति समोगमृच्छेत्यादिना वेत्तेर्न मान्तोरम् विदस्तु वेति माणिको रम् अहं शून्ये बन्धुरहितप्रदेशे विरौमि शब्दं करोमि रुशब्दनौ रपिद्वत्त्वात इति व्रिः कथं केन प्रकारेण मन्युसमुद्भवं शोकोन्मादं प्रोर्णौमि आच्छादयामि वोर्णोःपिदित्यस्याप्रवृत्तिपक्षे पूर्ववद्व्रिः ॥ २९ ॥ भ०

रोदिमीत्यादि । त्वया बन्धुना रहितत्वादनाथोऽस्मीति आत्मानमेव रोदिमि न त्वां कृतकार्य्यं यस्य ते उपकाराणां प्रमाणमियत्तां नावगच्छामि ॥ ३० ॥ ज० म०

रोदिमीत्यादि । बन्धुना त्वया रहितोऽहं अतएव नाथहीनमात्मानं रोदिमि त्वामुपसृत्य सशब्दक्रन्दनेन युक्तं करोमि रुद्भ्रोऽश्य् इति इम् यस्य ते तव उपकाराणां प्रमाणं संख्यां नावगच्छामि न जानामि

नेदानीं शक्रयक्षेन्द्रौ विभीतो न दरिद्रितः ।
न गर्वं जहितो दृप्तौ न क्लिश्नीतो दशानन ! ॥ ३१ ॥
त्वयापि नाम रहिताः कार्य्याणि तनुमो वयम् ।
कुर्म्मश्च जीविते बुद्धिं धिक् तृष्णां क्षतनाशिनीम् ॥ ३२॥
दृणीह्नि देहमात्मीयं त्वं वाचं न ददासि चेत् ।

अपरिमितत्वात् संख्यां कर्त्तुं न शक्नोमीत्यर्थः ॥ ३० ॥ भ०

नेदानीमित्यादि । इदानीं त्वय्येवंभूते शक्रयक्षेन्द्रौ न विभीतः न भयं कुरुतः भियोऽन्यतरस्यामिति इत्वभावपक्षे रूपं न दरिद्रितः दरिद्रो न भवतः इद्दरिद्रस्येति हलादौ क्ङिति सार्वधातुक इत् दृप्तौ न गर्वं जहितः परित्यजतः जहातेश्चेतीत्वं न क्लिश्नीतः क्लेशं नानुभवतः ई हल्यघोरितीत्वम् ॥ ३१ ॥ ज० म०

नेदानीमित्यादि । हे दशानन ! इदानीं त्वयि हते इन्द्रकुबेरौ न भयं कुरुतः ञिभीति भीत्यां न दरिद्रितः न दीनतां गच्छतः दरिद्राच्छ दुर्गत्यां दरिद्रोङ्किईत्सेणामिति ङिः दृप्तौ सन्तौ नाहङ्कारं परित्यजतः ओहाक् त्यागे पूर्ववत् पक्षे ङिः न क्लेशमनुभवतः क्लिन्मूगविबाधे श्नाद्योरिति ईः ॥ ३१ ॥ भ०

त्वयेत्यादि । यद्वयं त्वया विना कार्य्याणि राज्याङ्गानि तनुमः प्रसारयिष्यामः जीविते च बुद्धिं कुर्म्मः तदिमां कार्य्ये जीविते च तृष्णां क्षतनाशिनीं धिक् गर्हायां लडपि जात्वोरिति भविष्यति लट् ॥ ३२ ॥ ज० म०

त्वयापीत्यादि । त्वयापि रहितास्त्यक्ता वय कार्य्याणि तनुमः विस्तारयामः तनदुञ विस्तृतौ नूपोऽस्यस्येतग्रस्याप्रवृत्तिपक्षे रूपं नाम प्रकाशे तथा जीविते बुद्धिमाधां कुर्मः कुरुवलोपोम्वग्रे इति सुपोलोपः व्यं नचतयीतग्रादौ कुर्व्वर्जमात्र दीर्घः तस्मात् क्षतनाशिनीं क्षतघ्नीं तृष्णां धिगस्तु ॥ ३२ ॥ भ०

दृणीह्नीतग्रादि । मम प्रतिवचनं न ददासि चेत् यदि त्वं तर्हि

द्रावयन्ति हि मे शोकं स्मर्य्यमाणा गुणास्तव ॥ ३३ ॥
उन्मुच्य स्रजमात्मीयां मां स्रजयति को हसन् ।
नेदयत्यासनं को मे को हि मे वदति प्रियम् ॥ ३४ ॥
न गच्छामि पुरा लङ्कामायुर्यावद्दधाम्यहम् ।
कदा भवति मे प्रीतिस्त्वां पश्यामि न चेदहम् ॥३५॥

आत्मीयं देहं त्वय्येहि हन्मि त्वच्छदम् हि यस्मात् स्मर्य्यमाणास्तव गुणाः मम शोकं द्राघयन्ति दीर्घं कुर्वन्ति णाविष्ठवद्भावेन प्रियस्थिरेत्या-दिना दीर्घशब्दस्य द्राघादेशः ॥ ३३ ॥ ज० म०

त्वच्छन्नीत्यादि । चेद्यदि त्वं वाचं न ददासि तदात्मीयं देहं त्वय्येहि छिनद्मि त्वच्छत्वनुभूशहिंसे त्वच्छदनु पिङ्क्ते हि यस्मात् तव गुणाः स्मर्य्यमाणाः सन्तः नोऽस्माकं शोकान् द्राघयन्ति दीर्घान् कुर्वन्ति दीर्घशब्दात् णेः तत्याख्याने इति णिः वाढान्तिकेति द्राघादेशः ॥ ३३ ॥ भ०

उन्मुच्येत्यादि । आत्मीयां स्रजं मालामुन्मुच्यापनीय देहात् हसन् परितोषात् को मां स्रजयति स्रग्विणं करोति णाविष्ठवद्भावात् विन्मतो-र्लुगिति विनोर्लुक् प्रकृत्यैकाजिति टिलोपाभावः को वा ममासनं नेदयति अन्तिकं करोति अत्रापि णौ इष्ठवद्भावादन्तिकबाढयोर्नेदसाधाविति अन्तिकशब्दस्य नेदादेशः कर्हि कदा को मे प्रियं वदति वदिष्यति विभाषाकदाकर्ह्योरिति भविष्यति लट् ॥ ३४ ॥ ज० म०

उन्मुच्येत्यादि । आत्मीयां मालां उन्मुच्य अपनीय परितोषात् हसन् को मां स्रजयति स्रग्विणं करोति पूर्ववन्णिः लुङ्मद्विनामिति विन्लुक् को वा मे मम आसनं नेदयति अन्तिकं करोति पूर्ववन्णिः नेदादेशश्च कर्हि कदा को वा मह्यं प्रियं वदति वदिष्यति त्वया विनेति शेषः कदाकर्ह्योर्वेति भव्ये की ॥ ३४ ॥ भ०

न गच्छामीत्यादि । यावदहमायुर्दधामि धारयिष्यामि यावत्पु-रानिपातयोर्लडिति भविष्यति लट् पुराशब्दोऽत्र भविष्यदासत्तिमाह

ऊर्द्धं म्रिये मुहूर्त्ताद्धि विह्वलः क्षतबान्धवः ।
मन्त्रे स्म हितमाख्यामि न करोमि तवाप्रियम् ॥ ३६ ॥
अन्तःपुराणि पौलस्त्यं पौराश्च भृशदुःखिताः ।
संश्रुत्य स्माभिधावन्ति हतं रामेण संयुगे ॥ ३७ ॥

प्रीतेर्हि लङ्काप्रवेशः इति दर्शयन्नाह चेद्यद्यहं त्वां जीवन्तं न पश्यामि वर्त्तमाने लट् कदा कस्मिन् काले मे मम प्रीतिर्भवति भविष्यति विभाषाकदाकर्ह्योरिति भविष्यति लट् ॥ ३५ ॥ ज० म०

न गच्छामीत्यादि । यावदहमायुर्दधामि धारयिष्यामि तावत् पुरा लङ्कां न गच्छामि यावत्पुराभ्यां भव्य इति कौ पुराशब्दो भविष्यदासत्तिमाह लङ्काप्रवेशस्य कारणं प्रीतिस्तत्रोच्यते कदा मम प्रीतिर्भवति कदा कर्हिस्यां वेति चेद्यदि त्वां जीवन्तं न पश्यामि ॥ ३५ ॥ म०

ऊर्द्धमित्यादि । मुहूर्त्तादूर्द्धं उपरि अहं म्रिये मरिष्यामि क्षतबान्धवत्वात् विह्वलः सन् अनेन मरणस्य निमित्तभूतं प्राप्तकालं लोडर्थं दर्शयति तेन लिङ्चोर्द्धमौहूर्त्तिक इति लोडर्थलक्षणे भविष्यति लट् लोडर्थश्च प्रैषादिकः म्रियतेर्लुङ्लिङोश्चेति चकारात् शितश्चात्मनेपदं अन्यच्च मन्त्रे मन्त्रविषये हितमाख्यामि स्म आख्यातवानहं अपरोक्षे चेति लट् ममाप्रियं मा कार्षीरिति पृष्टः सन्नहं न करोमि तवाप्रियमिति न कृतवान् स्म नन्वोर्विभाषेति पृष्ट प्रतिवचने लट् ॥ ३६ ॥ ज०म०

ऊर्द्धमित्यादि । क्षतबान्धवत्वाद्विह्वलो व्याकुलोऽहं मुहूर्त्तादूर्द्धं म्रिये मरिष्यामि प्राप्तकालोऽहमित्यर्थः। अभिधानाद्वर्त्तमानप्राये कौ स्वडष्टीश्चेमं मन्त्रविषये हितमाख्यामि स्म उक्तवान् ख्यालख्यातौ कथने तवाप्रियं न करोमि स्म न कृतवान् स्मेत्यनुपज्यते किमनेनातीत इति करणाख्याभ्यां भूते कौति परः ॥ ३६ ॥ म०

अन्तःपुराणीत्यादि । अनन्तरं पौलस्त्यं रामेण हतं संश्रुत्य अन्तःपुराणि पौराश्च दुःखिताः अभिधावन्ति स्म ढौकन्ते स्म लट् स्म इति भूतानद्यतनपरोक्षे लट् ॥ ३७ ॥ ज० म०

मूर्द्धजान् स्म विलुञ्चन्ति क्रोशन्ति स्मातिविह्वलाः ।
स्माधीयन्त्युपकाराणां मुहुर्भर्त्तुः प्रमन्यवः ॥ ३८ ॥
रावणस्य नमन्ति स्म पौराः सास्रा रुदन्ति च ।
भाषते स्म ततो रामो वचः पौलस्त्यमाकुलम् ॥ ३९ ॥
दातुः स्नातुर्द्विषां मूर्द्ध्नि यष्टुस्तर्पयितुः पितॄन् ।
युद्धाभग्नाविपन्नस्य किं दशास्यस्य शोचसि ॥ ४० ॥

अन्तःपुराणीत्यादि । अथ अन्तःपुराणि पौराश्च संयुगे युद्धे रामेण हतं पौलस्त्यं रावणं संश्रुत्य श्रुत्वा अत्यर्थं दुःखिताः सन्तः अभिधावन्ति स्म वेगेनाभिमुख्यं गच्छन्ति स्म ॥ ३७ ॥ भ०

मूर्द्धजानित्यादि । केशान्विलुञ्चन्ति स्म अपनयन्ति स्म अतिविह्वलं अविवेकत्वं गुणप्रधानोनिर्द्देशः क्रोशन्ति स्म फुत्कारं कुर्व्वन्ति स्म अन्तःपुराणीत्यर्थः। भर्त्तुश्चोपकाराणां मुहुरधीयन्ति स्म इकस्मरणे अधीगर्थेति कर्मणि षष्ठी प्रमन्यु चेति क्रियाविशेषणं प्रकृष्टशोकमित्यर्थः। प्रमन्यव इति पाठान्तरं प्रकृष्टशोका इत्यर्थः ॥ ३८ ॥ ज० म०

मूर्द्धजानित्यादि । अन्तःपुराणि पौराश्चेत्यनुषज्यते मूर्द्धजान् केशान् विलुञ्चन्ति स्म अपनयन्ति स्म लुञ्चापनयने अतिव्याकुलाः सन्तः क्रोशन्ति स्म रोदनं कुर्वन्ति स्म क्रुशजौरोदेकृतौ भर्त्तुरुपकाराणां मुहुर्व्वारंवारं ध्यायन्ति स्म कर्मणि षष्ठी पादावित्यध्याहरन्त्यन्ये ॥ ३८॥ भ०

रावणस्येत्यादि । पौराश्च रावणस्य नमन्ति स्म नमस्यन्ति पादाविल्यर्थात् तत्सम्बन्धित्वात्सास्रञ्च सन्तः रुदन्ति च स्म ततोऽनन्तरं रामः पौलस्त्यं विभीषणं आकुलं वचो भाषते स्म उक्तवान् ॥ ३९ ॥ ज०म०

रावणस्येत्यादि । पौरा रावणस्य नमन्ति स्म नमस्यन्ति स्म कर्म्मणि षष्ठी पादावित्यध्याहरन्त्यन्ये । ततः सास्राः सन्तो रुदन्ति स्म शब्दितवन्तः कलध्वनौ ततोऽनन्तरं रामः आकुलं पौलस्त्यं विभीषणं वचो वक्ष्यमाणं भाषते स्म उक्तवान् ॥ ३९ ॥ भ०

दातुरित्यादि । दशास्यो दाता द्विषां मूर्द्ध्नि स्नाता यष्टा यज्ञानां

वोभवीति न सम्मोहो व्यसने स्म भवादृशाम्।
किं न पश्यसि सर्व्वोऽयं जनस्त्वामवलम्बते ॥ ४१॥
त्वमर्हसि भ्रातुरनन्तराणि
कर्त्तुं जनस्यास्य च शोकभङ्गम्।

पितॄन् तर्पयिता तृप तृप्तौ चुरादिः युधि देवादीनां संग्रामेऽभग्नः अवि-पन्नः तस्यैवं विधस्य किं शोचसि शोच्यमेव नास्ति वर्त्तमाने लट् ॥ ४० ॥ ज० म०

दातुरित्यादि। हे विभीषण! दशास्यस्य किं शोचसि अस्य शो-च्यमेव नास्तीत्यर्थः। कीदृशस्य दातुर्धनादीनां द्विषां शत्रूणां मूर्ध्नि स्थातुः यष्टुर्यज्ञानां पितॄन् तर्पयितुस्तर्पणशीलस्य युधि देवानां संग्रामे अभग्ना-विपन्नस्य अपलायनस्यतस्य ॥ ४० ॥ भ०

वोभवीतीत्यादि। भवादृशां युष्मद्विधानां व्यसनेषु दुःखेषु सम्मोहः अज्ञानं न वोभवीति अत्यर्थं न भवति यङ्लुकि रूपं एवञ्च सति स्वार्थो न हीयते यतः किं न पश्यसि अयं सर्व्वो जनः त्वामवलम्बते त्वमेव स्वामीति प्रतीचते ॥ ४१ ॥ ज० म०

वोभवीतीत्यादि। भवादृशां भवद्विधानां ज्ञानिनां कृच्छ्रेषु व्यसने-ष्वपि सम्मोहोऽज्ञानं न वोभवीति नात्यर्थं भवति यङो लुकि भिदुस्त-स्थेमिति इम् अयं सर्व्वो जनो रावणानुगतस्त्वां अवलम्बते आश्रयति एतत् किं न पश्यसि ॥ ४१ ॥ भ०

त्वमर्हसीत्यादि। तस्मात् भ्रातुरनन्तराण्यग्निसात्कारादीनि कर्त्तुं त्वमर्हसि युज्यसे अस्य च जनस्य शोकभङ्गं शोकापनयनं कर्त्तुञ्च अन्यथा त्वयि धुर्य्यं धुरं वहति विपन्ने विनष्टे सति हे क्षणदाचरेन्द्र! राज्य-भारो अनूढो अन्यैरनधिष्ठितः सन् मज्जति अधोयाति शत्रुभिर्विनश्यति तस्मात् त्वया समाहितेन राज्यभारो वोढव्य इति ॥ ४२ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लड्विलसितो नाम पञ्चमः परिच्छेदः।

काव्यस्य विभीषणप्रलापो नाम अष्टादशः सर्गः।

धुर्य्ये विपन्ने त्वयि राज्यभारो
मज्जत्यनूढः क्षणदाचरेन्द्र!॥ ४२॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो
नामाष्टादशः सर्गः।

त्वमर्हसीत्यादि। तथा त्वं भ्रातुरनन्तराणि अग्निकार्य्यादीनि कर्त्तुमस्य त्वामाश्रयतः सर्व्वस्य जनस्य शोकभङ्गं शोकापनयनञ्च कर्त्तुं त्वं अर्हसि अन्यथा हे क्षणदाचरेन्द्र! त्वयि धुर्य्ये धुर्व्वहे विपन्ने नष्टे सति अयं राज्यभारोऽनूढोऽधृतः सन् मज्जति अधोगच्छति॥ ४२॥ म०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरत-
सेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणविलापो
नामाष्टादशः सर्गः।

---

# ऊनविंशः सर्गः ।



उपमन्युस्ततो वाक्यं पौलस्त्यो राममुक्तवान् ।
अशोच्योऽपि व्रजन्नस्तं सनाभिर्दुनुयान्न किम् ॥ १ ॥
तन्नोदेवाविधेयासुर्य्येन रावणवद्वयम् ।
सपत्नांश्चाधिजीयास्म संग्रामे च म्रीमहि ॥ २ ॥

इतः प्रभृति लिङमधिकृत्य विवक्षितमाह तत्र विध्यादिषु लिङ् ततोऽन्यत्रापि दर्शयिष्यति

उपमन्युरित्यादि । ततोऽनन्तरं पौलस्त्यो विभीषण उपगतशोक उपगतो मन्युर्यस्य प्रादिभ्यो धातुजस्य बहुव्रीहिर्वा चोत्तरपदे लोपश्च रामं वाक्यमुक्तवान् देव किमेवमभिधत्से अशोच्य इति यतः सनाभिः सगोत्रोऽस्तं व्रजन् विनाशं गच्छन्नशोच्योऽपि सन् किं न दुनुयात् नियोगेन अवश्यतया किं नोपतापयेत् निमन्त्रणे नियोगकरणे लिङ् ॥ १ ॥ ज० म०

अथ श्लोकावधिकृत्योच्यते तयोः परमते लिङिति संज्ञा

अपमन्युरित्यादि । ततोऽनन्तरं अपगतशोकः पौलस्त्यो विभीषणो रामं वाक्यमुक्तवान् किं तदित्याह अशोच्योऽपि सनाभिः सगोत्रः अस्तं विनाशं व्रजन् किं न दुनुयात् अपितु तापयत्येव ह्रोडुन अनुतापे विधिनिमन्त्रणेत्यादिना नियोगकरणे लो ॥ १ ॥ भ०

तन्न इत्यादि । युष्मद्वचनादात्मा मया स्थिरीकृतः किन्त्विदमाशंसे तदुपायं नोऽस्माकं देवाविधेयासुः चुमास्थेत्यनुवृत्तौ एलिङीतिप्रकारा-

क्रियेरन्न दशास्येन यथान्येनापि नः कुले ।
देवाद्र्यञ्चो नराहारा न्यञ्चश्च द्विषतां गणाः ॥ ३ ॥
स एव धारयेत्प्राणानीदृशे बन्धुविप्लवे ।
भवेदाश्वासको यस्य सुहृच्छक्तो भवादृशः ॥ ४ ॥
म्रियेयोद्धं मुहूर्त्तादि न स्यास्त्वं यदि मे गतिः ।

देश: येनोपायेन रावणवत् सपत्नान् वयमधिजीयास्म उपसर्गेण धात्वर्थो बलादन्यत्र नीयत इति सकर्मकता संग्रामे च क्षपीमहि लिङ्येति लिङः कित्त्वान्न गुणः आर्द्धधातुकत्वान्न सलोपः सर्वत्रैवाशिषि लिङ् ॥ २ ॥ ज० म०

तन्न इत्यादि । देवा नोऽस्माकं तद्विधेयासुः कुर्वन्तु आशिषि दामागैहागिति धाञोदासंज्ञत्वात् ङः येन रावणात् सपत्नान् वैरिणो वयं अधिजीयास्म मारयामः पूर्ववदाशिषि ढौ घोंऽज्वरे युद्धे क्षपीमहि प्राणान् त्यजामः अत्राप्याशिषि ढौ इगुङुर्न्ढीति कित्त्वाद्गुणाभावः एतेन युष्मद्वचनात् मया स्थिरीकृतोऽन्तरात्मा किन्तु युष्मत्प्रसादादेवमेव भवत्विति भावः ॥ २ ॥ भ०

क्रियेरन्नित्यादि । यथा दशास्येन नराहाराः राक्षसा देवद्र्यञ्चः देवैः सहाञ्चतो गच्छन्तः क्रियेरन् कृताः विष्वग्देवयोश्चेत्यादिना देवशब्दाकारस्याद्र्यादेशः द्विषताञ्च गणाः न्यञ्चः नीचैरञ्चन्तः कृताः तिरस्कृताः तथा नोऽस्माकं कुले अन्येनाधिक्रियेरन्नाशंसायां कर्मणि लिङ् क्षपीरन्निति वा पाठः आशिषि कर्मणि लिङ् ॥ ३ ॥ ज० म०

क्रियेरन्नित्यादि । यथा दशास्येन नराहारा राक्षसा देवद्र्यञ्चो देवानञ्चन्तोगच्छन्तः कृताः द्विषतां शत्रूणां गणाश्च न्यञ्चो निकृष्टमञ्चन्तो गच्छन्तः कृताः तिरस्कृता इत्यर्थः तथा नोऽस्माकं कुलेऽन्येनापि क्रियेरन् इत्यहमाशंसे विधिनिमन्त्रणेति आदिशब्दात् परक्रियाशंसायां खौ सम्भ्रमे वा कर्मणि यक् ऋद्भिः देवानञ्चतीति क्विप् भ्रिविष्वगदेवयोष्टेरिति टेरद्रिः ॥ ३ ॥ भ०

आशंसा न हि नः प्रेते जीवेम दशमूर्द्धनि ॥ ५ ॥
प्रकुर्य्याम वयं देशे गर्ह्यां तत्र कथं रतिम् ।
यत्र विंशतिहस्तस्य न सोदर्य्यस्य सम्भवः ॥ ६ ॥

स एवेत्यादि । ईदृशे बन्धुविप्लवे बन्धुविनाशेऽपि स एव प्राणान् धारयेत् नियोगतो विस्मयात् निमन्त्रणे नियोगकरणे लिङ् यस्य भवादृश. सुहृन्मित्रं शक्त आश्वासकः सान्त्वयिता भवेत् सम्भाव्येत सम्भावनायां लिङ् ॥ ४ ॥ ज० म०

स एवेत्यादि । ईदृशे बन्धूनां विप्लवे विनाशे स एव प्राणान् धारयेत् नियोगतः धारयेत् विधिनिमन्त्रणेति आदिशब्दात् नियोगकरणे स्त्री यस्य भवादृशः शक्तः समर्थः सुहृन्मित्रं आश्वासकः सान्त्वयिता भवेत् सम्भवति प्रोत्साहसम्भावन इति स्त्री ॥ ४ ॥ भ०

म्रियेयेत्यादि । यदि मे मम गतिः शरणं त्वं न स्याः न भवे लिङ् तदा यस्मिन्मुहूर्त्ते रावणोऽपि नष्टः तस्मान्मुहूर्त्तादूर्द्धं म्रियेय नियोगतः प्राप्तकालः प्राणांस्त्यक्तवानहं अत्र प्राप्तकाले गम्यमाने चार्द्ध-मौहूर्त्तिक इति भूते लिङ् तत्र हि प्रैषादयोऽनुवर्त्तन्ते म्रियतेर्लुङ्-लिङोश्चेति तङ् ततः सार्वधातुकत्वात् शः हि यस्मान्नोऽस्माकं नेयमाशंसा यद्दशमूर्द्धनि दशानने प्रेते मृते त्वयि त्राशरणे जीवेम प्राणान् धारयिष्याम इति आशंसावचनस्योपपदत्वात् लिङ् ॥ ५ ॥ ज० म०

म्रियेयोर्द्ध्वमित्यादि । यदि त्वं मे मम गतिस्तारको न स्याः न भवेः तदा यस्मिन् मुहूर्त्ते रावणो मृतस्तस्मान्मुहूर्त्तादूर्द्ध्वमहं म्रियेय प्राप्त-कालः सन् प्राणांस्त्यक्तवानहं विधिनिमन्त्रणेति स्त्री हि यस्मान्नोऽस्माक-मियमाशङ्का इष्टाशंसनं दशमूर्द्धनि रावणे प्रेते मृते सति वयं न जीवेम प्राणान्न धारयामेति गीचेच्छार्थैरिति कामोक्ते स्त्री ॥ ५ ॥ भ०

प्रकुर्य्यामित्यादि । यत्र देशे सोदर्य्यस्य भ्रातुर्विंशतिहस्तस्य न सम्भवोऽस्ति तत्र कथं वयं गर्ह्यां निन्द्यां रतिं प्रकुर्य्याम करिष्यामः नैवेत्यर्थः अत्र गर्हायामित्यधिकृत्य विभाषाकथमिति लिङ्चेति कथमित्युपपदे भविष्यति लिङ् ॥ ६ ॥ ज० म०

आमन्त्रयेत तान् प्रह्वान् मन्त्रिणोऽथ विभीषणः ।
गच्छेत त्वरितं लङ्कां राजवेश्म विशेत च ॥ ७ ॥
आददीध्वं महार्हाणि तत्र वासांसि सत्वराः ।
उद्धुनीयात सत्केतून् निर्हरेताग्र्यचन्दनम् ॥ ८ ॥
मुञ्चेताकाशधूपांश्च ग्रथ्नीयात स्रजः शुभाः ।

प्रकुर्य्यामित्यादि । यत्र देशे सौदर्य्यस्य सहोदरस्य विंशतिहस्तस्य रावणस्य सम्भवो नास्ति दुर्लभत्वात् तत्र देशे कथं गर्हां निन्दां रतिं वयं प्रकुर्य्याम करिष्यामः नैवेत्यर्थः कथमाक्षीच वेति स्त्री ॥ ६ ॥ भ०

आमन्त्रयेतेत्यादि । अथानन्तरं विभीषणः सदसि यैर्मन्त्रिभिः सह उत्थितः तान्मन्त्रिणः प्रह्वानामन्त्रयेत कर्म्मसु नियोगतः सम्बोधितवानित्यर्थः निमन्त्रणे नियोगकरणे लिङ् तदेव दर्शयति लङ्कां त्वरितं यूयङ्गच्छेत यात गताश्च राजवेश्म विशेत च अत्र विधौ प्रेषणे लिङ् सहि सर्वलकाराणामपवादः ॥ ७ ॥ ज० भ०

आमन्त्रयेतेत्यादि । अथानन्तरं प्रह्वान् प्रणतान् मन्त्रिणो विभीषण आमन्त्रयेत सम्बोधितवान् सम्बोधनार्थस्यामन्त्रणं विधिनिमन्त्रणेति प्रेषणे स्त्री अध्येषणे विधौ वा ॥ ७ ॥ भ०

आददीध्वमित्यादि । तत्र राजवेश्मनि वासांसि महार्हाणि महामूल्यानि सत्वरा आददीध्वं गृह्णीत श्नाभ्यस्तयोरात इत्याकारलोपः सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्ध्वीकरिष्यथ प्वादीनां ह्रस्वः ईहल्यघोः अग्र्यचन्दनं सच्चन्दनकाष्ठानि निर्हरेत निर्गमयत ॥ ८ ॥ज०भ०

आददीध्वमित्यादि । तत्र राजवेश्मनि स्थितानि महामूल्यानि वासांसि यूयं सत्वराः सन्तः आददीध्वं ग्रहीष्यथ सत्केतून् शोभनध्वजान् उद्धुनीयात ऊर्द्ध्वं करिष्यथ धूनगिधूञकम्पे अग्र्यचन्दनं शोभनचन्दनं निर्हरेत निर्हरिष्यथ ॥ ८ ॥ भ०

मुञ्चेतेत्यादि । धूपघटिकाभिराकाशधूपांश्च मुञ्चेत प्रवर्त्तयत स्रजः

आनयेतामितं दारु कर्पूरागुरुकुङ्कुमम् ॥ ९ ॥
उद्धरेरन् यज्ञपात्राणि ह्रियेत च विभावसुः ।
ध्रियेत चाज्यमृत्विग्भिः कल्प्येत च समित्कुशम् ॥१०॥
स्नानीयैः स्नापयेताशु रम्यैर्लिम्पेत वर्णकैः ।
अलङ्कुर्यात रत्नैश्च रावणार्हैर्दशाननम् ॥ ११ ॥

कुसुममालाः शुभाः ग्रथ्नीयात गुम्फिष्यथ अन्यग्रन्थसन्दर्भे इति क्र्यादिः दारुकाष्ठं अमितं प्रभूतं कर्पूरागुरुकुङ्कुमञ्च आनयेत सर्वत्र विधौ लिङ् भुयादिप्रयोगश्च ॥ ९ ॥ ज० म०

मुञ्चेतेत्यादि । यूयमाकाशधूपान् मुञ्चेत प्रवर्त्तयिष्यथ अञ्चुगतिपूजनयोः शुभाः शोभनाः स्रजो माला ग्रथ्नीयात ग्रथ्निष्यथ ग्रन्थिकिगर्भे आद्योरिति ई: अमितं प्रचुरं दारुकाष्ठं कर्पूरादि च आनयेत आनेष्यथ सर्वत्र विधौ स्त्री ॥ ९ ॥ भ०

उद्धरेरन्नित्यादि । यज्ञपात्राणि स्रुगादीनि उद्धरेरन् आनीयन्तां विभावसुश्चाग्निः ह्रियेत ऋत्विग्भिः आज्यमपि ध्रियेत समित्कुशं कल्प्येत च कल्प्यतां सर्वत्र विधौ कर्मणि लिङ् ॥ १० ॥ ज० म०

उद्धरेरन्नित्यादि । ऋत्विग्भिरेव नान्यैर्यज्ञपात्राणि उद्धरेरन् आनेष्यन्ते वहौञ् प्रापणे भृहृञ्धृञ्पाद्योरिति जिः विभावसुरग्निर्ह्रियेत आनेष्यते आज्यं हविर्ध्रियेत धरिष्यते समित्कुशं कल्प्येत कल्पयिष्यते सर्वत्र कर्मणि विधौ स्त्री ॥ १० ॥ भ०

स्नानीयैरित्यादि । यथा स्वविहितञ्च कृत्वा रम्यैः स्नानीयैर्दशाननं राक्षसाधिपं स्नापयेत स्नापयिष्यथ ग्लास्नानुच मञ्चिति विकल्पेन मित्त्वं तत्र ज्वलह्वलनमामनुपसर्गाद्वेति वाग्रहणमनुवर्त्तते वर्णकैश्चन्दनादिभिः रम्यैर्लिम्पेत विलेप्स्यथ रत्नैश्च रावणार्हैर्नित्यनैमित्तिकैरलङ्कुर्यात अलङ्करिष्यथ ॥ ११ ॥ ज० म०

स्नानीयैरित्यादि । यूयं दशाननं स्नानीयैः स्नानार्हैर्जलैः स्नापयेत स्नापयिष्यथ ज्वलह्वलेत्यादिना ह्रस्वः विभादित्वादत्र न ह्रस्वः

वासयेत सुवासोभ्यां मेध्याभ्यां राक्षसाधिपम् ।
ऋत्विक् स्रग्विणमादध्यात् प्राङ्मूर्द्धानं मृगाजिने ॥१२॥
यज्ञपात्राणि गात्रेषु चिनुयाच्च यथाविधि ।
जुहुयाच्च हविर्वह्नौ गायेयुः साम सामगाः ॥ १३ ॥
गत्वाथ ते पुरीं लङ्कां कृत्वा सर्वं यथोदितम् ।
समीपेऽन्त्याहुतेः शास्त्राः प्रोक्तवन्तो विभीषणम् ॥ १४ ॥

वर्ण्णकैश्चन्दनादिभिः लिम्पेत विलेपयिष्यथ सुचादित्वात् नानाकारैर्नानाविधैरलैरलंकुर्य्यात अलंकरिष्यथ रावणाङ्गैरिति क्वचित्पाठः सर्व्वत्र विधौ लिङ् ॥ ११ ॥ भ०

वासयेतेत्यादि । वासोभ्यां मेध्याभ्यां पूताभ्यां वासयेत च आच्छादयिष्यथ ऋत्विक् यज्वा स्रग्विणं कृत्वा मालाभूषितं कृत्वा मृगाजिने प्राङ्मूर्द्धानं प्राच्यां मूर्द्धा यस्य पूर्वशिरसमादध्यात् स्थापयेत् ॥१२॥ज०म०

वासयेतेत्यादि । युयं मेध्याभ्यां पवित्राभ्यां सुवासोभ्यां शोभनवस्त्राभ्यां राक्षसाधिपं रावणं वासयेत आच्छादयिष्यथ वसलङ्स्तृतौ ऋत्विक् यजनशीलः स्रग्विणं मालावन्तं राक्षसाधिपं मृगाजिने प्राङ्मूर्द्धानं पूर्वशिरसं आदध्यात् स्थापयिष्यति आद्योरित्यालोपः अद इत्यात्र्ते न द उभयत्र विधौ लिङ् ॥ १२ ॥ भ०

यज्ञपात्राणीत्यादि । स एव यथाविधि यथाक्रमं यज्ञस्य पात्राणि स्रुगादीनि गात्रेषु विचिनुयात् हविराज्यं वह्नौ जुहुयात् सामगः छान्दोगः साम च गायेत सर्वत्र विधौ लिङ् ॥ १३ ॥ ज० म०

यज्ञपात्राणीत्यादि । ऋत्विक् यथाविधि विधेरनतिक्रमेण यज्ञपात्राणि स्रुगादीनि रावणस्य गात्रेषु चिनुयात् [illegible] चिनुचिञ्चित्यां वह्नौ हविराज्यं जुहुयात् होष्यति [illegible] साम गायेयुः आवर्त्तयिष्यन्ति गै गाने सर्वत्र विधौ लिङ् ॥ १३ ॥ ज०

गत्वेत्यादि । अथानन्तरं ते सचिवाः [illegible] यथोदितम्

कृतं सर्वं यथादिष्टं कर्त्तुं वह्निजलक्रियाम्।
प्रयतेथा महाराज! सह सर्वैः स्वबन्धुभिः॥ १५॥
अन्ववस्रोऽस्हेथास्त्वं धेया धीरत्वमच्युतम्।
स्थेयाः कार्य्येषु बन्धूनां हेयाः शोकोद्भवं तमः॥१६॥

कृत्वा अन्त्याहुतेर्म्मृताहुतेः समीपे अनन्तरं सास्रा: सभ्याः विभीषणं प्रोक्तवन्तः॥ १४॥ ज० म०

गत्वाथेत्यादि। अथानन्तरं ते मन्त्रिणो लङ्कां पुरीं गत्वा यथोदितं सर्वं कृत्वा अन्त्याहुतेः समीपे अन्त्याहुतिकर्मसामीप्ये साश्रा विद्यमानाश्रा विभीषणं प्रोक्तवन्तः॥ १४॥ भ०

कृतमित्यादि। यथोद्दिष्टं यथाविहितं सर्वमस्माभिः कृतं त्वमिदानीं भ्रातुर्वह्निक्रियां जलक्रियाञ्च कर्त्तुं स्वबन्धुभिः सर्वैः सह प्रयतेथाः प्रार्थनायां लिङ्॥ १५॥ ज० म०

कृतं सर्वमित्यादि। हे महाराज! यथादिष्टं सर्वमस्माभिः कृतं सम्प्रति वह्निक्रियां जलक्रियाञ्च कर्त्तुं सर्वैः स्वबन्धुभिः सह प्रयतेथाः यत्नं कुरु विधिनिमन्त्रणेति प्रार्थनायां लिङ्॥ १५॥ भ०

अन्ववर्दित्यादि। शोकादप्रवर्त्तमानं पुनराह: अन्ववत् किं नोत्सहेथाः किमवसीदसि गर्हितमेतत् किं वृत्ते लिङ्लुटाविति गर्हायां लिङ् इयं चाशाकमाशंसा यत्तु धीरत्वं धैर्य्यं अच्युतमपि नाम धेयाः धास्यसि बन्धूनाञ्च कार्य्ये स्थेयाः स्थास्यसि शोकोद्भवञ्च तमो हेयास्त्यक्ष्यसि सर्वत्राशिषि लिङ् घ्वाद्यधातुकत्वादेर्लिङीत्यसंयोगादेरेत्वम् ॥ १६॥ ज० म०

अन्ववदित्यादि। अभिधीयमानस्य कर्मणोऽतिशोकादप्रवृत्तेः पुनः प्रवृत्त्यर्थमुच्यते अन्ववन्मूर्ख इव किं न उत्सहेथाः किमवसीदसि गर्हितमेतत् किम्भिः खीत्याविति खी इयमस्माकमाशंसा यत्त्वं अच्युतं अविनाशं धीरत्वं धैर्य्यं धेया धास्यसि आशिषि दामास्मैतामिति घान्तोदासंज्ञकात्वत् ङ: बन्धूनां कार्य्येषु स्थेयाः स्थास्यसि [illegible] ढी ङेश्च

नावकल्प्यमिदं ग्लायेद्यत् कृच्छ्रेषु भवानपि ।
न पृथग्जनवज्जातु प्रमुह्येत्पण्डितो जनः ॥ १७ ॥
यच्च यत्र भवांस्तिष्ठेत्तत्रान्यो रावणस्य न ।
यच्च यत्र भवान् सीदेन्महद्भिस्तद्विगर्हितम् ॥ १८ ॥

बन्धुशोकोद्भवं तमो हेयास्त्यक्ष्यसि ओहाक्लि त्यागे पूर्ववत् ढी ङेश्च ॥ १६ ॥ भ०

नावकल्प्यमित्यादि । अन्यच्च नवकल्प्यमिदं न सम्भाव्यमेतत् येन कृच्छ्रेषु दुःखेषु भवानपि ग्लायेत् ग्लानिं याति अनवकॢप्तौ असम्भावनायां अनवकॢप्त्यमर्षयोरित्यादिना लिङ् सार्वधातुकत्वाद्वान्यस्येत्येत्वं न विकल्प्यते यस्मात्पण्डितो जनः पृथग्जनवत् अपण्डितवत् जातु कदाचिदपि न प्रमुह्येत् न मोहं यातीति सम्भावयाव जातुयदोर्लिङित्यनवकॢप्तौ लिङ् ॥ १७ ॥ ज०म०

नावकल्प्यमित्यादि । अन्यच्च नावकल्प्यमिदं न सम्भाव्यमेतत् यद्भवानपि कृच्छ्रेषु दुःखविषयेषु ग्लायेत् ग्लानिं यास्यति विधिनिमन्त्रणेति आदिशब्दात् सम्भावनायां खी कथमेतदुच्यते इत्याह यस्मात् पण्डितो जनः पृथग्जनवत् मूर्खवत् जातु कदाचिन्न प्रमुह्येत् न मोहं गच्छति जातुयद्यदायदिभिः खी ॥ १७ ॥ भ०

यच्चेत्यादि । यत्र देशे काले वा भवांस्तिष्ठेत् तत्र यच्च अन्यो रावणस्य कस्तिष्ठेत् अवस्थानं कः करिष्यति नैतत्सम्भावयामः तस्य तत्र न्यूनत्वात् अन्यस्त्विनवकॢप्तिः यच्छब्देनोपपदेन योगात् यच्चयत्रयोरित्यनवकॢप्तौ भविष्यति लिङ् यच्चेति निपातसमुदायो यच्छब्दस्यार्थे वर्त्तते किञ्च यत्र देशे काले वा यच्च भवान् सीदेत् अवसादं करोतीति महद्भिः पण्डितैः विगर्हितं निन्दितं गर्हायां चेति सर्वलकाराणामपवादो लिङ् यच्चयत्रयोरित्यनुवर्त्तते अनवकॢप्ताविति निष्टत्तम् ॥ १८ ॥ ज० म०

यच्च यत्रेत्यादि । यत्र देशे काले वा भवान् यच्च तिष्ठेत् अवस्थानं करिष्यति तत्र रावणस्य अन्यो न तिष्ठेत् नावस्थानं करिष्यति

आश्चर्यं यच्च यच्च त्वां प्रब्रूयाम वयं हितम् ।
अपि साक्षात् प्रशिष्यास्त्वं कृच्छ्रेष्विन्द्रपुरोहितम् ॥१९॥
कामो जनस्य जह्याः प्रमादं नैरृताधिप ! ।
उत द्विषोऽनुशोचेयुर्विप्लवे किमु बान्धवाः ॥ २० ॥

यत्र देशे काले वा भवान् सीदेत् अवसादं गमिष्यति तन्नाम्नकिञ्चित्विगर्हितं यत्रयत्राभ्यां क्षेपचित्ते चेति खौ ॥ १८ ॥ भ०

आश्चर्यमित्यादि । यत्र देशे काले वा यच्च यच्चयमपि त्वां हितं प्रब्रूयाम तदाश्चर्यं विचित्रमेतत् चित्रीकरणे चेति लिङ् यत्रयच्चयो-रिति वर्त्तते त्वामित्यकथितं कर्म्म अतस्त्वं कृच्छ्रेषु व्यसनेषु साक्षादिन्द्र-पुरोहितं बृहस्पतिं प्रशिष्याः बाढं शिक्षयसि उताप्योः समर्थयोर्लिङ् अपिशब्दस्योपपदत्वात् समर्थत्वं चानयोर्बाढमिति यस्मिन् अर्थे शास इदुङ् हलोः शासिवसीत्यादिना षत्वम् ॥ १९ ॥ ज० म०

आश्चर्यमित्यादि । यत्र देशे काले वा यच्च त्वां हितं वयं प्रब्रूयाम तदाश्चर्यं चित्रमेव पूर्ववत् खौ कथमाश्चर्यमित्याह यस्मात्त्वं कृच्छ्रेषु व्यसनेषु साक्षात् इन्द्रपुरोधसं बृहस्पतिं शिक्षयसि बाढेऽप्यु-ताभ्यां खौ ॥ १९ ॥ भ०

काम इत्यादि । हे नैरृताधिप ! रक्षसां नाथ ! त्वं विषादं जह्याः त्यज अस्य जनस्य पौरस्य काम इच्छा कामप्रवेदनेऽकच्चितीति लिङ् कच्चिच्छब्दस्याप्रयोगात् कामप्रवेदनञ्च जनाभिप्रायप्रकाशनं अन्यच्च अ-स्मिन् विप्लवे विनाशे द्विषः शत्रवोऽपि उत अनुशोचेयुः अनुशोचन्ति किमु बान्धवाः उताप्योः समर्थयोर्लिङ् ॥ २० ॥ ज० म०

काम इत्यादि । हे नैरृताधिप ! राक्षसेश्वरः त्वं प्रमादं विषादं शोकं वा जह्याः त्यज जनस्य पौरस्यायं कामः कामोक्तावकच्चितीति खौ-क्वाकोऽन्तलोपः त्वां शोको युज्यत एवेति दर्शयति विप्लवे विनाशे द्विषः शत्रवोऽपि ततोऽनुशोचेयुः बाढं शोकं कुर्वन्ति किमु बान्धवाः सुतरा-मेव शोचन्ति बाढेऽप्युताभ्यां खौ ॥ २० ॥ भ०

स भवान् भ्रातृवद्रक्षेद्यथावदखिलं जनम् ।
न भवान् संप्रमुह्येच्चेदाश्वस्युश्च निशाचराः ॥ २१ ॥
ततः स गतवान् कर्त्तुं भ्रातुरग्निजलक्रियाम् ।
प्रोक्तवान् कृतकर्त्तव्यं वचो रामोऽथ राक्षसम् ॥ २२ ॥
अम्भांसि रुक्मकुम्भेन सिञ्चन्मूर्द्धि समाधिमान् ।
त्वं राजा रक्षसां लङ्कामवेक्षेथा विभीषण ! ॥ २३ ॥

स इत्यादि । चेद्यदि भवान्न सम्प्रमुह्येत् मोहं न गच्छेत् तदा स भवान् भ्रातृवत् यथा भ्राता जनो रक्ष्यते तद्वदिमं अखिलं जनं यथावत् सम्यक् रक्षेत् एते च निशाचरा आश्वस्युराश्वासं गच्छेयुर्हेतुमन्मतोर्लिङ् अत्र प्रमोहो हेतुः जनरक्षणं निशाचराश्वासनञ्च हेतुमत् श्वसिरदादित्वाच्छपो लुक् आश्वसेयुरिति पाठान्तरं आश्वास इवाचरेयुरित्यर्थः आश्वसतीत्याश्वासः पचाद्यच् तदन्तात्सर्वप्रातिपदिकेभ्य इति क्विप् ॥ २१ ॥ ज० म०

स भवानित्यादि । चेद्यदि भवान् न प्रमुह्येत् मोहं न गच्छेत् तदा स भवानिममखिलं जनं भ्रातृवत् रावण इव रक्षेत् रक्षिष्यति यथावत् सम्यक् ते निशाचरा आश्वस्युः आश्वासं गच्छेयुः भव्येवाफलहेत्वोरिति श्नौ श्वसप्लु प्राणे ॥ २१ ॥ भ०

तत इत्यादि । ततो वचनानन्तरं भ्रातुरग्निक्रियां जलक्रियाञ्च कर्त्तुं गतवान् अथ कृतकर्त्तव्यं कृतकृत्यं राक्षसं रामः वचः प्रोक्तवान् ॥ २२ ॥ ज० म०

तत इत्यादि । ततस्तद्वचनानन्तरं स विभीषणो भ्रातुरग्निक्रियां जलक्रियाञ्च कर्त्तुं गतवान् अथानन्तरं कृतकृत्यं राक्षसं विभीषणं रामो वचः प्रोक्तवान् ॥ २२ ॥ भ०

अम्भांसीत्यादि । रुक्मकुम्भेन स्वर्णकलसेनाम्भांसि जलानि मूर्द्धि सिञ्चन् पातयन् रामः प्रोक्तवानिति पूर्वेणान्वयः हे विभीषण ! त्वमद्यप्रभृति रक्षसां राजा लङ्कामवेक्षेथाः कार्य्याकार्य्यनिरूपणेन ईक्षसि ॥ २३ ॥ ज० म०

क्रुद्धाननुनयेः सम्यक् धनैर्लुब्धानुपार्ज्जयेः ।
मानिनो मानयेः काले त्रस्तान् पौलस्त्य ! सान्त्वयेः ॥ २४ ॥
इच्छा मे परमानन्देः कथं त्वं हृतशत्रुवत् ।
इच्छेद्धि सुहृदं सर्व्वो वृद्धिसंस्थं यतः सुहृत् ॥ २५ ॥

अभ्यांसीत्यादि । इत्यम्भो न सुवर्णकलसेन अभ्यांसि तस्य मूर्द्धि क्षिपन् पातयन् समाधिमान् कृतसमाधानरचनः प्रोक्तवानिति पूर्व्वेणान्वयः समाधिनेति पाठे समाहितेन चेतसेत्यर्थः विमुक्तवानित्याह हे विभीषण त्वमद्यप्रभृति रक्षसां राजा लङ्कां अवेक्ष्याः कार्य्याकार्य्यविविचारणेन इच्छसि विधिनिमन्त्रणेति आमन्त्रणे लिङ् ॥ २३ ॥

क्रुद्धानित्यादि । हे पौलस्त्य ! क्रुद्धाननुनयेः प्रसादयिष्यसि ये लुब्धास्तान् धनेनोपार्ज्जयेः दानेन ग्रहीष्यसि मानिनः सत्कारोचिते काले मानयेः पूजयिष्यसि त्रस्तान् भीतान् सान्त्वयेः समाश्वासयिष्यसि सर्व्वत्र निमन्त्रणे नियोगकरणे प्रार्थनायां वा लिङ् ॥ २४ ॥ ज० म०

क्रुद्धानित्यादि । हे पौलस्त्य ! त्वं क्रुद्धाननुनयेः प्रसादयिष्यसि लुब्धान् धनैर्धनदानेन उपार्जयेः ग्रहीष्यसि मानिनः सत्कारोचितकाले मानयेः पूजयिष्यसि त्रस्तानुद्विग्नान् सान्त्वयेः समाश्वासयिष्यसि सर्व्वत्र विधिनिमन्त्रणेति प्रार्थनायां विधौ वा लिङ् ॥ २४ ॥ भ०

इच्छेत्यादि । । इयञ्च मे इच्छा महती यत्त्वं हतशत्रुवदिन्द्र इव कथमानन्देः मुदितो भविष्यसि इच्छार्थेषु लिङ् लोटाविति लिङ् इच्छार्थस्य धातोरुपपदत्वात् यतः सर्व एव सुहृत् सुहृदं वृद्धिसंस्थं उदयस्थमिच्छेत् इच्छति इच्छार्थेभ्यो विभाषावर्त्तमान इति लिङ् ॥ २५ ॥ ज० म०

इच्छेत्यादि । इयं मम परमा परमा महती इच्छा त्वं कथं हतशत्रुवत् आनन्देः मुदितो भविष्यसि प्रीचेच्छार्थैरिति कामोक्तौ लिङ् तवैतेन किमित्याह यतो यस्मात् सर्व्वः सुहृन्मित्रं सुहृदं वृद्धिसंस्थं उदयस्थं इच्छेत् वाञ्छेदिति अवक्लृप्त्यमर्षयोः लिङः क्यापा इति वर्त्तमाने लिङ् इच्छार्थे वर्त्तमाने वा लिङिति परः ॥ २५ ॥ भ०

वर्द्धिषीष्ठाः स्वजातेषु बध्यास्त्वं रिपुसंहतीः ।
भूयास्त्वं गुणिनां मान्यस्तेषां स्थेया व्यवस्थितौ ॥ २६ ॥
धेयास्त्वं सुहृदां प्रीतिं वन्दिषीष्ठा दिवौकसः ।
सोमं पेयाश्च हेयाश्च हिंस्रा ह्वानिकरीः क्रियाः ॥२७॥
अवसेयाश्च कार्य्याणि धर्म्मेण पुरवासिनाम् ।
अनुरागं क्रिया राजन् ! सदा सर्व्वङ्कषं जने ॥ २८ ॥

वर्द्धिषीष्ठा इत्यादि। स्वजातेषु स्वजातिषु राक्षसेषु मध्ये त्व वर्द्धिषीष्ठाः वृद्धिमान् भविष्यसि आशिषि लिङ् एवं वक्ष्यमाणेष्वपि सर्व्वत्र रिपुसंहतीः शत्रुसमूहान् वध्याः विनाशयिष्यसि हनोबधलिङि भूयाश्च गुणिनां मान्यः श्रुतशीलवतां मानार्हश्च भविष्यसि तेषाञ्च गुणिनां व्यवस्थायां चिरकालं स्थेयाःस्थास्यसि ॥ २६ ॥ ज० म०

वर्द्धिषीष्ठा इत्यादि। स्वजातिषु ज्ञातिसमूहेषु त्वं वर्द्धिषीष्ठा वर्द्धमानो भविष्यसि शत्रुसंहतीः शत्रुसमूहान् त्वं बध्याः हनिष्यसि हनो-बधष्टोद्धलीति बधादेशः त्वं गुणिनां मान्यो भूयाः भविष्यसि तेषां गुणिनां व्यवस्थितौ व्यवस्थायां स्थास्यसि दामागैत्वागितिङः सर्व्वत्र चाशिषि ॥ २६ ॥ भ०

धेया इत्यादि। त्वं सुहृदां प्रीतिम्धेयाः जनयिष्यसि दिवौकसो देवान्वन्दिषीष्ठाः प्रणंस्यसि सोमं पेयाः पास्यसि तथा हिंस्राः परोपघातिकाः ह्वानिकरीः अपचयहेतुकाः क्रियाः हेयाः त्यक्ष्यसि ॥ २७ ॥ ज० म०

धेया इत्यादि। त्वं सुहृदां प्रीतिं धेयाः धास्यसि जनयिष्यसि पूर्ववत् ङः दिवौकसो देवान् वन्दिषीष्ठाः प्रणंस्यसि सोमं पेयाः सोमपानं करिष्यसि पूर्ववत् ङः तथा हिंस्राः परोपतापिकाः ह्वानिकरीः अपचयहेतुभूताः क्रियाः हेयाः त्यक्ष्यसि पूर्ववत् ङः सर्व्वत्र चाशिषि ॥२७॥ भ०

अवेत्यादि। पुनः पुरवासिनां पौराणां कार्य्याणि धर्म्मेणावसेयाः ज्ञास्यसि सोऽन्तकर्म्मणि हे राजन् ! अत्र जने अनुरागं सर्व्वगतं सर्व्वव्यापिनं क्रियाः करिष्यसि ॥ २८ ॥ ज० म०

घानिषीष्ट त्वया मन्युर्ग्राहिषीष्ट समुन्नतिः।
रक्षोभिर्दर्शिषीष्ठास्त्वं द्रक्षीरन् भवता च ते॥ २९॥
मन्युं बध्या भटवधकृतं बालवृद्धस्य राजन्!
शास्त्राभिज्ञाः सदसि सुधियः सन्निधिं ते क्रियासुः।

अवसेयास्त्वित्यादि। पुरवासिनां पौराणां कार्य्याणि धर्म्मेण अवसेयाः ज्ञासिषि शोयनाशे पूर्ववत् ङः: हे राजन्! विषये सर्वजनमनुरागं अनन्यकृतमनुरञ्जनक्रियाः करिष्यसि कञ्जडदकतौ ख्वद्धिः शयकृद्दीपे उभयत्र चाशिषि॥ २८॥ भ०

घानिषीष्टेत्यादि। मन्युः क्रोधः त्वया घानिषीष्ट हनिष्यते चिखण्डावोष्ट्वहिर्घत्वञ्च समुन्नतिरभ्युच्चयः ग्राहिषीष्ट ग्रहीष्यते रक्षोभिर्दर्शनपरैर्दर्शिषीष्ठाः त्वं द्रक्ष्यसे ते च राक्षसाः भवता दर्शनपरेण च द्रक्षीरन् अचिखण्डावपचः॥ २९॥ ज० भ०

घानिषीष्टेत्यादि। मन्युः कोपस्त्वया घानिषीष्ट समुन्नतिर्नामाभ्युदयस्त्वया ग्राहिषीष्ट ग्रहीष्यते रक्षोभी राक्षसैस्त्वद्दर्शनकामैस्त्वं दर्शिषीष्ठाः भवता च ते राक्षसा द्रक्षीरन् द्रक्ष्यन्ते इत्यर्थः॥ २९॥ भ०

मन्युमित्यादि। अन्यच हे राजन्! बालानां वृद्धानाञ्च सर्वो द्वन्द्वो विभाषैकवद्भवतीति बालाश्च वृद्धाश्च बालवृद्धं तस्य मन्युं शोकं भटवधकृतं भटानाम् पितृपुत्रादीनाञ्च यो वधः तत्कृतं बध्याः प्रियवचनार्थप्रदानादिभिरपनेष्यसि शास्त्रार्थज्ञाः शास्त्रार्थकुशलाः ते तव सदसि सभायां सन्निधिं क्रियासुः सन्निहिता भवन्त्वित्यर्थः; सुरैर्मुनिभिश्च गते सेविते वर्त्मनि मार्गे प्राज्यधर्म्मे भूरिपुण्ये संरंसीष्ठाः रंस्यसे द्विषां शत्रूणां ईहितानि चेष्टितानि सुनयनयनैः शोभनाः ये नयाः तैरेव नयनैश्चक्षुर्भिरिवायस्थितैः सम्भुत्सीष्ठाः जानीयाः ज्ञास्यसि बुध अवगमने एकाचोवशोभष्॥ ३०॥ ज० भ०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लिङ्विलसितः षष्ठः परिच्छेदः।

काव्यस्य विभीषणाभिषेको नामैकोनविंशतितमः सर्गः।

संरंसीष्ठाः सुरमुनिकृते वर्त्मनि प्राज्यधर्म्मे
संभुत्सीष्ठाः स्वनयनयनैर्व्विद्विषामीहितानि ॥ ३० ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लिङ्विलसितो
नामैकोनविंशतितमः सर्गः ।

मन्युमित्यादि । हे राजंस्त्वं ! बालवृद्धस्य मन्युं शोकं वध्याः प्रियवचनेन प्रसादेन चापनेष्यसि मन्युं किम्भूतं भटानां योधानां पितृपुत्त्रादीनां यो वधस्तत्कृतं बालाश्च वृद्धाश्चेति समाहारः तव सदसि सभायां शास्त्रतत्त्वविदः पण्डिताः सन्निधिं क्रियासुः सन्निहिता भविष्यन्ति सरमुनिभिः सेविते प्रचुरधर्म्मे पथि त्वं संरंसीष्ठाः सम्यक्प्रकारेण रतिं करिष्यसि तथा सुनया एव नयनानि तैर्द्विषां शत्रूणां ईहितानि त्वं संभुत्सीष्ठाः सम्यक् ज्ञास्यसि सर्वत्र ढ्राशिषि बुध्यौङ वेदने भभान्तस्यादिजयामिति वो भः ॥ ३० ॥ म०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां विभीषणराज्याभिषेको नामोनविंशतितमः सर्गः ।



# विंश: सर्ग: ।

---

समुपेत्य ततः सीतामुक्तान् पवनात्मजः ।
दिष्ट्या वर्द्धस्व वैदेहि ! हतस्त्रैलोक्यकण्टकः ॥ १ ॥
अनुजानीहि हन्यन्तां मयैताः क्षुद्रमानसाः ।
रक्षिकास्तव राक्षस्यो गृहाणैतासु मत्सरम् ॥ २ ॥

इतःप्रभृति लोटमधिकृत्य तद्विलसितमाह तत्र लोट्चेति वचना-द्विध्यादिष्वर्थेषु लोट् ततोऽन्यत्रापि दर्शयिष्यति

समुपेत्यादि । ततोऽनन्तरं पवनात्मजः रामाज्ञया सीतां समुपेत्य स-मुपगम्योक्तवान् हे वैदेहि ! रावणस्त्रैलोक्यस्य प्रतोदकत्वात् कण्टको हतस्तेन दिष्ट्या प्रियवचनेन वर्द्धस्व नियोगतो वर्त्तस्वेति निमन्त्रणे लोट् ॥ १ ॥ ज०म०

अथ गोमधिकृत्योच्यते तस्याः परमते लोडिति संज्ञा

समुपेत्येत्यादि । तदनन्तरं हनूमान् रामाज्ञया समुपेत्य समीमे-मुपागम्य सीतामुक्तवान् किमित्याह हे वैदेहि ! त्रैलोक्यकण्टकः शत्रू रावणो हतः तेन दिष्ट्या आनन्देन त्वं वर्द्धस्व विधिनिमन्त्रणेत्यादिना निमन्त्रणेऽनुमतौ वा गो दिष्ट्येत्यानन्देऽव्ययं त्रिलोक्येव त्रैलोक्यं विकारसङ्घेति स्वार्थे ष्यणः ॥ १ ॥ भ०

अनुजानीहीत्यादि । अनुजानीहि अनुज्ञां प्रयच्छ प्रार्थनायां लोट् येन मयैता राक्षस्यस्तव रक्षिकाः क्षुद्रमानसाः पापाशयाः हन्यन्तां विनाशयिष्यन्तां अत्र विधौ कर्म्मणि लोट् तस्मादेतासु मत्सरं गृहाण जनय प्रार्थनायां लोट् येन गृहीतक्रोधा मामनुज्ञास्यसि ॥ २ ॥ ज०म०

त्वर्णहानि दुराचारा घोररूपाशयक्रियाः ।
हिंस्रा भवतु ते बुद्धिरेतासु कुरु निष्ठुरम् ॥ ३ ॥
पश्चिमं करवामैतत् प्रियं देवि ! वयं तव ।
ततः प्रोक्तवती सीता वानरं करुणाशया ॥ ४ ॥
उपशाम्यतु ते बुद्धिः पिण्डनिर्वेशकारिषु ।

अनुजानीहीत्यादि । अनुज्ञां देहि ज्ञाद्व्योरित्यादिना ज्ञः मया एतास्तव रक्षिकाः क्षुद्रमानसाः पापाशयाः राक्षस्यो हन्यन्तामिति विधौ णी कर्म्मणि यक् तस्मादेतासु मत्सरं क्रोधं गृहाण धृतक्रोधा सती माम-नुजानीहीति प्रार्थनायां णी गम्यहश्च चकारादादाने प्रहस्वपाद्यो-रिति जिः हसान्तानहाविति ज्ञानः ह्रेर्लोपः ॥ २ ॥ भ०

त्वर्णहानीत्यादि । एता दुराचाराः घोररूपाशयक्रियाः क्रूराणि आकाराभिप्रायानुष्ठानानि यासां तास्तूर्णहानि हनिष्यामि तदेतासु हिंस्रा हिंसनशीला तव बुद्धिर्भवतु निष्ठुरञ्च नैष्ठुर्य्यं कुरु भावप्रधानो नि-र्देशः ॥ ३ ॥ ज०म०

त्वर्णहानीत्यादि । घोरं भयानकरूपं आशयोऽभिप्रायः क्रिया कर्म्म च यासां ता एता दुराचारा दुष्टशीला राक्षसीरहं त्वर्णहानि ह-नामि त्वहधत्नभूशहिंसे रुधादित्वात् अनु णत्वं एतासु ते तव बुद्धि-र्हिंस्रा हिंसनशीला भवतु निष्ठुरम् नैष्ठुर्य्यं कुरु भावप्रधाननिर्देशः ॥ ३ ॥ भ०

पश्चिममित्यादि । हे देवि ! किमत्र विचारितेन तव पश्चिममन्त्यं प्रियं एतद्वयं करवाम करिष्यामः अस्म एकत्वे बहुवचनमन्यतरस्यां ततोऽनन्तरं सीता करुणाशया सती वानरं प्रोक्तवती ॥ ४ ॥ ज०म०

पश्चिममित्यादि । हे देवि ! अलं विचारेण तवैतत् पश्चिममन्त्यं प्रियं वयम् करवाम अस्मद् एकत्वे बहुत्वाविवक्षया आमन्त्रणे प्रार्थने वा णी अनन्तरं करुणाशया सीता वानरं प्रोक्तवती ॥ ४ ॥ भ०

उपेत्यादि । लघुसत्वेषु स्त्रीजनेषु पिण्डनिर्वेशकारिषु पिण्डस्य

लघुसत्त्वेषु दोषोऽयं यत्कृते निहतोऽसकौ ॥ ५ ॥
न हि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः ।
एधि कार्य्यकरस्त्वं मे गत्वा प्रवद राघवम् ॥ ६ ॥
दिदृक्षुर्मैथिली राम ! पश्यतु त्वाविलम्बितम् ।

प्यासस्य निर्वेशो निश्चयः तत्कारिषु ते बुद्धिरुपशाम्यतु सकरुणा भवतु स्वैत्व विधौ लोट् किमिति चेत् यत्कृतो यज्जनितोऽयं दोषः ममैतानिः कृतः असकौ असौ रावणो निहतो व्यापादितः कुत्सायामव्ययसर्वनाम्नामकच्प्रकारेरिति अकच् ॥ ५ ॥ ज० म०

उपशाम्यत्वित्यादि । पिण्डस्य प्यासस्य निर्वेशो निश्चयस्तत्कारिषु अन्नार्थं परायत्तेषु अतएव लघुसत्वेषु अल्पबलेषु स्त्रीजनेषु तव बुद्धिरुपशाम्यतु कृपापरा भवतु विधौ गी यत्कृते यन्निमित्तकोऽयं दोषः मदुपद्रवरूपः असकौ रावणो हत एव अदमस्यादिव्यासेत्यादिना अक् स चात्र कुत्सार्थे तत्र वायव्दस्य व्यवस्थितविभाषितत्वात् तदुक्तं कृपायां निन्दने ज्ञाने नीतौ दाने च मानिते । प्रायोऽन्त्यस्वरात् पूर्व्वोऽव्यासर्व्वनामतिङव्ययादिति ॥ ५ ॥ भ०

न ह्येतत्रादि । अन्यच्च न हि नैव घोरं प्रेष्यवधं करवाणि करिष्यामीतीत्यम् मतिस्तवास्तु आशिषि लिङ्लोटाविति लोट् अतस्त्वं कार्य्यकरः कार्य्यकरणे अनुकूलः आनुलोम्येन एधि भव अधोरल्लोपः असोरेद्धावभ्यासलोपश्च एत्वस्य समानाश्रयत्वादसिद्धत्वे हुझल्भ्योर्हेर्धिः कार्य्यमाह गत्वा प्रवद राघवं गत्वा राघवं मत्सादेशं ब्रूहि ॥ ६ ॥ ज० म०

न हि प्रेष्यवधमित्यादि । अहं प्रेष्यवधं न करवाणि समर्थनाशिषोर्गीति आशिषि गी इति ते तव मतिरस्तु त्वं मे मम कार्य्यकर एधि भव दूतो गत्वा राघवं प्रवद विधौ गी जह्येधिशाधीति हियुक्त्यास्तेरेध्यादेशः स्फुट इति कृत्यः आनुकूल्यार्थोऽत्राभिधानात् ॥ ६ ॥ भ०

किं मया वक्तव्यमिति चेत्तदाह

दिदृक्षुरित्यादि । हे राम ! द्रष्टुमिच्छुर्मैथिली सीता अविल-

तथेति स प्रतिज्ञाय गत्वा राघवमुक्तवान् ॥ ७ ॥
उत्सुकानीयतां देवी काकुत्स्थकुलनन्दन ! ।
क्ष्मां लिखित्वा विनिश्वस्य स्वरालोक्य विभीषणम् ॥ ८ ॥
उक्तवान्राघवः सीतामानयालङ्कृतामिति ।
गत्वा प्रणम्य तेनोक्ता मैथिली मधुरं वचः ॥ ९ ॥

म्बितं द्रुतं त्वा त्वां पश्यतु सर्वत्र प्रार्थनायां लोट् स पवनात्मजस्तथेति यथाज्ञापयसीति प्रतिज्ञाय स्वीकृत्य गत्वा राघवमुक्तवान् ॥७॥ ज० म०

दिदृक्षुरित्यादि । हे राम ! सीता त्वा त्वां द्रष्टुमिच्छुरविलम्बितं शीघ्रं त्वां पश्यतु प्रार्थने लोट् इति गत्वा प्रवदेत्यन्वयः ॥७ ॥ भ०

किमित्याह

उत्सुकेत्यादि । हे काकुत्स्थकुलनन्दन ! उत्सुका देवी आनीयतामिति प्रार्थनायां कर्मणि लोट् एवमुक्ते रावणवधे महति प्रयासे कृतेऽपि जनवादभयात् न तया सह वासः कार्य्यं इत्यभिप्रायेण राघवः क्ष्मामङ्गुष्ठेन लिखित्वा विनिश्वस्य स्वरालोक्य आकाशं दृष्ट्वा त्वरितम्व्ययं विभीषणमुक्तवानिति वक्ष्यमाणेन सम्बन्धः ॥ ८ ॥ ज० म०

उत्सुकेत्यादि । एवमुक्ते सति राघवो जनापवादशङ्कया किं कर्त्तव्यमिति चिन्तयन् क्ष्मां लिखित्वा विनिश्वस्य स्वरालोक्य आकाशं दृष्ट्वा विभीषणमुक्तवान् इत्यग्रिमश्लोकेनान्वयः भूमिलिखनादिकं चिन्तया भवतीति जातव्यक्तिः भावस्त्वयं अजितेन्द्रियस्य रावणस्य वशा सीता कथं ग्राह्या लोको मां किं वदिष्यति अविचारेण त्यागेऽपि महादोषस्तस्मात् समानयतु विचार्य्य यद्युक्तं कर्त्तव्यमिति ॥ ८ ॥ भ०

उक्तवानित्यादि । सीतामलङ्कृतामानयेति राघव उक्तवान् विधौ लोट् विभीषणेन तेन गत्वा प्रणम्य च मैथिल्युक्ता मधुरं वचः ॥९॥ज०म०

उक्तवानित्यादि । अलङ्कृतां सीतां त्वमानय विधौ लोट् इति विभीषणमुक्तवानित्यन्वयः तदनन्तरं विभीषणेन गत्वा प्रणम्य मधुरं वाक्यं सीता प्रोक्ता ॥ ९ ॥ भ०

जहीहि शोकं वैदेहि ! प्रीतये धेहि मानसम् ।
रावणे जहिहि द्वेषं जहाहि प्रमदावनम् ॥ १० ॥
स्नाह्यनुलिम्प निवस धूपाय विध्य च स्रजम् ।
रत्नान्यामुञ्च सन्दीप्ते हविर्जुहुधि पावके ॥ ११ ॥

जहीहीत्यादि । शोकं पतिवियोगजं जहीहि जहातेश्चेत्यन्यत-रस्यामित्त्वमीत्वञ्च आचहावित्याकार इति रूपत्रयं प्रीतये प्रीत्यर्थं पुनर्मानसं धेहि घटयस्व घासादेरीद्भावाभ्यासलोपश्च रावणे रावणविषये द्वेषं जहिहि तस्य विनष्टत्वात्प्रमदावनं अशोकवनिकां जहाहि पत्युरन्तिकं याहीत्यर्थः सर्व्वत्र विधौ लोट् ॥ १० ॥ ज० म०

जहीहीत्यादि । हे वैदेहि ! शोकं जहीहि त्यज आद्योरिति जहातेरी प्रीतये प्रीत्यर्थं पुनर्मानसं धेहि घटय घ्वोरेद्धोरिति धाञोधेः रावणविषये द्वेषं जहिहि तस्य हतत्वात् दरिद्रोङ्कि-र्हस्य इत्यादिना पक्षे ङिः प्रमदावनं अशोकवनिकां जहाहि हौ ङावेति पक्षे ङा सर्व्वत्र विधौ णौ ॥ १० ॥ भ०

स्नाहीत्यादि । श्लोकद्वयं मिश्रेण व्याख्यातं स्नाहि स्नानं कुरु ततः कायशुद्ध्यर्थं सदनुपहृतपञ्चगव्यमद्धि भक्षय कुम्भुभ्यो हेर्द्धिः गोरेतानि गव्यानि सर्व्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् पञ्चगव्यानि समाहृतानीति पात्रादिदर्शनान्न ङीप् ततः पवित्रीकृतकाया सन्दीप्ते पावके हविर्जुहुधि ततः स्वामिनं गन्तुमनुष्ठितदेवकार्य्या सती त्वमालिम्प समालभस्व ततो निवस आच्छादय वस आच्छादने अदादित्वाच्छपो लुक् धातुसकारस्य परगमनं ततो धूपाय धूपितमात्मानं कुरु धूपेरायप्रत्ययः आविध्य च स्रजं मालां शिरस्याचिनु व्यधताडने श्यनि ग्रहिज्यादिना सम्प्रसारणं रत्नान्यामुञ्च विन्यस्येत्ययमर्थवशात् क्रियाक्रमो द्रष्टव्यः यथा देवदत्तं भोजय स्नापय उद्वर्त्तयेति किञ्च संरोधजन्मनः अस्वतन्त्रीकरणजं शोकं छिन्धि अपनय हैमीं शिबिकां सौवर्णयानमारोह अधितिष्ठ सर्व्वत्र भर्त्तुर्नियोगकरणे लोट् तामारूढा द्विषां मनोरथान् हृदये स्थितानभिप्रायान् जहि नाशय हौ परतो हन्तेर्जः ॥ ११ ॥ ज० म०

अद्धि त्वं पञ्चगव्यञ्च च्छिन्धि संरोधजन्तमः ।
आरोह शिबिकां हैमीं द्विषां जहि मनोरथान् ॥ १२ ॥
तृणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचम् ।
भवतादवियुक्ता त्वमतः ऊर्द्ध्वं स्ववेश्मनि ॥ १३ ॥

स्नाहीत्यादि । स्नाहि स्नानं कुरु ततोऽनुलेपनं चन्दनादिना कुरु लिपिमुचादिः धूपाय आत्मानं धूपान्वितं कुरु धूपताये कमकृतो गुपूधूपेत्याय: निवस वस्त्रं परिधेहि वसलङ्कृतौ स्रजं मालाञ्च आविध्य परिधेहि व्यध्यौ ताडे आङ्पूर्वः परिधाने य्हस्वपाद्योरिति जिः रत्नानि आमुञ्च परिधत्स्व सन्दीप्ते पावके हविर्जुहुधि हुझल्भ्यो हेर्धिः ॥ ११ ॥ भ०

अद्धि त्वमित्यादि । शरीरशुद्ध्यर्थं पञ्चगव्यं गोधूमादिकं अद्धि भक्षय अदुलोभक्ष्ये हुझल्भ्यो हेर्धिः गोरेतानि गव्यानि विकारसंघेति यत्ः ओरौतोऽव्वदिति अव्वद्भावात् यत्वाययवायाव इत्यय् पञ्चानां गव्यानां समाहार इति पात्रादित्वान्न ईप् संरोधो वन्दीकरणं तज्जनितं तमः शोकं छिन्धि अपनय छिदेरुधादित्वान् श्नम् हेर्धिः हैमीं स्वर्णमयीं शिबिकां नरयानं आरोह आरूढा सती द्विषां मनोरथान् अभिलाषान् जहि नाशय जहेराधिशाधीति हियुक्तस्य हन्तेर्जहयादेशः सर्वत्र विधौ निमन्त्रणे वा लोट् ॥ १२ ॥ भ०

तृणेढ्वित्यादि । गतायां त्वयि राजन्यानां क्षत्रियाणां पती रामः शुचं शोकं त्वद्वियोगोत्थां त्वद्वियोगप्रभवां सुपिस्थ इति कः उदस्था-स्तम्भोरिति पूर्वं सवर्णः तृणेढु हिनस्तु अतः अस्मात्कालादूर्द्ध्वं कालं स्ववेश्मनि अयोध्यायां अवियुक्ता त्वं भवतात् भूयाः तुह्योरिति तातङ् ॥ १३ ॥ ज० म०

तृणेढ्वित्यादि । राजान्यानां क्षत्रियाणां पती रामस्त्वद्वियोगात् उत्थितां शुचं तृणेढु हन्तु हनजनादिति स्थो डः उदसः स्थास्तम्भो-रिति सलोपः अतोऽस्मात् कालादूर्द्ध्वं स्ववेश्मनि अयोध्यायां त्वं पत्या

दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे ।
इष्यस्व पत्या प्रीतेन प्रीत्या प्रेक्षस्व राघवम् ॥ १४ ॥
अयं नियोगः पत्युस्ते कार्य्या नात्र विचारणा ।
भूषयाङ्गं प्रमाणञ्चेद्रामो गन्तुं यतस्व च ॥ १५ ॥
मुदा संयुङ्क्ष्व काकुत्स्थं स्वयञ्चाप्नुहि सम्मदम् ।
उपेहूर्द्ध्वं मुहूर्त्तात्त्वं देवि राघवसन्निधिम् ॥ १६

अवियुक्ता भवतात् भूयात् उभयत्राशिषि र्गी तुह्योस्तातङ्ङाशिषि ॥ १२ ॥ भ०

दीचस्वेत्यादि । तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं दीक्षस्व दीक्षिता भूयाः आशिषि लोट् प्रीतेन पत्या इष्यस्व इष्टा भव इहापि कर्म्मणि लोट् प्रीता च सती राघवं त्वं प्रेक्षस्व ॥ १४ ॥ ज०म०

दीक्षस्वेत्यादि । तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं त्वं दीक्षस्व दीक्षिता भूयाः प्रीतेन पत्या इष्यस्व इष्टा भूयाः कर्म्मणि यक् त्वमपि प्रीता सती राघवं प्रेक्षस्व सर्वत्राशिषि र्गी ॥ १४ ॥ भ०

अयमित्यादि । तव पत्युरयं नियोगः यत्कृतः स्नानादिव्यापारः अत्र वस्तुनि विचारणा न कार्य्या किमेवं न वेति एतत्प्रमाणं चेत् भूषयाङ्गं स्नानादिपूर्वकमलङ्कुरु रामं गन्तुं यतस्व ॥ १५ ॥ ज० म०

अयं नियोग इत्यादि । तव पत्युरयं स्नानादौ नियोग आज्ञा अत्रार्थे किं कर्त्तव्यमिति विचारणा न कार्य्या यदि तव रामः प्रमाणं तदा अङ्गं भूषय स्नानादिपूर्वकमलङ्कुरु रामान्तिकं गन्तुं यतस्व यत्नं कुरु ॥ १५ ॥ भ०

मुदेत्यादि । गत्वा च काकुत्स्थं मुदा हर्षेण संयुङ्क्ष्व मिश्रय युजिः अणे तत्र गमनेन स्वयञ्च सम्मदं हर्षं प्राप्नुहि प्रमदसंमदौ हर्षे सर्वत्र प्रार्थनायां लोट् हे देवि ! अस्मान्मुहूर्त्तादूर्द्ध्वं राघवसन्निधिं राघवः सन्निधीयते यस्मिन् प्रदेशे इति कर्म्मण्यधिकरणे चेति किप्रत्ययः तं त्वमुपेहि गच्छ ॥ १६ ॥ ज०म०

ऊर्द्ध्वं मुहूर्त्तादङ्गोऽङ्ग स्वामिनी स्म भव क्षितेः ।
राजपत्नीनियोगस्थमनुशाधि पुरीजनम् ॥ १७ ॥
उत्तिष्ठस्व मते पत्युर्यतस्वालङ्कृतौ तथा ।
प्रतिष्ठस्व च तं द्रष्टुं द्रष्टव्यं त्वं महीपतिम् ॥ १८ ॥

मुदेत्यादि । इतो गत्वा रामं मुदा हर्षेण संयुहि संमिश्रय युमिश्रणे स्वयञ्च स्मरदं हर्षं प्राप्नुहि प्रार्थनायामाशिषि वा गौ संयुक्तनोर्हेर्लोपाभावः हे देवि ! यस्मात् मुहूर्त्तात् ऊर्द्ध्वं राघवसन्निधिं त्वं उपेहि गमिष्यसि विधिनिमन्त्रणेत्यादिना प्राप्तकाले गौ राघवसन्निधिं गन्तुं प्राप्तकालासीत्यर्थः ॥ १६ ॥ भ०

ऊर्द्ध्वमित्यादि । तथा मुहूर्त्तादूर्द्ध्वं क्षितेः स्वामिनी भव स्म अङ्गेति सम्बोधनपदं अत्र स्मे लोडित्यनेन प्रैषे लोट् तत्र हि प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति चौर्द्ध्वमौहूर्त्तिक इति च वर्त्तते प्राप्तकालतायां लोट् राघवसन्निधिं गन्तुं क्षितेः स्वामिनी भवितुं प्राप्तकाला देवी अन्यथा कालातिक्रमे मयि विरक्तेति रामो विरज्यते अन्यच्च इयमस्माकमाशंसा त्वं राजपत्नीनियोगस्थं महादेव्याज्ञाकरणतत् परं पुरीस्थमयोध्यावस्थितं जनं अनुशाधि विधेयीकुरु आशिषि लोट् शाहाविति शादेशः तस्य समानाश्रयत्वादसिद्धत्वे झल्लक्षणो हेर्द्धिः ॥ १७ ॥ ज०म०

ऊर्द्ध्वमित्यादि । अङ्गेति सानुनयसम्बोधनेऽव्ययं मुहूर्त्तात् ऊर्द्ध्वं त्वं क्षितेः स्वामिनी भव पूर्ववत् प्राप्तकाले गौ क्षितेः स्वामिनी भवितुं प्राप्तकालासीत्यर्थः । राजपत्नी नियोगस्थं महादेव्याज्ञाकरणतत्परं पुरीजनं अयोध्यावासिनं अनुशाधि आज्ञापय आशिषि गौ शासच् अनुशासने जह्नोधिशाधिहन्यास्तिशास्तिहिना ॥ १७ ॥ भ०

उत्तिष्ठस्वेत्यादि । तस्मात्प्रार्थयेऽहं पत्युर्मते अभिप्राये मत्समीपमागन्तव्यमिति उत्तिष्ठस्व तदर्थं घटस्व उदोऽनूर्द्ध्वकर्म्मणीति तङ् तथा अलङ्कृतौ अलङ्करणे यतस्व यत्नं कुरु लज्जया कदाचिन्नोत्सहेतेति पुनः पुनरभिधानं अविरुद्धं यथा स्नाहीत्यादि भूषयाङ्गमिति मन्यते तेन वारद्वयमुक्तमेवं अलङ्कृत्य त्वं महीपतिं द्रष्टव्यं दर्शनार्हं अर्हे कृत्य-

अनुष्ठाय यथादिष्टं नियोगं जनकात्मजा ।
समारूढ़वती यानं पट्टांशुकवृतानना ॥ १९ ॥
लज्जानता विसंयोगदुःखस्मरणविह्वला ।
सास्रा गत्वान्तिकं पत्युर्दीना रुदितवत्यसौ ॥ २० ॥
प्रास्नवारिलवस्यन्दैरस्तस्तामुक्तवान्नृपः ।

त्वचस्वेति अवश्यद्रष्टव्ये या आवश्यके कृत्याच्चेति संद्रष्टु प्रतिष्ठस्व गच्छ प्रार्थनायां लोट् समवप्रविभ्य स्थ इति तङ् ॥ १८ ॥ ज० म०

उत्तिष्ठस्वेत्यादि । मत्समीपे आगम्यतामिति मत्युर्मतेऽभिप्रेते उत्तिष्ठस्व घटस्व उदोऽनूर्द्ध्वे इति मं तया अलङ्करणे यतस्व दर्शनार्हं महीपतिं रामं संद्रष्टुञ्च प्रतिष्ठस्व प्रतिज्ञानिर्णयेत्यादिना मं सर्वत्र प्रार्थनायां गौ ॥ १८ ॥ भ०

अनुष्ठायेत्यादि । श्लोकत्रयं एवमुक्ता भर्त्तुर्यथोद्दिष्टं नियोगं स्नानादिकमनुष्ठाय कृत्वा जनकात्मजा मां कश्चिन्मा द्राक्षीदिति पट्टांशुकवृतानना यानं शिविकामारूढवती पत्युरन्तिकञ्च गत्वा यानादवतीर्य्य त्यर्थात् ॥ १९ ॥ ज० म०

अनुष्ठायेत्यादि । पत्युर्यथादिष्टं नियोगं स्नानादिकं अनुष्ठाय कृत्वा जनकात्मजा लज्जया पट्टांशुकेनावृतानना सती यानं समारूढवती ॥ १९ ॥ भ०

लज्जानतेत्यादि । लज्जया आनता वियोगदुःखस्य पूर्व्वानुभूतस्य स्मरणेन विह्वला सास्रा दीना सा पत्युरन्तिकं गत्वा सीता रुदितवती ॥ २० ॥ ज० म०

लज्जानतेत्यादि । असौ लज्जया अवनता सीता पत्युरन्तिकं गत्वा सास्रा सती रुदितवती यतो वियोगदुःखस्य पूर्वानुभूतस्य स्मरणेन विह्वला अतएव दीना विह्वलेति ह्वलचाले पचादित्वादच् विक्लवेति पाठे क्लवश्च भये ॥ २० ॥ भ०

प्रास्नेत्यादि । ततोऽनन्तरं नृपो रामः रावणः किमस्यां खण्डित-

इच्छा मे नाददे सीते ! त्वामहं गम्यतामतः ॥ २१ ॥
रावणाङ्कपरिक्लिष्टा त्वं हृल्लेखकरी मम ।
मतिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा ॥ २२ ॥
अश्नान भरताद्भोगान् लक्ष्मणं प्रवृणीष्व वा ।

चारित्रशीला न वेति प्राप्तचारित्रसन्देहस्तामुक्तवान् किमित्याह हे सीते ! ममेयमिच्छा यत्त्वामहं नाददे न गृह्णामि इच्छार्थेषु लिङ्लोटाविति लोट् अतोऽनिच्छातः कारणाद्यथेष्टं गम्यताम् ॥२१॥ज०म०

प्राप्तेत्यादि । तदनन्तरं रावणेनेयमुपभुक्ता न वेति प्राप्तः सीताचारित्रसन्देहो येन स नृपो रामस्तां सीतामुक्तवान् चरित्रमेव चारित्रं स्वार्थे ष्णः सन्देहविशेषणं मे ममेयमिच्छा त्वामहं नाददे न गृह्णीयां शीचेच्छार्थैरिति कामोक्तौ शी विधाविति विद्यासागरः प्रार्थनाविवक्षेति दुर्गः अतो हेतोर्यथेष्टं त्वया गम्यतामिति ॥ २१ ॥ भ०

किमिति नेच्छति चेदाह

रावणेत्यादि । रावणाङ्कपरिक्लिष्टा हरणसमये रावणोत्सङ्गे स्थिता सती परिक्लिष्टा परिम्लदितवती त्वं मम हृल्लेखकरी चेतःपीडनशीला कञो हेतुताच्छील्येति टः हृदयस्य हृल्लेखेति हृदादेशः कमहं शरणं यास्यामीति चेदाह सुग्रीवे मतिं बधान बध्नीयाः उत्पाद्य राक्षसेन्द्रं विभीषणं वा अनुगृहाण स्वीकुरु ॥ २२ ॥ ज० म०

रावणाङ्केत्यादि । पूर्व्वोक्तं हेतुरयं हरणसमये रावणाङ्के परिक्लिष्टा परिम्लदिता त्वं मम हृल्लेखकरी चेतःपीडाकरी हृदो लेखं खण्डनं करोतीति स्वकृटः चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरवचनात् हृच्छब्देन समासः परे तु हृदयस्य हृल्लासादाविति सूत्रं कृत्वा लेखस्य लासादित्वात् हृदयशब्दस्य हृदादेशमाहुः लासादौ हृच्छब्दस्य प्रयोगोऽभिधानात् हृदयशब्दस्य तत्प्रयोगोऽनभिधानादिति स्वमतं साधु लाघवात् कुत्र गन्तव्यमित्याह सुग्रीवे मतिं बधान कुरु तत्सौगतस्थे राक्षसेन्द्रं विभीषणं वा गृहाण इत्यासन्नतौ ॥२२॥ भ०

अश्नानेत्यादि । भरताद्वा भोगानश्नान भुङ्क्ष्व सर्व्वत्र हर्षः श्नः

कामाद्वा याहि मुच्यन्तामाशा रामनिबन्धनाः ॥ २३ ॥
क्व च ख्यातो रघोर्वंशः क्व त्वं परगृहोषिता ।
अन्यस्मै हृदयं देहि नानभीष्टे घटामहे ॥ २४ ॥
यथेष्टं चर वैदेहि ! पन्थानः सन्तु ते शिवाः ।
कामास्तेऽन्यत्र तायन्तां विशङ्कां त्यज मङ्गताम् ॥२५ ॥

शानजिति शानच् लक्ष्मणं प्रष्टणीष्व वा अङ्गीकुरु ष्टञवरणे हृत्यस्य ह्रस्वं
प्वादीनां ह्रस्वः स्वेच्छया वा याहि भवत्यै यत्र रोचते तत्र गम्यतां
रामनिबन्धनाः पुनरपि रामो मे पतिर्भूयादित्याशा मुच्यन्तां त्यज्यन्ताम्
॥ २३ ॥ ज० म०

अशानेत्यादि । भरताद्वा भोगान् अशान भुङ्क्ष्व अशगभोजने ह-
ल्ह्लानहौ लक्ष्मणं वा वृणीष्व वृणिञवृत्यां प्वादित्वात् ह्रस्वः कामात्
स्वेच्छया वा यत्र कुत्रापि याहि गच्छ रामनिबन्धना आशास्त्वया मुच्यन्तां
पुनरपि रामो नेष्यतीत्याशास्त्यज्यन्तामित्यर्थः विधौ गौ ॥ २३ ॥ भ०

किमिति चेदाह

क्व चेत्यादि । परिशुद्धत्वात्सर्वत्र ख्यातः लोके विदितो रघोर्वंशः
क्व क्व च त्वं परगृहोषिता जातकलङ्कत्वात् द्वयमप्येतद्दूरं भिन्नं सर्वत्र
विधौ लोट् अतोऽन्यस्मै हृदयं देहि चित्तं परस्मै देहि मद्विधाः अ-
नभिमते विषये न घटामहे निमन्त्रणे लोट् ॥ २४ ॥ ज० म०

क्व चेत्यादि । परित्यागे हेतुरयं ख्यातो लोकविदितो रघुवंशः
क्व परगृहस्थिता त्वञ्च क्व उभयं परस्परविरुद्धमिति भावः अतोऽन्यस्मै
चित्तं देहीति विधिः अनभीष्टेऽनुचिते वस्तुनि वयं न घटामहे ॥२४॥भ०

यथेष्टमित्यादि । यथेष्टं चर यथेष्टचारिणी भव विधौ लोट् तत्र
च यथेष्टं चरन्त्याः पन्थानो मार्गाः शिवा निर्विघ्नाः सन्तु भूयासुः
आशिषि लोट् किञ्च कामाः अभिलाषास्तवान्यत्र तायन्तां स्फीता भवन्तु
अत्राप्याशिषि यथेष्टचारित्वात्किमयं करिष्यतीति मङ्गतां विशङ्कां भयं
त्यज त्यक्ष्यसि विधौ लोट् ॥ २५ ॥ ज० म०

ततः प्रगदिता वाक्यं मैथिलाभिजना नृपम् ।
स्त्रीसामान्येन सम्भूता शङ्का मयि विमुच्यताम् ॥२६॥
दैवाद्बिभीहि काकुत्स्थ ! जिह्रीहि त्वं तथा जनात् ।
मिथ्या मामभिसंक्रुध्यन्नवशां शत्रुणा हृताम् ॥ २७ ॥

यथेष्टमित्यादि । हे वैदेहि यथेष्टं चर यथेष्टचारिणी भव विधौ लोट् यथेष्टं चरन्त्यास्तव पन्थानः शिवा निर्विघ्ना भवन्तु आशिषि लोट् तव कामा अभिलाषा अन्यत्र तायन्तां स्फीता भवन्तु तायृङ्पालनसन्तत्योः आशिषि लोट् मयि यथेष्टचारिण्यां रामः किङ्करिष्यतीति मद्गतामाशङ्कां त्यज विधौ लोट् ॥ २५ ॥ भ०

तत इत्यादि । ततस्तद्वचनानन्तरं मैथिलाभिजना सीता नृपं वाक्यं प्रगदिता गदितुं प्रवृत्ता आदिकर्मणि क्तः स्त्रीसामान्येन स्त्रीति कृत्वा या तव मयि शङ्का इयं सती न वेति सा विमुच्यतां मिथ्यात्वात् प्रार्थनायां लोट् ॥ २६ ॥ ज० म०

तत इत्यादि । तद्वचनानन्तरं मिथिलाभिजना मिथिलदेशे सम्भूता सीता नृपं रामं प्रगदितुं प्रवृत्ता मेचादिदे क्तः जनः पचादित्वात् अन् अभिजनः पूर्वबान्धव इति वर्द्धमानः कुलान्यभिजनान्वयाविव्यमरः स्त्रीसामान्येन योषिदन्तरसाधारण्येन सम्भूता शङ्का मयि विमुच्यतां प्रार्थनायां लोट् ॥ २६ ॥ भ

दैवादित्यादि । अन्यच्च हे काकुत्स्थ रामवशां पराधीनां शत्रुणा हृताम् मिथ्या अभिसंक्रुध्यन् अलीकेन क्रुधद्रुहोरुपसृष्टयोः कर्मेति कर्मसंज्ञा दैवात् अनिष्टफलात् विभीहि भयं जनय भीतो भव ! ह्रेरपित्त्वात्तित्त्वे गुणो न भवति इतश्च जनादिमं जनं वीक्ष्य जिह्रीहि लज्जस्व ल्यब्लोपे पञ्चमी विधौ लोट् ॥ २७ ॥ ज० म०

दैवादित्यादि । हे काकुत्स्थ ! अवशां परायत्तां रावणायत्तां वा शत्रुणा हृतां मां अभिसंक्रुध्यन् दोषं विना मह्यं कुप्यन् दैवाद्धर्म्मात् बिभीहि भयं कुरु ञिभीबिभीर्यां दरिद्रोङ्गिङिहस्व इत्यादिना पक्षे ङिः

चेतसस्त्वयि वृत्तिर्मे शरीरं रक्षसा हृतम् ॥ २८ ॥
विदांकुर्वन्तु सम्यञ्चो देवाः सत्यमिदं वचः ।
त्वं पुनीहि पुनीहीति पुनन् वायो ! जगत्त्रयम् ।
चरन् देहेषु भूतानां विद्धि मे बुद्धिविप्लवम् ॥ २९ ॥

तथा जनाक्रोशात् जिह्रीहि लज्जितो भव जनं वीक्ष्येत्यर्थः यत्र पञ्चमी विधौ गौ क्रुधद्रुहेर्ष्यासूयार्थानामिति (?) सम्प्रदानस्य कर्मत्वमिति परः स्वमते क्रियाव्याप्यत्वं विवक्षयम् ॥ २७ ॥ भ०

त्वय्यसंक्रान्तायां मम कीदृशं भयं लज्जा चेति चेत्तदाह

चेतस इत्यादि । मे चेतसो वृत्तिरात्मव्यापारः त्वयि तिष्ठति अनन्यमनस्कत्वात् रक्षसा हृतायां मम न सर्वं हृतं अपितु शरीरं हृतं नैवेदं मिथ्या तथाहि हे महाभूताधिष्ठानाः सम्यञ्चः सर्वत्र वर्त्तमानाः समञ्चन्तीति क्विप् अञ्चतावप्रत्यये समः समीति सम्यादेशः एते सदर्थिताः मम वचः सत्यं विदांकुर्वन्तु अवगच्छन्तु प्रार्थनायां लोट् विदांकुर्वन्त्विति निपातनम् ॥ २८ ॥ ज० म०

चेतस इत्यादि । शङ्का विमुच्यतामिति पूर्वोक्तो हेत्वयं रक्षसा मम चित्तं न हृतं किन्तु शरीरमेव हृतं चेतसस्तु वृत्तिस्त्वयि स्थिता न चेदेयं तदा देवाः सम्यञ्चः सर्वत्र वर्त्तमाना इदं मम सत्यं वचो विदांकुर्वन्तु जानन्तु जम्बाभ्यां ग्यामिति वेत्तेर्ज्ञाम् समनञ्चतीति क्विप् सह्समन्तिर इति सम्यादेशः ॥ २८ ॥ भ०

प्रत्येकं प्रार्थनामाह

त्वं पुनीहीत्यादि । हे वायो ! पुनीहि पुनीहीति जगत्त्रयं पुनः पुनः पुनामि भृशं वा पुनामीत्यभिप्रायस्त्वं जगत्त्रयं पुनन् भूतानां देहेषु चरन् मम बुद्धिविप्लवं बुद्धेरन्यथात्वं विद्धि अवगच्छ प्रार्थनायां लोट् पूर्वत्र क्रियासमभिहारे लोडिति लोट् तस्य परस्मैपदसम्बन्धो हिरादेशः क्रियासमभिहारे द्विर्वचनं पुनन्निति यथाविध्यनुप्रयोगः पूर्वस्मिन्नित्यनेन पुनातेरनुप्रयोगः तत्र हि क्रियासमुच्चयाभावात् ॥२९॥ज०म०

त्वमित्यादि । हे वायो ! त्वं जगत्त्रयं पुनीहि पुनीहीति पुनन्

खमट द्यामटाटोर्वीमित्यटन्त्योऽतिपावनाः ।
यूयमापो विजानीत मनोवृत्तिं शुभां मम ॥ ३० ॥
जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे ! ।
अवेहि मम चारित्रं नक्तन्दिवमविच्युतम् ॥ ३१ ॥

भृशं पुनः पुनर्वा पुनासीतर्यथः समुच्चयार्थे हितस्वध्वमिति सर्वस्मिन् काले हि वीप्सायाम् द्वित्वं लोकतः सिद्धं पुनर्द्वित्वस्याप्रयोगोऽप्यभिधानात् इति हेतोः जगत्पवित्रीकरणाय भूतानां प्राणिनां देहेषु चरन् मम बुद्धेरविप्लवं अव्यभिचारं विद्धि जानीहि ॥ २९ ॥ भ०

खमित्यादि । यूयमापोऽतिपावनाः अतिपवित्राः खमट द्यामट उर्वीमट इति वयमन्तरीक्षमटाम देवलोकमटाम भूलोकमटामेत्येवमभिप्रायः सर्वत्राटन्त्यो मम शुभां चित्तवृत्तिं विजानीतेति अत्र प्रार्थनायां लोट् पूर्वत्र तु आकाशादिकारकभेदात् अनेकाटनक्रियासमुच्चयः ततश्च समुच्चयेऽन्यतरस्यामिति लोट् अटेति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः आकाशादुपगामिनीनामटनक्रियायां पुनरटनक्रियायाः सामान्याया अनुप्रयोगात् ॥ ३० ॥ ज० म०

खमटेत्यादि । हे आपो ! यूयमतिपावना अतिपवित्राः खमाकाशं द्यां स्वर्गं उर्वीं भूमिञ्च अटन्त्योऽटः पूर्ववत् सदाहि इति हेतोर्मम शुभां मनोवृत्तिं यूयं विजानीत प्रार्थनायां गो ॥ ३० ॥ भ०

जगन्तीत्यादि । त्वं वसुन्धरे धत्स्व धत्स्वेति अहं पुनः पुनर्दधे भृशं वा दध इति एवमभिप्राया जगन्ति दधती मम चारित्रं नक्तं दिनमविच्युतं अस्खलितमवेहि अत्र प्रार्थनायां लोट् पूर्वत्र क्रियासमभिहारे तस्य चात्मनेपदसम्बन्धिनः स्वादेशः ॥ ३१ ॥ ज० म०

जगन्तीत्यादि । हे वसुन्धरे ! जगन्ति धत्स्व धत्स्व त्वं दधती भृशं पुनः पुनर्वा जगन्ति दधासीत्यर्थः आद्ययोरिति धाञआलोप्यः अभान्त्स्यादिजवामिति स्वेधत्वं इति हेतोस्त्वं मम चारित्रं चरित्रं नक्तन्दिवं अविच्युतं रात्रौ दिवा चास्खलितं अवेहि जानीहि प्रार्थने गो नक्तन्दिवमिति अचिभ्रुवादित्वात् साध्यम् ॥ ३१ ॥ भ०

रसान् संहर दीप्यस्व ध्वान्तं जहि नभो भ्रम ।
इतीहमानस्तिग्मांशो वृत्तं त्रातुं घटस्व मे ॥ २२ ॥
स्वर्गे विद्यस्व भुव्यास्व भुजङ्गनिलये भव ।
एवं वसन् ममाकाश संबुध्यस्व कृताकृतम् ॥ २३ ॥
चितां कुरु च सौमित्रे ! व्यसनस्यास्य भेषजम् ।

रसानित्यादि । हे तिग्मांशो ! त्वमपि अहं रसान् भौमान् संहर संहरामीति दीप्यस्व दीप्ये ध्वान्तं जहि-हन्मि नभो भ्रम भ्रमामीत्येवमभिप्रायः ईहमानः जगत्यर्थक्रियासु चेष्टमानः मम वृत्तं चरित्रं त्रातुं घटस्व यतस्व अत्र प्रार्थनायां लोट् पूर्वत्र समुच्चयेऽन्यतरस्यामिति तस्य च यथायोगं हिस्वादेशः ईहमान इति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः संहरेत्यादीनामीहतेः सामान्यवचनस्यानुप्रयोगात् ॥ २२॥ ज० म०

रसानित्यादि । हे तिग्मांशो ! सूर्य ! त्वमीहमानश्चेष्टमानो रसान् जलानि संहरसि दीप्यसे ध्वान्तं हंसि नभो भ्रमसि सर्वत्र सुकृर्थेष्वा-र्थत्वविवक्षया हिस्वौ क्रियासमुच्चये हिस्वौ क्रियासामान्यस्यानुप्रयोग इति ईहतेरनुप्रयोग इति परे इति हेतोर्मम वृत्तं चरित्रं त्रातुं घटस्वेति प्रार्थना ॥ २२ ॥ भ०

स्वर्ग इत्यादि । त्वं चाकाश ! स्वर्गे विद्यस्व अहं विद्ये भुवि आस्व आसे भुजङ्गनिलये पाताले भव भवामीत्येवमभिप्रायः सर्वत्र सन्नि-वसन् मम कृताकृतं युक्तायुक्तं बुध्यस्व अवगच्छ अत्र प्रार्थनायां लोट् पूर्वत्र समुच्चयेऽन्यतरस्यामिति तस्य च यथायोगं हिस्वादेशः वसन्निति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः विद्यमानादीनां सतः सामान्यवचन-स्यानुप्रयोगात् ॥ २३ ॥ ज० म०

स्वर्ग इत्यादि । हे आकाश ! त्वमपि वसन् स्वर्गे विद्यसे भुवि तिष्ठसि भुजङ्गनिलये पाताले वससि पूर्ववत् भृशार्थत्वविवक्षया हिस्वौ एवं ममापि कृतमकृतञ्च कर्म्म बुध्यस्वेति प्रार्थना ॥ २३ ॥ भ०

रामस्तुष्यतु मे वाद्य पापां प्लुष्णातु वानलः ॥ ३४ ॥
राघवस्य मतेनाथ लक्ष्मणेनाचितां चिताम् ।
दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः ॥ ३५ ॥
प्रवपाणि वपुर्वह्नौ रामाहं शङ्किता त्वया ।
सर्वे विदन्तु शृण्वन्तु भवन्तः सप्लवङ्गमाः ॥ ३६ ॥

एवं पृथिव्यादीनि महाभूतानि कथयित्वा लक्ष्मणमाह

चितामित्यादि । हे सौमित्रे ! व्यसनस्यास्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु विधौ लोट् मम अग्नौ विशुद्धाया रामो नियोगतस्तुष्यतु अनलो वा मां पापां नियोगतः प्लुष्णातु दहतु दहन् मर्त्यलोकात् मोचयत्वित्यर्थः निमन्त्रणे लोट् प्लुषप्लुषस्नेहनमोचनपूरणेष्विति क्र्यादिः मोचने द्रष्टव्यः अनेकार्थत्वाद्दाहे ॥ ३४ ॥ ज० म०

चितामित्यादि । हे सौमित्रे ! अस्य व्यसनस्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु विधौ णी अद्य वह्नौ विशुद्धायां मयि रामस्तुष्यतु अनलो वा पापां मां प्लुष्णातु दहतु आमन्त्रणे णी प्लुषेरनेकार्थत्वादत्र दाहार्थः सदाहार्थस्तु औवादिक एव यदुक्तं प्लुषगसेकपूर्त्यौश्च प्लुषदन्नमूरत्वाविति ॥ ३४ ॥ म०

राघवस्येत्यादि । अथ राघवस्य मतेनानुज्ञातेन क्तस्य च वर्त्तमाने इति षष्ठी मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः तस्य वा मतेनानुज्ञया चितामाचितां रचितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं प्रगदिता वचो गदितुं प्रवृत्ता ॥ ३५ ॥ ज० म०

राघवस्येत्यादि । अथानन्तरं राघवस्य मतेनानुज्ञया अनुज्ञानेन वा लक्ष्मणेनाचितां रचितां चितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं वचः प्रगदिता कथितुं प्रवृत्ता ॥ ३५ ॥ म०

प्रवपाणीत्यादि । येऽत्र सन्निहिता देवादयः ते सर्वे सप्लवङ्गमाः वानरैः सह भवन्तः विदन्तु चेतसा शृण्वन्तु श्रोत्राभ्यां मद्वचनं हे राम त्वया दुष्टेति शङ्किता अहं वह्नौ वपुः शरीरं प्रवपामि नियोगतः प्रक्षिपामि निमन्त्रणे लोट् आनिलोडिति णत्वम् ॥ ३६ ॥ ज०म०

मां दृष्टां ज्वलितवपुः प्लुषाण वह्ने !
संरक्ष क्षतमलिनां सुहृद्यथा वा ।
एषाहं क्रतुषु वसोर्यथाज्यधारा
त्वां प्राप्ता विधिवदुदीर्णदीप्तिमालम् ॥ २७ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लोटप्रदर्शनो नाम
विंशतितमः सर्गः ।

प्रवपाणीत्यादि । हे राम ! त्वया दुष्टेति शङ्किताहं वह्नौ वपुः प्रवपाणि क्षिपाणि निमन्त्रणे मी प्राग्वन्नो ण इत्यादिना णत्वं अत्र सन्निहिता देवादयो भवन्तः प्लवङ्गैः सह वक्ष्यमाणं मद्वचनं शृण्वन्तु ते च सर्वे तदर्थं जानन्त्विति प्रार्थये ॥ २६ ॥ भ०

मामित्यादि । हे वह्ने ! यद्यहं दुष्टा तदा ज्वलितवपुः ज्वलितशरीरः सन् मिथ्याभावपक्षे रूपं प्लुषाण देहं मर्त्यलोकात् मोचय यथा वा क्षतमलिनां विशुद्धां सुहृदिव संरक्ष वा आमन्त्रणे कामचारकरणे लोट् एषाहं त्वां विधिवत् सम्यक् प्राप्ता क्रतुषु यज्ञेषु वसोः रामः आज्यधारेव उदीर्णदीप्तिमालं उद्गतज्वालासमूहं त्वामिति ॥ २७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लोड्विलसितं नाम सप्तमः परिच्छेदः ।

काव्यस्य सीताप्रत्याख्यानं नाम विंशतितमः सर्गः ।

मां दुष्टामित्यादि । हे वह्ने ! यद्यहं दुष्टा तदा ज्वलितशरीरः सन् मां दुष्टां प्लुषाण दह पूर्ववत् यद्यहं च्युतमलिना भ्रष्टपापा अच्युतचरितामिति क्वचित्पाठः तदा मां सुहृदिव रक्ष आमन्त्रणे प्रार्थने वा लो एषाहं उदीर्णदीप्तिमालं उद्गतज्वालासमूहं त्वां विधिवत् सम्यक् प्राप्ता क्रतुषु यज्ञेषु वसोराज्यधारेव ॥ २७ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां सीतापरीक्षणो नाम विंशतितमः सर्गः ।

# एकविंशः सर्गः ।



तामुत्क्षिप्य ततो वह्निर्मैथिलीं राममुक्तवान् ।
काकुत्स्थ ! दयितां साध्वीं त्वमाशङ्किष्यथाः कथम् ॥१॥

इतः प्रभृति लृङमधिकृत्य विलसितमाह तत्र लिङ्निमित्ते लृङ् क्रियातिपत्तौ भविष्यति भूते च हेतुमतोर्लिङित्येवमादिकं लिङोनिमित्तं क्रियातिपत्तिश्च कुतश्चिद्वैगुण्यात् क्रियाया अनिष्पत्तिः क्रियातिपत्तिर्वैगुण्यञ्च विधुरप्रत्ययोपनिपातात् सामग्र्यभावाच्च द्रष्टव्यम्

तमुत्क्षिप्येत्यादि । ततोऽनन्तरं मैथिलीं समुत्क्षिप्य हस्ताभ्यामाकाशे धृत्वा वह्निर्दहनः राममुक्तवान् हे काकुत्स्थ ! साध्वीं पतिव्रतामपि दयितां असाध्वीति त्वं यदाशङ्किष्यथाः शङ्कितवानसि तत्कथं गर्हितमेतत् न युक्तमाशङ्कितुमित्यर्थः । विभाषाकथमिति लिङ्वेति अत्र कथं शब्दो गर्हायाञ्च लिङो निमित्तं यतस्तत्र गर्हायामित्यनुवर्त्तते तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ लृङ् भविष्यतीत्यधिक्रियते अत्रासाधुत्वं क्रियायाः तद्विरुद्धसाधुत्वाभियोगोपनिपातादतिपत्तिर्गम्यते तदेव साधुत्वं दर्शयति ॥ १ ॥ ज० म०

अथ धीमधिकृत्योच्यते तस्याः परमते लृङिति संज्ञा

तामुत्क्षिप्येत्यादि । ततोऽनन्तरं वह्निस्तां मैथिलीं उत्क्षिप्य हस्ताभ्यामाकाशे उद्धृत्य राममुक्तवान् किन्तदित्याह हे काकुत्स्थ ! दयितां प्रियां साध्वीं पतिव्रतां त्वं कथमाशङ्कितवान् तदयुक्तमाशङ्कितं क्रियासम्भवे धीति धी अत्र धात्वर्थस्यानिष्पत्तिर्वाक्यादेव गम्यते ॥ १ ॥ भ०

नाभविष्यदियं शुद्धा यद्यपास्यमहं ततः ।
न चैनां पक्षपातो मे धर्म्मादन्यत्र राघव ! ॥ २ ॥
अपि तत्र रिपुः सीतां नार्थयिष्यत दुर्म्मतिः ।
क्रूरं जात्ववदिष्यच्च जात्वस्तोयत् श्रियं स्वकाम् ॥ ३ ॥

नेत्यादि । यद्यहमेनां नैवापास्यं नैव रक्षितवान् ततोऽरक्षणादियं शुद्धा नाभविष्यद् न भूता येनैव मया रक्षिता तेनेयं शुद्धेति भावः हेतुहेतुमतोर्लिङ्वत्यतः हेतुर्हेतुमांश्च लिङो निमित्तं तत्र पालनस्य परिशुद्धेश्च हेतुहेतुमत्त्वे लिङ् निमित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ् तत्र बोताप्योरिति विकल्पेनाधिक्रियते अत्रापालनोपनिपातादविपत्तिर्गम्यते तदतिपाताद्धेतुमतोऽपि पक्षपातात् त्वयैवमाचरितमिति चेदाह हे राघव ! धर्म्मादन्यत्र अधर्म्मे न मे पक्षपातोऽनुरागः ॥ २ । ज०म०

आशङ्कां व्यावर्त्तयन्नाह

नाभविष्यदित्यादि । यदि इयं सीता शुद्धा नाभविष्यत् न भूतवती तदाहमेनां अधक्ष्यं दग्धवानस्मि दहौदाहे दाहे धः झमान्तस्येति धः हे राघव धर्म्मादन्यत्र मे मम पक्षपातो नास्त्येव अपितु धर्म्माश्रित एव ॥ २ ॥ भ०

इदानीं सीतारावणयोर्यच्चेष्टितमासीत् तज्ज्ञानेनावधार्य प्रकाशयन्नाह

अपीत्यादि । तत्र रिपुः स भवान् रिपुः स रावणः भवच्छब्दोऽर्थाद्गम्यते तेनेतराभ्योऽपि दृश्यन्त इति तत् अपि बाढं नार्थयिष्यत दुर्मतिः यद्यदुर्म्मतिरदुष्टचेता अभविष्यत् तदा सीतां बाढं नार्थयिष्यत भार्या मम भवेति न प्रार्थितवान् उताप्योः समर्थयोरिति अत्रापिशब्दो बाढार्थः लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ् तत्र बोताप्योरिति अनुवर्त्तते अत्रार्थनक्रियायाः तद्धिरुद्धदुर्म्मतित्वोपनिपातादतिपत्तिर्गम्यते अर्थनमर्थः याचनं तत्करोतीति णिच् नाहमवकल्पयामि यद्यदुर्म्मतिरभविष्यत् क्रूररूपं जातु कदाचित् नावदिष्यत् नोक्तवान्

सङ्कल्पं नाकरिष्यच्च तत्रेयं शुद्धमानसा ।
तथामर्षमवाप्स्यस्त्वं राम ! सीतानिबन्धनम् ॥ ४ ॥

श्रियं विभूतिं स्वकामात्मीयां ईदृशी मे विभूतिरिति नास्तोष्यत् न स्तु-तवान् स्तुतवांश्च जातुयदोर्लिङ् इत्यत जातु शब्दोऽनवक्लृप्तिश्च लिङो निमित्तं तत्रानवक्लृप्त्यमर्षयोरिति वर्त्तते अत्र क्रूराभिधानक्रियायाविभू-त्यास्तवनक्रियायाश्च तद्विरुद्धदुर्मतित्वोपनिपातादतिपत्तिः केचित् ङपिजा-त्वोरित्येतदुदाहरन्ति तदयुक्तं तस्यालिङ्निमित्तत्वात् ॥ २ ॥ ज० म०

अपि तत्रेत्यादि । तत्र लङ्कायां रिपूरावणः सीतामपि दुर्म्मति-त्वात् नार्थयिष्यत न प्रार्थितवान् अपितु प्रार्थितवानेव क्रूरं परुषं जातु कदाचिन्नावदिष्यत् नोक्तवान् अपितु उक्तवानेव स्वकामात्मीयां श्रियं ना-स्तोष्यत् अपितु ममेदृशी महती सम्पत्तिरिति स्तुतवानेव अत्र निषिद्धस्य प्रार्थनादिधात्वर्थस्यानिष्पत्तेस्ली ॥ २ ॥ भ०

सङ्कल्पमित्यादि । तत्रेयं शुभमानसेति नाहमवकल्पयामि यदीयं शुद्धमानसा नाभविष्यत् तत्र तस्मिन् रावणे इत्थं प्रीयमाणेऽपि सङ्कल्पम-भिप्रायमकरिष्यत् कृतवती स्यात् न च कृतवती शुद्धमानसत्वात् सत्याम-र्षमवाप्स्यस्त्वमिति हे राम ! न मर्षयामि यद्यशुद्धमानसा अभविष्यत् तदा सीतानिबन्धनं सीताहेतुकम् अमर्षं क्रोधं सत्यंभूतमवाप्स्यस्त्वं प्राप्तः स्याः तत्तु सत्यं यतः शुद्धमानसा अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्र अन-वक्लृप्त्यमर्षयोर्लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते वा लृङ् तत्र वोताप्योरित्यधिक्रियते अत्र सङ्कल्पक्रियायाः सत्यामर्षक्रियायाश्च त-द्विरुद्धशुद्धमानसत्वोपनिपातादतिपत्तिः ॥ ४ ॥ ज० म०

सङ्कल्पमित्यादि । तत्र इत्थं प्रयतमाने रावणे सङ्कल्पं सङ्गमाभि-प्रायमियम् सीता नाकरिष्यत् न कृतवती यत इयं शुद्धमानसा शुद्धहृद-यत्वात् धात्वर्थस्यानिष्पत्तिः हे राम ! सीता निबन्धनं अमर्षं क्रोधं अवाप्स्यः अवाप्तवानसि इदं तथा सङ्कल्पक्रियायामसत्यां क्रोधस्यानिष्प-त्तिरत्र वाक्याद्गम्यते ॥ ४ ॥ भ०

त्वयाद्रक्ष्यत किं नास्याः शीलं संवसता चिरम्।
अदर्शिष्यन्त वा चेष्टाः कालेन बहुना न किम्॥ ५॥
यावज्जीवमशोचिष्यो नाहास्यस्त्वेदिदन्तमः।
भानुरप्यपतिष्यत् क्षामचोभिष्यत चेदियम्॥ ६॥

अन्यथाखिन्वस्तुनि नाहमेवैकः प्रमाणं भवानपि प्रमाणमेवेति दर्शयन्नाह

त्वयेत्यादि। किं नाम तच्छीलं तच्चरित्रं यदस्याः सीतायाः शीलं चिरं कालं सम्वसता त्वया नाद्रक्ष्यत नोपलब्धमेव चेतोधर्म्मत्वान्नोपलब्धमिति चेत् किं वा नाम चेष्टाः शीलनिबन्धनाः क्रियाः बहुनापि कालेन त्वया नादर्शिष्यन्त न दृष्टा अभूवन् अपितु दृष्टा एव किं वृत्ते लृङ्लृटाविति किंशब्दो विभक्त्यन्तोगर्हाँच लिङ्निमित्तं तत्र गर्हायामित्यनुवर्त्तते तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् कर्म्मण्येव चिण्वदिट् अत्र शीलानुपलब्धिक्रियायाश्च तद्विरुद्धचिरवासोपनिपाताद्‌तिपत्तिर्गस्यते तथाहि शीलं संवसता त्वयं तच्च कालेन भूयसेति॥ ५॥ ज०म०

त्वयेत्यादि। अस्याः सीतायाः शीलं चरित्रं चिरं चिरकालं संवसता सहवासं कुर्व्वता त्वया किं नाद्रक्ष्यत नोपलब्धमभूत् अपितूपलब्धमेव चेतोधर्म्मत्वान्नोपलब्धमिति चेदाह अस्याश्चेष्टाः क्रिया वा किं बहुना कालेन नादर्शिष्यन्त अपितु दृष्टा एव अत्र शीलचेष्टादर्शनस्य धात्वर्थस्य संवासेनानिष्पत्तिर्व्विक्रियाद्गम्यते हनगर्हयो च इति पचे लिङ्॥ ५॥ भ०

यावदित्यादि। अन्यच्च लोकस्याज्ञानमूलं परगृहोषितेत्येतावतैवापरिशुद्धेत्यज्ञानबहुलमिदं तमः अज्ञानं यदि त्वं नाहासः न त्यक्ष्यसि तदास्या वैलक्षण्येन मरणादवश्यं यावज्जीवमशोचिष्यः शोचिष्यसि अतो मयाभिधीयमानः स्वयञ्च विमृशन् परिशुद्धा इयमित्यवेहि येन न शोचिष्यसि अत्र भविष्यदज्ञानात्यागो हेतुः यावज्जीवशो-

समपत्स्यत राजेन्द्र ! स्त्रैणं यद्यत्र चापलम् ।
लोकपाला इहायास्यंस्ततो नामी कलिद्रुहः ॥ ७ ॥

पतनं हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति नित्यं लृङ् अत्रागमनरूपागक्रियायास्तद्विरुद्धोपदेशकत्वमर्षितस्थानोत्पादनिपातादतिपत्तिर्गम्यते अन्यच्च अभूतवस्तूत्पादकसूचक उत्पातो भवति न च तथाभूतोऽस्तीति दर्शयन्नाह यदीयमक्षोभिष्यत् दुष्टचित्ताभूत् तदा भानुरपि स्वां पृथ्वीमपतिष्यत् गतोऽभूत् अत्रापि क्षोभो हेतुः भानुपतनं हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र क्षोभक्रियायास्तद्विरुद्धाक्षोभोपनिपातादतिपत्तिः ॥ ६ ॥ ज० म०

यावज्जीवमित्यादि । चेद्यदि इदं तमः परदृष्टोपिता सीता न परिशुद्धेति लोकापवादं त्वं नास्थास्यः न त्यक्ष्यसि तदा यावज्जीवं अशोचिष्यः शोकं करिष्यसि अन्यच्च चेद्यदि इयं सीता अक्षोभिष्यत् दुश्चेष्टा अभविष्यत् तदा भानुरपि ऊर्द्ध्वगामी अंशुमानपि स्वां पृथिवीं अपतिष्यत् तत्र पतितोऽभवदित्यर्थः ॥ ६ ॥ भ०

अन्यच्च सतेऽन साविता लोकपाला अदुष्टचित्तेषु सन्निधीयन्ते इति दर्शयन्नाह

समेत्यादि । स्त्रीणामिदं स्त्रैणं चापलं चारित्रखण्डनं तदत्र सीतायां हे राजेन्द्र ! समपत्स्यत सम्पन्नमभूत् ततः कारणादमी लोकपालाः एवमादयो मूर्त्तिमन्तः कलिद्रुहः पापस्य द्रोग्धारः इह नायास्यन् नागता अभूवन् चापलमत्र हेतुः लोकपालागमनं हेतुमत् ततो हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र चापलाचरणक्रियायास्तद्विरुद्धाचापलोपनिपातादतिपत्तिः ॥ ७ ॥ ज०म०

समेत्यादि । हे राजेन्द्र ! अत्र सीतायां यदि स्त्रैणं स्त्रीसम्बन्धि चापलं चाञ्चल्यं समपत्स्यत सम्पन्नमभूत् तदा अमी कलिद्रुहः पापद्रोहणशीला लोकपाला इन्द्रादयो मूर्त्तिमन्तो नायास्यन् आगता नाभूवन् ॥ ७ ॥ भ०

आश्चर्य्यं यच्च यच्च स्त्री कृच्छ्रे वर्त्स्यति तव ।
आसादस्त्वं विनष्टायां किं किमालप्स्यथाः फलम् ॥ ८ ॥
यत्र अत्रामरिष्यत् स्त्री साध्वसाद्दोषवर्ज्जिता ।

अन्यच्च योषित्सामान्येन नेयं द्रष्टव्येति दर्शयन्नाह

आश्चर्य्यमित्यादि । यच्च यत्र या भवति स्त्री यत्तव कृच्छ्रे मते सङ्कटेऽभिप्राये अवर्त्स्यत् प्रवृत्तिमती तदाश्चर्य्यं चित्रमेव वर्त्तते नान्येति भावः चित्रीकरणे चेत्यत्र यच्च यत्रयोरित्यनुवर्त्तते यच्च यत्र शब्द उपपदे गम्यमानं चित्रीकरणं लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र कृच्छ्राभिप्रायानुवर्त्तनक्रियाया स्तस्यां योषिदनुवर्त्तनं सामर्थ्याभावाद्गम्यते अन्यच्च स्वभावत एवं योषित् कातरा भवति ततश्च परगृहावस्थित्या दुष्टेति क्रोधादहमवक्षिप्तेति त्वासादस्त्वां विपन्नायां प्रच्छन्नविषयं गतायां सत्यां किंकिमालप्स्यथाः फलं नाहमवकल्पयामि किं नाम तत्र फलं यदालप्स्यसि नेवेत्यर्थः अनवकॢप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रापिशब्दात् किंवृत्तमनवकॢप्तिश्च लिङ्गो निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति लृङ् अत्र फलप्राप्तिक्रियायास्तद्वदन्यथासम्भावात् गम्यते किंकिलालप्स्यथाः फलमिति पाठान्तरं तदयुक्तं किंकिलास्त्यर्थेष्वित्यतस्य अलिङ्निमित्ताभावात् ॥ ८ ॥ ज० म०

आश्चर्य्यमित्यादि । तव मतेऽभिप्राये यत्र देशे काले वा स्त्री योषित् यच्च कृच्छ्रे एवंविधे व्यसनेऽवर्त्स्यत् वर्त्तमानाभवत् तदाश्चर्य्यं नह्येवंविधे कर्म्मणि पतिव्रता वर्त्तत इति भावः स्त्रीवर्त्तमानक्रियाया असामर्थ्यात् भावत्र्यानिष्पत्तिः अन्यच्च स्वस्त्रीपरगृहोषिता दुष्टेत्यग्नौ विक्षिप्तेति चेदाह त्वासादस्त्वां विपन्नायां मृतायां सत्यां त्वं नाम किं फलं अलप्स्यथाः नाहं दुष्टेति सीतायास्त्राधाभावेन विपत्तेरभावात् फललाभस्यानिष्पत्तिः ॥ ८ ॥ म०

अथवा नाहं दुष्टेत्यवगच्छन्त्या योषितस्तत्र एव नास्ति येन गर्हितं मरणमाचरेदिति दर्शयन्नाह

तदसूयारतौ लोके तस्या वाच्यास्पदं मृषा ॥ ९ ॥
अमंस्यत भवान् यद्वत्तथैव च पिता तव ।
नागमिष्यद्विमानस्थः साक्षाद्दशरथो नृपः ॥ १० ॥

यत्रेत्यादि। गर्हितमेतत् यच्च यत्र या भवति स्त्री दोषवर्जिता शुद्धचरित्रापि साध्वसात् पतिनाशादमरिष्यत् मृताभूत् नैवेत्यर्थः अदुष्टायाः साध्वसाभावात् गर्हायामित्यत्र यच्चयत्र शब्द उपपदं गर्हा च लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते वा लृङ् अत्र मरणक्रियायास्तद्विरुद्धसाध्वसे परनिपातादतिपत्तिर्मन्यते यदि हि त्रासान् म्रियेत दोष एव स्यादित्याह .तन्मरणं लोकेऽस्मिन्नसूयारतौ सत्स्वपि गुणेषु दोषाविष्करणपरे तस्या अदुष्टाया योषितः वाच्यास्पदं वचनीयाश्रयं मृषा अलीकमेव दुष्टेवेयम् मृषा अलीकमेव येन प्रच्छन्नमृतेति यदि मरणमकरिष्यत् मृषावचनीयास्पदमभविष्यत् इति क्रियातिपत्तौ योज्यं अन्यथा वाक्यमिदमशरीरकं स्यात् इदमवगच्छन्त्यानया प्रच्छन्नमरणं नानुष्ठितम् ॥ ९ ॥ ज० म०

यत्रेत्यादि। यच्च यत्र दोषवर्ज्जिता सुचरित्रा पतिव्रता स्त्री साध्वसात् अमरिष्यत् मृता भूता तस्या मृताया असूयावहे दोषाविष्करणरते लोके वाच्यास्पदं वचनीयाश्रयं तन्मरणं मृषा मिथ्या भविष्यति पतिव्रतायाः साध्वसाभावात् मरणक्रियाया अनिष्पत्तिः ॥ ९ ॥ म०

अमंस्यतेत्यादि। यद्वद्यथा भवानमंस्यत दुष्टेति ज्ञातवान् तथैतद्यदि नान्यथा तदा तव पिता दशरथः साक्षात्प्रत्यक्षो विमानस्थः सन् नागमिष्यत् नागतवान् स्यात् अत्र दुष्टताभवनं हेतुः दशरथागमनञ्च हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् अत्र दुष्टताभवनक्रियायास्तद्विरुद्धादुष्टत्वोपनिपातादतिपत्तिः ॥ १० ॥ ज० म०

अमंस्यतेत्यादि। भवान् यच्च अमंस्यत दुष्टेयमिति यच्च ज्ञातवान् तत्तथैव चेत् यदि तदा तव पिता दशरथो विमानस्थः सन् साक्षात् प्रत्यक्षं नागमिष्यत् नागतवान् अस्या दुष्टत्वाभावात् मरणस्यानिष्पत्तिः दुष्टत्वज्ञानेनागमनस्यानिष्पत्तिः ॥ १० ॥ म०

नाकल्पयत्सन्निधिं स्थाणुः शूली वृषभवाहनः ।
नान्वभाविष्यतान्येन मैथिली चेत्पतिव्रता ॥ ११ ॥
आनन्दयिष्यदागम्य कथं त्वामरविन्दसत् ।
राजेन्द्र ! विश्वसृड्धाता चारित्रे सीतया क्षते ॥ १२ ॥

नाकल्पयदित्यादि । मैथिली पतिव्रता सती चेद्यदि त्वत्तोऽन्येनान्वभाविष्यत परिभुक्ताभूत् चिक्लदिट् तदायं स्थाणुर्महादेवः शूली वृषभवाहनः व्यक्तचिह्नः सन् सन्निधिं सन्निधानं नाकल्पयत् न कृतवान् स्यात् तासिचक्लृप इति चकारात्स्येच परस्मैपदे लृङ् अन्यानुभवनं हेतुः स्थाण्वागमनं हेतुमत् पूर्ववत् क्रियातिपत्तौ लृङ् अत्रान्यानुभवनक्रियायास्तद्विरुद्धानन्यानुभवनोपपत्तिपातादतिपत्तिः ॥ ११ ॥ ज० म०

नाकल्पयदित्यादि । पतिव्रता मैथिली चेद्यदि त्वत्तोऽन्येन नान्वभाविष्यत अनुभूता नाभूत् तदा अयं शूली वृषभवाहने व्यक्तचिह्नः स स्थाणुर्महादेवः सन्निधिं सन्निधानं नाकल्पयत् न कल्पितवान् सीतायाः पतिव्रतात्वादन्यानुभवस्यानिष्पत्तिः अनुभूतत्वे सन्निधिकल्पनस्यानिष्पत्तिः वृद्भ्यो नेस्मे इति वचनात् कृपेः पम् वृनग्रवृद्वय च इबि सुवो मिण् ॥ ११ ॥ भ०

आनन्दयिष्यदित्यादि । हे राजेन्द्र ! सीतया चारित्रे क्षते कुत्सिते कृते सति एष धाता ब्रह्मा विश्वसृड् सर्वस्य जगतः स्रष्टा अरविन्दसत् कमलासनः सन् आगम्य त्वां कथमानन्दयिष्यत् दर्शनाशीर्वादादिभिरानन्दिभिरानन्दितवान् गर्हितमेतत् युक्तमागत्यानन्दयितुमित्यर्थः विभाषाकथमिलिङ्वेति कथं शब्दोगर्हे च लिङ्निमित्तं तस्मिन् क्रियातिपत्तौ भूते लृङ् अत्रानन्दनक्रियायास्तद्विरुद्धचारित्रक्षतोपनिपातादतिपत्तिः ॥ १२ ॥ ज० म०

आनन्दयिष्यदित्यादि । हे राजेन्द्र ! सीतया चारित्रे क्षते सति अरविन्दसत् पद्मासनो ब्रह्मा विश्वसृक् स्रष्टा धाता समस्तभुवनस्य धारयिता आगत्य त्वां कथमानन्दयिष्यत् दर्शनाशीर्वादादिभिः कथमानन्दिष्यन् पतितसंसर्गो हि निन्दामावहति सीतायाः व्यभचरितत्वे आनन्दस्यानिष्पत्तिः ॥ १२ ॥ भ०

प्रणमन् ब्रह्मणा प्रोक्तो राजकाधिपतिस्ततः ।
नाशोत्स्यन्मैथिली लोके नोचरिष्यदिदं यदि ॥ १३ ॥
नामोक्ष्याम वयं शङ्कामिहाधास्यन्न चेद्भवान् ।
किंवा चित्रमिदं युक्तं भवान् यदकरिष्यत ॥ १४ ॥

प्रणमन्नित्यादि । ततोऽनन्तरं राजकाधिपतिः राजसमूहानां पतिः राजकं राजसमूहः गोत्रोऽक्षेत्यादिना कुञ् रामः प्रणमन् ब्रह्माणमित्यर्थात् ब्रह्मणा प्रोक्तः मैथिली यदि इदं वह्निप्रवेशनं नाचरिष्यत् नानुष्ठितवती तदा लोके दुराराधे नाशोत्स्यत् न शुद्धाभूत् किन्तु शुद्धा शुधशौचे दिवादिः अत्राग्निप्रवेशाचरणं हेतुः अशोधनञ्च हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् अत्राग्निप्रवेशनाचरणक्रियायास्तद्विरुद्धाचरणोपनिपातादतिपत्तिः ॥ १३ ॥ ज० म०

प्रणमन्नित्यादि । प्रणमन् ब्रह्मणे प्रणामं कुर्व्वन् राजकाधिपती राजसमूहाधिपो रामो ब्रह्मणा प्रोक्तः किं तदित्याह मैथिली यदि इदं वह्निप्रवेशनं नाचरिष्यत् नानुष्ठितवती तदा लोके नाशोत्स्यत् शुद्धा नाभूत् शुध्यशौचे धात्वर्थस्यातानिष्पत्तिर्व्वाक्याद्गम्यते ॥ १३ ॥ भ०

नेत्यादि । चेद्यदि भवानिह सीतां नाधास्यत् न रोपितवान् अन्तर्भावितोऽत्र ण्यर्थः तदा वयं किं शुद्धा नेति शङ्कां नामोक्ष्याम न मुक्तवन्तः अस्मिन् वस्तुनि अग्निप्रमाणत्वेन लोको स्थक्षीयादित्येवमुक्तवान् अन्यथा ब्रह्मणः सर्व्ववेदित्वात् कथं शङ्का स्यात् अत्राधानं हेतुः शङ्कात्यागश्च हेतुमान् अस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् अत्राधानक्रियायास्तद्विरुद्धाधानोपनिपातादतिपत्तिर्गम्यते अथवा नाहमवकल्पयामि यदिदं परगृहोषिताया अग्निप्रवेशशोधनं युक्तं न्याय्यं तत् भवान् किं चित्रमकरिष्यत् विस्मयनीयं कृतवान् एव राज्ञः कस्य व्यवस्थार्थं विशेषे प्रवर्त्तनात् अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपीत्यत्रापिशब्दात् किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् अत्र चित्रीकरणक्रियाया अतिपत्तिस्तद्विरुद्धस्याचित्रीकरणस्योपनिपातादतिपत्तिर्गम्यते यदि भवान् परीक्ष्य सीतायाः परिग्रहणमकरिष्यत लोकोऽपि तथाकरिष्यत् ॥ १४ ॥ ज० म०

प्रावर्त्तिष्यन्त चेष्टाश्चेद्याथातथ्यवत्तव ।
अनुशास्ये त्वया लोके रामावर्त्स्यंस्तरां ततः ॥ १५ ॥
प्रणमन्तं ततो राममुक्तवानिति शङ्करः ।

नामोक्ष्यामेत्यादि । यदि भवानिह वह्नौ सीतां नाधास्यत् न धारितवान् तदा तस्यां शङ्कां वितर्कं वयमपि न मोक्ष्याम न मुक्तवन्तः अत्र धात्वर्थस्यानिष्पत्तिर्व्वाक्यादृश्यते इदं किंवा चित्रं किमाश्चर्य्यं यद्भवान् युक्तमकरिष्यत कृतवान् युक्तकरणत्वेन चित्रीकरणस्यानिष्पत्तिः ॥१४॥ भ०

प्रधानानुयायित्वाल्लोकस्येति दर्शयन्नाह

प्रावर्त्तिष्यन्तेत्यादि । चेद्यदि तव लोकव्यवस्थाकारिणश्चेष्टाः कर्म्माणि अयाथातथ्यवत् यथा अज्ञाना असमीक्ष्यकारितया प्रवर्त्तन्ते तद्वत्प्रावर्त्तिष्यन्त तथा प्रवर्त्तनात् त्वया आनुशास्ये व्यवस्थायां स्थाप्ये लोके हे राम ! तावच्चेष्टा अवर्त्स्यंस्तरां अतिशयेन प्रावर्त्तिष्यन्त नच तत्र प्रवृत्ताः अत्र रामचेष्टाप्रवर्त्तनं हेतुः लोकचेष्टाप्रवर्त्तनञ्च हेतुमत् तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते भविष्यति लृङ् अत्रापि परीक्ष्य स्वीकरणलक्षणक्रियायास्तद्विरुद्धपरीक्षितोपादानादतिपत्तिः अयाथातथ्यवदिति वतिप्रत्ययान्तं क्रियाविशेषणं यथा तथा परयोः पर्य्यायेणेति नञः पर्य्यायेण वृद्धिः अवर्त्स्यंस्तरामिति तिङन्तेत्यातिशयिकस्तरः किमेत्तिङिल्याम् न क्यप्रशानिति रुत्वं पूर्वस्यानुस्वारः ॥ १५ ॥ ज० म०

प्रावर्त्तिष्यन्तेत्यादि । हे राम ! तव व्यवस्थाकारिणश्चेत् यदि चेष्टाः कर्म्माणि अयाथातथ्यवत् प्रावर्त्तिष्यन्त यथा अज्ञस्यासमीक्ष्यकारितया यथा प्रवर्त्तन्ते तद्वत्प्रवृत्ता अभूवन् तदयाथातथ्यप्रवर्त्तनात् त्वयाऽनुशास्ये दुष्टव्यवस्थायां स्थाप्यमाने लोके एवंविधाश्चेष्टा अवर्त्स्यंस्तरां अतिशयेन प्रवृत्ता अभविष्यन् किमेत्याञ्चेति चतराम् अत्र धात्वर्थस्यानिष्पत्तिर्वाक्याद्गम्यते ॥ १५ ॥ भ०

प्रणमन्तमित्यादि । ततो ब्रह्मवचनानन्तरं शङ्करो महादेवः वक्ष्यमाणम् वचनं राममुक्तवान् प्रणमन्तं तमेव शङ्करमित्यर्थात् किन्नाम तत् यथा ध्यात्मानम् नारायणमजं नित्यं अस्मिन् प्रादुर्भावे भवान्नाभोत्‌स्यत न

किं नारायणमात्मानं नाभोत्स्यत भवानजम् ॥ १६ ॥
कोऽन्योऽकर्त्स्यदिह प्राणान् दृप्तानाञ्च सुरद्विषाम् ।
को वा विश्वजनीनेषु कर्म्मसु प्राघटिष्यत ॥ १७ ॥
दैत्यक्षये महाराज ! यच्च यत्राघटिष्यथाः ।
समाप्तिं जातु तत्रापि किं नानेष्यस्त्वमीहितम् ॥ १८ ॥

बुद्धवान् अपितु तथाविधं कर्म्म कुर्वन् ज्ञातवानेव अत्र नारायणानबोधक्रियायाः तद्विरुद्धबोधनोपनिपातादतिपत्तिः ॥ १६ ॥ ज०म०

प्रणमन्तमित्यादि । ततो ब्रह्मवचनानन्तरं प्रणमन्तं शङ्कराय प्रणामं कुर्व्वन्तं रामं शङ्कर उक्तवान् किम्बदित्याह भवान् अजं नारायणस्वभावं आत्मानं किं नाभोत्स्यत न बुद्धवान् अपितु तथाविधं कर्म्म कुर्वन् ज्ञातवानेव बुध्यौङ्‌ अवेदने भभान्तस्येति तः अत्र नारायणबोधस्यानिष्पत्तिः ॥ १६ ॥ म०

तदेव दर्शयन्नाह

क इत्यादि । यदि नारायणो न भवान् तदा तस्मादन्यः को नाम सुरविद्विषां राक्षसानां दृप्तानां प्राणानकर्त्स्यत् छिन्नवान् कृतीच्छेदने नैव विश्वजनीनेषु सर्वलोकहितेषु कर्म्मसु अनुग्रहलक्षणेषु को नाम प्राघटिष्यत चेष्टितवान् अत्राच्छेदनक्रियाया अघटनक्रियायाश्च तद्विरुद्धं च्छेदनघटनोपनिपातादतिपत्तिः सर्व्वत्र किंवृत्ते लङ्‌लृटाविति क्रियातिपत्तौ भूते गर्हायां लृङ् ॥ १७ ॥ ज०म०

नारायणत्वं दर्शयति

कोऽन्य इत्यादि । यदि भवान् नारायणो न स्यात् तदा तस्मादन्यः क इह जगति दृप्तानां सुरद्विषां रक्षसां प्राणान् अकर्त्स्यत् छिन्नवान्न कोऽपीत्यर्थः अन्यच्च विश्वजनीनेषु सर्व्वलोकहितेषु कर्म्मसु वा कः प्राघटिष्यत चेष्टितवान् न कोऽपीत्यर्थः ॥ १७ ॥ म०

दैत्यक्षय इत्यादि । हे महाराज ! नैवेदमवकल्पयामि दैत्यक्षयनिमित्तम् यच्च अत्र त्वमघटिष्यथाः यां पुनरात्मनो घटनां करिष्यसि किन्तु पुनः प्रादुर्भावे घटिष्यते तत्रापि प्रादुर्भावत्वमीहितं चेष्टितं जातु

तातं प्रसाद्य कैकेय्या भरताय प्रपीड़ितम् ।
सहस्रचक्षुषं रामो निनंसुः परिदृष्टवान् ॥ १९ ॥
प्रेता वरेण शक्रस्य प्राणन्तः कपयस्ततः ।
संजाताः फलिनानम्ररोचिष्णुद्रुमसद्रवः ॥ २० ॥

कदाचित् समाप्तिं सिद्धिं नानेष्यः किं न नेष्यसि जातुयदोर्लिङिति जातुयक्लृतौ अनवक्लृप्तिश्च लिङ्गिमित्तं तस्मिन् क्रियातिपत्तौ भविष्यति नित्यं लृङ् अत्राघटनक्रियायाश्चातिपत्तिः ज्ञानेनोपलब्धं भविष्यत्प्रादुर्भावसमाप्तिनयनयोस्तद्विरुद्धयोरुपनिपातात् ॥ १८ ॥ ज०म०

दैत्यचये इत्यादि । हे महाराज ! दैत्यचयनिमित्तं यत्न त्वं अघटिष्यथाः अनुष्ठितवानसि तत्र जातु कदाचित्त्वं ईहितं ईप्सितं किं समाप्तिं पूर्णतां न अनेष्यः न नीतवानसि अपितु नीतवानेव अत्र घटनक्रियायाः समाप्तिक्रियायाश्च ज्ञानानुपलब्धत्वादनिष्पत्तिः ॥ १८ ॥ भ०

तातमित्यादि । तातं दशरथं कैकेय्या प्रपीड़ितं सन्तापितं भरताय भरतार्थं राज्येऽभिषिच्यतामिति प्रसाद्य तद्विषये चित्तकालुष्यं तत्त्यजयित्वा रामः सहस्रचक्षुषं इन्द्रं परिदृष्टवान् संदृष्टवान् निनंसुः नन्तुमिच्छुः ॥ १९ ॥ ज०म०

तातमित्यादि । तातं दशरथं प्रसाद्य कैकयीविषये चित्तमालिन्यं त्याजयित्वा रामः सहस्रचक्षुषं इन्द्रं दृष्टवान् तातं कीदृशं कैकेय्या भरतार्थं राज्येऽभिषिच्यतामिति प्रपीड़ितं निनंसुः प्रणामं कर्त्तुमिच्छुः ॥१९॥भ०

प्रेता इत्यादि । ततः प्रणामानन्तरं शक्रस्य प्रसन्नस्य वरेण कपयः संग्रामे प्रेताः संग्रामे मृताः प्राणन्तो जीवन्तः सञ्जाताः संवृत्ताः कीदृशा इत्याह फलिनाः फलवन्तः फलबर्हाभ्यामिनच् अतएव नम्राः नमनशीलाः रोचिष्णवः दीपनशीलाः ये द्रुमास्तेषु सद्रवः सदनशीलाः दाधेट्सीत्यादिना सदे रुः ॥ २० ॥ ज० म०

प्रेता इत्यादि । ततोऽनन्तरं प्रसन्नस्य शक्रस्य वरेण युद्धे प्रेताः कपयः प्राणन्तो जीवन्तः सञ्जाताः कीदृशाः फलिनः फलवन्तः अतएव फलभारेणानम्रा आनमनशीला रोचिष्णवो रोचनशीला ये द्रुमास्तेषु सद्रवः सदनशीलाः अतद्यदसिधेदोरुरिति सदेरुः ॥ २० ॥ भ०

भ्रमरकुलाकुलोल्वणसुगन्धिपुष्पतरु-
स्तरुणमधूकसम्भवपिशङ्कितुङ्गशिखः ।
शिखरशिलान्तरालपरिक्लृप्तजलावसरः-
सरसफलश्रियं वितताम सुवेलगिरिः ॥ २१ ॥

संवाद्भिः सकुसुमरेणुभिः समीरै-
रानम्रैर्बहुफलधारिभिर्वनान्तैः ।
स्रोतद्भिर्मधुपटलैश्च वानराणा-

भ्रमरेत्यादि । वरेण च स सुवेलगिरिः सरसां अभिनवां फलश्रियं विभूतिं वितताम विस्तृतवान् भ्रमरकुलैराकुला व्याप्ता उल्वणाः सुगन्धयश्च सपुष्पास्तरवो यत्र गिरौ तरुणानां अभिनवानां मधूकानां यः सम्भवः तेन पिशङ्कितास्तुङ्गाः शिखाः शिखराणि यत्र शिखरशिलानामन्तरालेषु परिक्लृप्ता जलावसरा जलधारा यत्र जलमपसरत्येभ्य इति ऋदोरप् ॥ २१ ॥ ज० म०

भ्रमरकुलेत्यादि । सुवेलगिरिरचिरेण सरसानां फलानां श्रियं विततवान् कीदृशः भ्रमरसमूहेन व्याप्ता उल्वणशोभनगन्धयुक्ताः पुष्पसङ्कीर्णा वृक्षा यत्र अभिनवानां मधूकपुष्पाणां सम्भवोऽस्तित्वं तेन पिशङ्किता तुङ्गा उच्चा शिखा उच्चशिखा यत्र शिखरशिलान्तरालेषु परिक्लृप्ता जलावसरा जलधारा यत्र ॥ २१ ॥ म०

संवाद्भिरित्यादि । सम्भवत्यस्मादिति सम्भवः रिपुवधः सम्भवो यस्य प्रमोदस्य स वानराणामाप्यानः वृद्धिं गतः व्यवस्थितविभाषाविज्ञानात् सोपसर्गस्य प्यायतेरिति पीभावो न भवति ओदितश्चेति निष्ठानत्वं कैराप्यानः समीरैः सकुसुमरेणुभिः संवाद्भिः वहद्भिः वनान्तैः फलभरधारिभिः अतएवानम्रैः मधुकरपटलैश्च स्रोतद्भिः साध्वित्यर्थात् ॥ २२ ॥ ज० म०

सम्वाद्भिरित्यादि । वानराणां रिपुवधसम्भवः प्रमोदः समीरादिभिः आप्यानो वृद्धिं गतः कीदृशैः समीरैः संवाद्भिः सम्यगवपरीतेन वहद्भिः पुष्पपरागसहितैः वनान्तैः कीदृशैः वरफलशालिभिः उत्तमफलयुक्तैः अतएवानम्रैः आनमनशीलैः मधुपटलैः कीदृशैश्च स्रोतद्भिः क्षरद्भिः ॥ २२ ॥ म०

माप्यानो रिपुबधसम्भवः प्रमोदः ॥ २२ ॥

आयान्त्यः स्वफलभरेण भङ्गुरत्वं
भृङ्गालीनिचयचिता लतास्तरूणाम् ।
सामोदाः क्षितितलसंस्थितावलोप्या
भोक्तॄणां श्रममुदयं न नीतवत्यः ॥ २३ ॥

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्प्रदर्शनो नाम
एकविंशतितमः सर्गः ।

आयान्त्य इत्यादि । तरूणां लताः स्वफलभरेण भङ्गुरत्वं स्वभेद्यत्वमायान्त्यः गच्छन्त्यः सामोदाः अतएव भृङ्गालीनिचयचिताः क्षितितलसंस्थितैरेव अवलोप्तुं शक्याः भोक्तॄणां कपीनां श्रमं चित्तकायक्लेशं उदयं वृद्धिं न नीतवत्यः विनीतवत्य इति पाठान्तरं उत्पूर्वादयतेः कर्त्तर्य्यच वृद्धिमुपगच्छन्तं श्रममपनीतवत्य इत्यर्थः ॥ २३ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां तिङन्तकाण्डे लङ्-
विलसितं नामाष्टमः परिच्छेदः ।
काव्यस्य सीतासंशोधनं नाम एकविंशः सर्गः ।

आयान्त्य इत्यादि । तरूणां लता भोक्तॄणां श्रमं उदयं वृद्धिं न नीतवत्यः न प्रापिताः अपनीतवत्य इत्यर्थः विनीतवत्य इति क्वचित्पाठः कीदृश्यः लताः फलभरेण भङ्गुरत्वं स्वयमेव भेद्यत्वं आयान्त्यः प्राप्नुवत्यः भ्रमरश्रेणीसमूहव्याप्ताः आमोदसहिताः क्षितितलसंस्थितैरेवावलोप्याः अवलोप्तुं शक्याः ॥ २३ ॥ भ०

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेन-
कृतायां मुग्धबोधिन्यां भट्टिटीकायामेकविंशतितमः सर्गः ।

---

# द्वाविंशः सर्गः ।

--- --- ---

ततो रामो हनूमन्तमुक्तवान् हृष्टमानसम् ।
अयोध्यां श्वः प्रयातासि कपे ! भरतपालिताम् ॥ १ ॥
गाधितासे नभो भूयः स्फुटन् मेघघटावलि ।
ईक्षितासेऽम्बसां पत्युः पयः शिशिरशीकरम् ॥ २ ॥

इतः प्रभृति लुटमधिकृत्य विलसितमाह तत्र भविष्यदनद्यतने लुट्

तत इत्यादि । ततः सीतासंशोधनानन्तरं रामो हनूमन्तं हृष्टमानसं स्वामिकार्य्यस्य निष्पादितत्वात् उक्तवान् हे कपे ! श्वोदिने अयोध्यां भरतपालितां प्रयातासि गन्तासि तासस्त्योर्लोपः ॥ १ ॥ ज० म०

अथ डीमधिकृत्योच्यते तस्याः परमते लुट्संज्ञा

तत इत्यादि । ततः सीताशुद्ध्यनन्तरं रामो हनूमन्तं उक्तवान् कीदृशं प्रमुदितहृदयं स्वामिकार्य्यस्य निष्पादितत्वात् किमुक्तवानित्याह हे कपे ! भरतरक्षितां अयोध्यां रामपुरीं श्वोऽनागतेऽह्नि प्रयातासि गमिष्यसि भवद्भूतभव्ये इति भविष्यति डी भविष्यत्सामान्ये ह्यभिधानात् श्व इत्यस्य न वैयर्थ्यम् ॥ १ ॥ भ०

गाधितास इत्यादि । भूयः पुनरपि नभः गाधितासे प्रस्थातासे गाधृप्रतिष्ठालिप्सयोरित्यनुदात्तेत् त्वद्गमनवातात् स्फुटन्त्यः खण्डशो भवन्त्यः मेघघटा मेघपङ्क्तयो यत्र नभसि अम्भसां पत्युः समुद्रस्य पयः शिशिरशीकरं वीक्षितासे द्रष्टासि ॥ २ ॥

गाधितासे इत्यादि । भूयः पुनरपि नभ आकाशं गाधितासे गाधृधातुः प्रतिष्ठापन्ययोः कीदृशं नभः स्फुटन्त्यः खण्डशो भवन्त्यः मेघघटा मेघावल्यो यत्र अम्भसां पत्युः समुद्रस्य शीतलकणकं जलं ईक्षितासे ॥ २ ॥ भ०

सेवितासे प्लवङ्ग ! त्वं महेन्द्राद्रेरधित्यकाः ।
व्युत्क्रान्तवर्त्मनो भानोः सहज्योत्स्नाः कुमुद्वतीः ॥३॥
चन्दनद्रुमसंछन्ना निराकृतहिमश्रथाः ।
दर्शितारस्त्वया ताश्च मलयोपत्यकाः शुभाः ॥ ४ ॥
प्रतन्वरः कोमला विश्व्ये सहितारः स्यदन्न ते ।

सेवितास इत्यादि । हे प्लवङ्ग ! भानोरादित्यस्य व्युत्क्रान्तवर्त्मनः अत्युच्चत्वादतिक्रान्तमार्गस्य महेन्द्राद्रेः अधित्यकाः उपरिभागान् कुमुद्वतीः विद्यमानकुमुदाः सह ज्योत्स्नया सह पश्चाद्बिर्थवशसमासः सज्योत्स्ना वा कुमुद्वत्यः कुमुदाकरा यासु अधित्यकासु तास्त्वं सेवितासे अनुभवितासि प्लवं गच्छतीति खच् प्लवङ्गतीति कर्त्तरि अच्वा उखउखीतप्रत्य वर्ग, पठ्यते ॥ ३ ॥ ज० म०

सेवितासे इत्यादि । हे प्लवङ्ग ! हनूमन् ! महेन्द्रपर्वतस्य ऊर्द्ध्वभूमीः सेवितासे महेन्द्राद्रेः कीदृशस्य भानोः सूर्य्यस्य उल्लङ्घितमार्गस्य उच्चत्वात् अधित्यकाः कीदृशीः ज्योत्स्नाकुमुद्वतीभ्यां सह वर्त्तमानः ॥ ३ ॥ भ०

चन्दनेत्यादि । ताश्च पूर्वं दृष्टाः मलयोपत्यकाः मलयासन्ना भुवः शुभाः चन्दनद्रुमसंछन्नत्वात् निराकृतहिमश्रथाः तिरस्कृतचन्द्राः त्वया दर्शितारः श्वो द्रष्टव्याः कर्म्मणि लुट् चिण्वद्इट् च इति चेति सकारलोपः हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः चन्द्रः श्रन्थसेचनप्रतिहर्षयोरिति कर्म्मण्यण् अचोदेशेत्यादिना अनुनासिकलोपोनिपात्यते ॥ ४ ॥ ज०म०

चन्दनद्रु इत्यादि । त्वया ताः पूर्वं दृष्टा मलयाद्रेरासन्नभूमयो द्रष्टव्याः हनग्रहदृशश्च इति चिण् कीदृश्यः चन्दनद्रुमव्याप्ताः अतएव शुभाः सुखदत्वात् निराकृतौ हिमश्रथचन्द्रौ याभिः हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः श्रन्थगलोपे इत्यस्य घञन्तस्य स्यदैधावोदेत्यादिना निपातनाद्रूपम् ॥ ४ ॥ भ०

- प्रतन्व्य इत्यादि । विश्व्येत्र लतास्तवकशाखिन्यः सकुसुमस्तबकोपेताः मधुलेहिकुलाकुलाः भ्रमरकुलसङ्कुलाः प्रतनुत्वात्कोमलत्वाच्च गच्छतस्ते

लतास्तवकशालिन्यो मधुलेहिकुलाकुलाः ॥ ५ ॥
द्रष्टासि प्रीतिमानारात् सखिभिः सह सेविताम् ।
सपक्षपातं किष्किन्ध्यां पूर्वक्रीड़ां स्मरन् मुहुः ॥ ६ ॥
त्वया सन्दर्शितारौ ते माल्यवद्दण्डकावने ।
उपद्रुतश्चिरं दुःखैर्ययोः क्लिशितवानहम् ॥ ७ ॥

तव रयं जवं न सहितारः न सहिष्यन्ते रयो जव इत्यानुनासिकलो-पोनिपात्यते ॥ ५ ॥ ज० म०

प्रतन्व्य इत्यादि । विन्ध्यपर्व्वते लतास्ते तव रयं वेगं न सहिष्यन्ते कीदृश्यः प्रतन्व्यः अतिकृशाः कोमला इत्यः स्तवकयुक्ताः अतएव भ्रमर-समूहव्याप्ताः ॥ ५ ॥ भ०

द्रष्टासीत्यादि । किष्किन्ध्याञ्च आरात् नातिदूरे द्रष्टासि प्रीतिमान् जातप्रीतिः सन् सखिभिर्मित्रैः सह सेवितां अनुभूतां एवञ्च कृत्वा पूर्व्व-क्रीड़ां स्मरन् मुहुः शेषत्वेन विवक्षितत्वात् षष्ठी न भवति सपक्षपातं सा-नुरागमिति क्रियाविशेषणम् ॥ ६ ॥ ज० म०

द्रष्टासीत्यादि । आराद्दूरे मित्रैः सहानुभूतां किष्किन्ध्यां सपक्ष-पातं सानुरागं यथा स्यात्तथा त्वं पूर्वक्रीड़ां मुहुर्व्वारं वारं स्मरन् प्रीतियुक्तः सन् द्रष्टासि वद्रौऽकिदिति रः ॥ ६ ॥ भ०

त्वयेत्यादि । माल्यवान् पर्वतः दण्डकावनं दण्डकेति नामारण्यं ते त्वया सन्दर्शितारौ कर्म्मणि लुट् ययोर्माल्यवद्दण्डकावनयोः व्यवस्थितैः दुःखैः सीतावियोगदुःखैः चिरमुपद्रुतोऽभिभूतः सन् अहं क्लिशितवान् पीड़ामनुभूतवान् क्लिशः क्त्वानिष्ठयोरितीट् रुदविदेत्यादिना कित्त्वम् ॥७॥ ज०म०

त्वयेत्यादि । माल्यवान् पर्व्वतो दण्डकावनञ्च ते त्वया द्रष्टव्ये हन-स्यहश्च इति मिण् ययोर्माल्यवद्दण्डकावनयोरहं चिरं चिरकालं दुःखैः सीतावियोगजैर्दुःखैरुपद्रुतः सन् अहं क्लिशितवान् मुक्लिशेति पक्षे इट् ॥ ७ ॥ भ०

आमारौ भवता रम्यावाश्रमौ हरिणाकुलौ ।
पुण्योदकद्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः ॥ ८ ॥
अतिक्रान्ता त्वया रम्यं दुःखमत्रेस्तपोवनम् ।
पवित्रचित्रकूटेऽद्रौ त्वं स्यातासि कुतूहलात् ॥ ९ ॥
ततः परं भरद्वाजो भवता दर्शिता मुनिः ।
द्रष्टारश्च जनाः पुण्या यामुनाम्बुहृतांहसः ॥ १० ॥
स्यन्त्वा स्यन्त्वा दिवः शम्भोर्मूर्ध्नि स्कन्त्वा भुवं गताम् ।
गाहितासेऽथ पुण्यस्य गङ्गां मूर्त्तिमिव द्रुताम् ॥ ११ ॥

आमारावित्यादि । सुतीक्ष्णशरभङ्गयो रम्यावाश्रमौ हरिणाकुलौ पुण्यैरुदकैर्द्विजैः पक्षिभिश्चाकीर्णौ भवता आमारौ प्राप्तव्यौ ॥ ८॥ ज०म०

आमारावित्यादि । भवता सुतीक्ष्णभङ्गयोर्मुन्योराश्रमौ आमारौ प्राप्तव्यौ रमणीयौ मृगव्याप्तौ पुण्यजलविप्रव्याप्तौ ॥ ८ ॥ भ०

अतिक्रान्तेत्यादि । अत्रेश्च तपोवनं रम्यत्वात् त्वया दुःखमतिक्रान्ता अतिक्रमितव्यं चित्रकूटे चाद्रौ पवित्रे पुण्ये कुतूहलात् त्वं स्यातासि ॥ ९ ॥ ज०म०

अतिक्रान्तेत्यादि । अत्रेर्मुनेरम्यं तपोवनं त्वया दुःखं यथा स्यात्तथा अतिक्रान्ता अतिरमणीयत्वात् कष्टेन त्वं त्यक्ष्यसीति भावः । पवित्रे चित्रकूटपर्वते च त्वं कुतूहलात् स्यातासीत्यर्थः ॥९॥ भ०

तत इत्यादि । ततः चित्रकूटात्परं गच्छता भवता भरद्वाजो मुनिर्दर्शिता द्रष्टव्यः जनाश्च पुण्याः यमुनाम्बुहृतांहसः यमुनाजलस्नानात्पानाच्च क्षयितपापाः द्रष्टारो द्रष्टव्या वा चिरवदिट्च ॥ १० ॥ ज०

तत इत्यादि । ततश्चित्रकूटगमनात्परं भरद्वाजो मुनिस्त्वया द्रष्टव्यः तत्र पुण्ययुक्ता जनाश्च द्रष्टारो द्रष्टव्याः यमुनाजलविनाशितपापाः॥१०॥भ०

स्यन्त्वेत्यादि । अथानन्तरं या गङ्गा दिवः स्यन्त्वा स्यन्त्वा स्रुत्वा स्रुत्वा आभीक्ष्ण्येऽन स्रुत्वेति चकारात् क्त्वाच आभीक्ष्ण्ये च द्वे भवतः शम्भोर्मूर्ध्नि स्कन्त्वा गत्वा क्षितिं गता क्लिशस्कन्दस्यन्दोरित्यनुनासिकलोप-

तमसाया महानीलपाषाणसदृशत्विषः ।
वनान्तान् बहु मन्तासे नागराक्रीड़शाखिनः ॥ १२ ॥
नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जराम् ।
विलोक्य सरयूं रम्यां गन्तायोध्या त्वया पुरी ॥ १३ ॥
आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवम् ।

मातरः सह मैथिल्यास्तोष्टा च भरतः परम् ॥ १४ ॥

प्रतिषेधः तां पुण्यस्य मूर्त्तिमिव द्रुतां गाहितासे स्नातुम् विलोभितासि ॥ ११ ॥ ज० म०

स्रन्त्वेत्यादि । अथानन्तरं गङ्गां गाहितासे तस्यामवगाहं करिष्यसि कीदृशीं दिवः स्वर्गात् स्रन्त्वा स्यन्त्वा सुत्वा स्नुत्वा शम्भोः शिरसि मूर्ध्नि क्रान्त्वा गत्वा क्षितिं गतां पुण्यस्य द्रवीभूतां मूर्त्तिमिव नक्षितुस्कन्दस्यन्द इति क्त्विनिषेधात् नलोपाभावः ॥ ११ ॥ भ०

तमसाया इत्यादि । तमसायाश्च नद्याः वनान्तान् वनोपकण्ठान् महानीलमणेस्तुल्यत्विषोऽतिनीलत्वात् नागराणां आक्रीडो रन्तव्यं तस्य शाखिनः बहुमन्तासे स्लाघितासे ॥ १२ ॥ ज०म०

तमसाया इत्यादि । त्वं तमसाया नद्या वनान्तान् वनप्रदेशान् बहु मन्तासे स्लाघितासे कीदृशान् अतिनीलत्वात् महानीलप्रस्तरतुल्यकान्तीन् नागराणां आक्रीडाः शाखिन उद्यानवृक्षा यत्र साखिण इति पाठे नागराणामाक्रीड़े रमणे साक्षिणः ॥ १२ ॥

नगरेत्यादि । नगरस्त्रियः अयोध्यास्त्रियः तासां स्तनेषु यत्पूर्वंन्यस्तं पश्चाद्धौतं कुङ्कुमं तेन पिञ्जरां कपिशां अतएव रम्यां सरयूं विविलोक्य अयोध्या पुरी त्वया गन्ता गन्तव्या ॥ १३ ॥ ज०म०

नगरेत्यादि । नगरस्त्रीणां अयोध्यास्त्रीणां स्तनेषु पूर्वं न्यस्तं पश्चाद्धौतं यत् कुङ्कुमं पिञ्जरां रमणीयां सरयूं नदीं विलोक्य त्वया अयोध्या पुरी गन्तव्या ॥ १३ ॥

आनन्दितार इत्यादि । अयोध्यायाञ्च त्वां दृष्ट्वा मातरः कौशल्याद्याः आनन्दितारः आनन्दिष्यन्ति आवयोश्च रामलक्ष्मणयोः सह मै-

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम् ।
सुग्रीवञ्चार्ज्जितं मित्रं सर्व्वांश्चागामुकान् द्रुतम् ॥१५॥
गन्तारः परमां प्रीतिं पौराः श्रुत्वा वचस्तव ।
ज्ञात्वैतत् सम्मुखीनश्च समेता भरतो ध्रुवम् ॥ १६ ॥
गते त्वयि पथानेन वयमप्यंहितास्महे ।

थिल्याः शिवं कलत्राणं प्रष्टारः प्रश्नं करिष्यन्ति भरतश्च श्रुत्वा परमत्यर्थं तोष्टा प्रीतिं कर्त्ता आमन्त्रितायामनित्यत्वज्ञापनात् इति दर्शनं तेषां षिज् न भवति अन्यथा षेरनिटौति षिलोपो न प्राप्नोति ततश्चा-मन्त्रयितार इति स्यात् अथवा आमन्त्रणमामन्त्र इति घञन्ताद्याचारे स-र्व्वप्रातिपदिकेभ्य इति क्विप् तदन्तात्तासिरिट् अतो लोपे च रूपं सह मैथिल्योरिति पाठान्तरं तत्रापि स्यात् बहुव्रीहौ नद्यृतश्चेति कप्न भ-वति समासान्तविधिरनित्य इति कृत्वा ॥ १४ ॥ ज०म०

आनन्दितार इत्यादि । ततायोध्यायां त्वां दृष्ट्वा मातरः कौश-ल्याद्या आनन्दितारः आनन्दिता भविष्यन्ति मैथिल्या सहितयोरावयो रामलक्ष्मणयोः शिवं कलत्राणं प्रष्टारः प्रक्ष्यन्तीत्यर्थः भरतः परमत्यर्थं तोष्टा तोषिष्यति ॥ १४ ॥ भ०

आख्यातासीत्यादि । हतं शत्रुं रावणं लङ्कायामभिषिक्तं विभी-षणं अर्ज्जितं मित्रञ्च सुग्रीवं विशिष्टमाख्यातासि कथयितासि सर्वांश्चा-स्मान् द्रुतमागामुकान् आगमनशीलान् ॥ १५॥ ज०म०

आख्यातासीत्यादि । एतानि आख्यातासि वक्ष्यसि सर्वानस्मान् द्रुतं शीघ्रं आगमशीलांश्च ॥ १५ ॥ भ०

गन्तार इत्यादि । त्वद्वचनं श्रुत्वा पौराः पौरजनाः परमां प्रीतिं गन्तारो गमिष्यन्ति एतदस्मदागमनवृत्तान्तं श्रुत्वा सम्मुखीनः प्रतिबिम्बाश्रय इव सम्मुखो भूत्वा मार्गेणागमिष्यति भरतो ध्रुवमसंशयम् ॥१६॥ज०म०

गन्तार इत्यादि । तव एतद्वचनं श्रुत्वा पौराः पुरवासिजनाः पर-मां प्रीतिं गन्तारः गमिष्यन्ति एतदस्मदागमनं श्रुत्वा भरतोऽपि सम्मु-खीनः सन् समेता समागमिष्यति ॥ १६ ॥ भ०

लब्धाहेऽहं धृतिं प्राप्ते भूयो भवति सम्मुखे ॥ १७ ॥
गते तस्मिन् गृहीतार्थे रामः सुग्रीवराक्षसौ ।
उक्तवान् श्वोऽभिगन्तास्थो युवां सह मया पुरम् ॥१८॥
द्रष्टास्थस्तत्र तिस्रो मे मातृस्तुष्टान्तरात्मनः ।
आत्यन्तीनं सखित्वञ्च प्राप्तास्थो भरताश्रयम् ॥ १९ ॥
नैवं विरहदुःखेन वयं व्याघातिताम्महे ।

गत इत्यादि । त्वयि पया अनेन मयाभिहिते गते वयमपि अंहि-तास्महे पयातात्म अंहिगतौ भूयश्च पुनरपि भवति त्वयि सम्मुखे प्राप्ते धृतिमहं लब्धाहे प्राप्तास्मि एतीति तासि एकारस्य हकारः॥ १७॥ज० म०

गते त्वयीत्यादि । त्वयि गते सति अनेन ख्यातेन पया वयमपि ʼंहितास्महे गमिष्यामः अंहिङ्गतौ भूयः पुनरपि भवति त्वयि सम्मुखे प्राप्ते सति अहं धृतिं लब्धाहे प्राप्स्यामि ॥ १७ ॥ भ०

गते तस्मिन्नित्यादि । तस्मिन् हनूमति गृहीतार्थे अवगतसन्देशार्थे गते सति रामः सुग्रीवराक्षसावुक्तवान् युवां मया सह श्वोदिने अभिगन्तास्थः पुरमयोध्यां गमिष्यथः ॥ १८ ॥ ज० म०

गते तस्मिन्नित्यादि । तस्मिन् गृहीतप्रयोजने हनूमति गते सति रामः सुग्रीवविभीषणौ उक्तवान् किन्तदित्याह श्वः प्रातर्म्मया सह युवां पुरमयोध्याम् गन्तास्थः गमिष्यथः ॥ १८ ॥ भ०

द्रष्टास्थ इत्यादि । तत्र च पुनः पुर्य्यां नोऽस्माकं तिस्रो मातॄः कौशल्याद्याः स्वस्रादित्वान्न ङीप् द्वासिप्रथमयोः पूर्व्वसवर्णदीर्घत्वं तुष्टान्तरात्मनः हृष्टमानसाः द्रष्टास्थः भरताश्रयञ्च भरतनिबन्धनञ्च सखित्वं मित्रत्वं आत्यन्तीनं अत्यन्तं गामीत्यस्मिन्नर्थे अवापारपारेत्यादिना खः प्राप्तास्थः लब्धासाथे ॥ १९ ॥ ज० म०

द्रष्टास्थ इत्यादि । तत्रायोध्यायां नोऽस्माकं हृष्टमानसास्तिस्रो मातॄर्युवाम् द्रष्टास्थः द्रक्ष्यथः अत्यन्तगं भरताश्रयं सखित्वं मित्रत्वञ्च प्राप्तास्थः प्राप्स्यथः ॥ १९ ॥ भ०

नैवमित्यादि श्लोकद्वयं । हे कपिराक्षसौ ! प्रातर्म्मया सह गन्तुं

श्रमोऽनुभविता नैव भवद्भ्याञ्च वियोगजः ॥ २० ॥
एवं युवां मम प्रीत्यै कल्पास्थः कपिराक्षसौ ।
गन्तुं प्रयतिताथे प्रातः सह मया यदि ॥ २१ ॥
उक्तवन्तौ ततो रामं वचः पौलस्त्यवानरौ ।
अनुग्रहोऽयं काकुत्स्थ ! गन्तास्वो यत्त्वया सह ॥२२॥
अनुमन्तास्वहे नावां क्रीड़ितुं विरहे त्वया ।

यदि प्रयतिताथे यत्नं कर्त्तास्थः एवं सति युष्मद्विरहदुःखेन वयं न व्याबानितास्महे न पीड़िता भवितास्मः कर्म्मणि लुट् चिण्वदिट् संयोजितास्मह इति पाठान्तरम् न संयोजिता भवितास्मः युजेर्ण्यन्तस्य चिण्वदिट् इटोऽसिद्धत्वात् नेरनिटीति णिलोपः भवद्भ्याञ्च वियोगजः श्रमः खेदो नानुभविता अत्रापि चिण्वदिट् एवं मम प्रीत्यै युवां कल्प्तास्थः सम्पादितास्थः लुटिचक्लृप इति तङ्भावपक्षः तासिच क्लृप इतीट्प्रतिषेधः कपिसम्बोधनाने चतुर्थी ॥ २० ॥ २१ ॥ज० म०

नैवमित्यादि । हे कपिराक्षसौ सुग्रीवविभीषणौ प्रातर्मया सह गन्तुं प्रयतिताथे प्रयत्नं करिष्यथ इति वक्ष्यमाणश्लोकेनान्वयः एवं सति तदा विरहदुःखेन युष्मद्वियोगकष्टेन वयं न व्याबानितास्महे न पीड़ितास्महे कर्म्मणि डी हनग्रहदृशश्च इति मिण् खेर्होवञ्णिति चेति घः इण् वर्ज्जनेन मिणो वर्ज्जनात् न हनस्तङ् संयोजितास्महे इति क्वचित्पाठः भवद्भ्यां मद्विरहजातः श्रमो नैवानुभविता नानुभविष्यते पूर्ववन्मिण् एवं सति युवां मम प्रीत्यै कल्प्तास्थः नेमपेक्षाः इति क्लपोक्षाः मे इलनिषेधात् ह्यानुभयपदित्वं गम्यते ॥ २० ॥ २१ ॥ भ

उक्तवन्तावित्यादि । ततोऽनन्तरं पौलस्त्यवानरौ विभीषणसुग्रीवौ रामं वच उक्तवन्तौ हे काकुत्स्थ ! त्वया सह यदावां गन्तास्वः गमिष्यावः अयमनुग्रहः प्रसाद इति ॥ २२ ॥ ज० म०

उक्तवन्तावित्यादि । ततो रामवचनानन्तरं पौलस्त्यवानरौ रामं वच उक्तवन्तौ किन्तदित्याह हे काकुत्स्थ ! आवां त्वया सह गन्तास्वः गमिष्यावः अयं तवानुग्रहः प्रसादः ॥ २२ ॥ भ०

अपि प्राप्य सुरेन्द्रत्वं किं नु प्रत्तं त्वयास्पदम् ॥ २३ ॥
ततः कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पकं ते ।
सम्प्रस्थिता वेगवशादगाधं प्रक्षोभयन्तः सलिलं पयोधेः ॥ २४ ॥
सेतुं महेन्द्रं मलयं सविन्ध्यं समाल्यवन्तं गिरिमृष्यमूकम् ।
सदण्डकारण्यवतीश्च पम्पां रामः प्रियायाः कथयन् जगाम २५

अनुमन्तास्वहे इत्यादि । किञ्च सुरेन्द्रत्वञ्चेन्द्रत्वं प्राप्तावप्यावां त्वया सह भवन्तमुत्पद्यमानं विरहं वियोगं नानुमन्तास्वहे पुनस्त्वया प्रत्तं दत्तं अच उपसर्गात्तः आस्पदं राज्यं प्राप्तवन्तौ अत सुतरामेव त्वया सह वियोगो न युज्यते भवन्तं विरहमिति वर्त्तमानकालः नानुमन्तास्वह इति भविष्यत्कालेन सम्बध्यमानः साधुर्भवति धातुसम्बन्धे प्रत्यया इति एताव-न्मुड्विलसितम् ॥ २३ ॥ ज० म०

अनुमन्तास्वहे इत्यादि । सुरेन्द्रत्वं प्राप्यापि आवां त्वया सह भवन्तं उत्पद्यमानं विरहं नानुमन्तास्वहे प्राप्येत्यत्र प्राप्ताविति क्वचित् पाठः त्वया किमास्पदं प्रभुत्वं आवाभ्यां न प्रत्तं न दत्तं राज्यं प्रा-प्तवन्तावेव ॥ २३ ॥ भ०

अथ सर्गभङ्गार्थं छन्दोऽन्तरेण प्रकीर्णमाह

तच्छेषभूतमर्थवशात् प्रकीर्णकक्रियाविलसितं दर्शयन्नाह

तत इत्यादि । कथाभिरन्तरोक्ताभिः दोषां रात्रिं समतीत्य प्रे-रयित्वा ततोऽनन्तरं ते रामादयः पुष्पकं विमानमारुह्य सैन्यैः सह अ-योध्यां यातुं प्रस्थिताः पयोधेः सलिलमगाधमक्षोभ्यमपि वेगवशात् प्रक्षो-भयन्तः ॥ २४ ॥ ज० म०

तत इत्यादि । ततोऽनन्तरं कथाभिर्वाक्यैर्दोषां रात्रिं समतीत्य गमयित्वा ते श्रीरामविभीषणादयः सैन्यैः सह पुष्पकं विमानमारुह्य वेगवशात् समुद्रस्य अगाधमतिविस्तरं जलं प्रक्षोभयन्तः अयोध्यां सम्प्र-स्थिताः सम्यक्प्रस्थानं कृतवन्तः ॥ २४ ॥ भ०

सेतुमित्यादि । एष सेतुस्त्वदर्थे मया कारितः एते च महेन्द्रादयः इत्यादि प्रियायाः सीतायाः कथयन् जगाम अयोध्याभिमुखं गतवान्

एते ते मुनिजनमण्डिता दिगन्ताः
शैलोऽयं ललितवनः सचित्रकूटः ।
गङ्गेयं सुतनु ! विशालतीररम्या
मैथिल्या रघुतनयो दिशन्ननन्द ॥ २६ ॥
शिञ्जानभ्रमरकुलाकुलाग्रपुष्पाः
शीताम्भःप्रविलयसंप्लवातिलीनाः ।
एते ते सुतनु ! पुरीजनोपभोग्या
दृश्यन्ते नयनमनोरमा वनान्ताः ॥ २७ ॥

॥ २५ ॥ ज० म०

सेतुमित्यादि । रामः प्रियाया निकटे तानि कथयन् जगाम॥२५॥भ०

एते इत्यादि । शोभना तनुः शरीरं यस्याः सा त्वं हे सुतनु ! क्वचिदुकारान्तमपि स्त्रियः प्रोक्तमिति वचनात् नदीसंज्ञकत्वात् सम्बुद्धि-ह्रस्वत्वं शश्विचमितनिशर्ज्जिमञ्जिभ्य इतशैणादिकस्तनुशब्दः एते दि-गन्ताः मुनिजनैस्तन्निवासिभिर्मण्डिताः भूषिताः अयं स चित्रकूटः यत्र भरतेनागम्य दृष्टोऽस्मि लुलितवनोऽस्मद्वेगवशात् इयञ्च गङ्गा विशालतीर्थ-तया रम्या एवं मैथिल्या दिशन् कथयन् ननन्द मुदितः ॥ २६ ॥ज०म०

एते इत्यादि । रघुतनयो रामो मैथिल्या इति दिशन् कथयन् ननन्द किमित्याह हे सुतनु ! ते पूर्वमनुभूता मुनिजनैः शोभिता दि-गन्ताः सोऽयं मनोहरश्चित्रकूटपर्वतः सेयं महातीरेण रमणीया गङ्गा तीरेत्यत्र तीर्थेति पाठे महातीर्थमध्ये रमणीयेत्यर्थः ॥२६॥ म०

शिञ्जानेत्यादि । हे सुतनु ! एते वनान्ताः पुर्यां दृश्यन्ते शिञ्जानैः कूजद्भिः भ्रमरकुलैः आकुलान्यग्राणि पुष्पाणि येषां वनान्तानां प्रविलीय-तेऽस्मिन्निति प्रविलयः एरच मिमीलाम्यां खलचोः प्रतिषेधो वक्तव्यः वि-भाषालीयतेरित्यादित्वं न भवति शीताम्भसः प्रविलयः कुल्या तेन यः संप्लवः प्लावना तेनाभिलीनाः कुल्यया सिच्यमानमूलत्वात् अतएव नयन-मनोरमाः रमयतीति कर्त्तर्यच् पश्चात् षष्ठीसमासः एवञ्च पुरीजनानाम-

स्थानं नः पूर्वजानामियमधिकमसौ प्रेयसी पूरयोध्या
दूरादालोक्यते या हुतविविधहविःप्रीणिताशेषदेवा ।
सोऽयं देशो रुदन्तं पुरजनमखिलं यत्र हित्वा प्रयातौ
आवां सीते! वनान्तं सह धृतधृतिना लक्ष्मणेन क्षपान्ते ॥२८॥
तूर्य्याणामथ निस्वनेन सकलं लोकं समापूरयन्
विक्रान्तैः करिणां गिरीन्द्रसदृशां क्ष्मां कम्पयन् सर्वतः ।

योध्यानिवासिनां उपभोग्याः तथा ॥ २७ ॥ ज०म०

धिङ्क्षानैत्यादि । हे सुतनु ! एते ते वनान्ता दृश्यन्ते कीदृशाः धि-ङ्क्षानैः कलं ध्वनद्भिर्भ्रमरसमूहैर्व्याप्तानि अग्रपुष्पाणि येषां प्रविलीयन्ते संश्लिष्यन्ते यत्र स प्रविलयः कुल्या शीताम्भास्तासौ प्रविलयश्चेति तेन यः संप्लव आप्यायनं तेनातिलीनाः कुल्ययाभिषिच्यमानमूलत्वात् पुरीजनोप-भोग्याः सौन्दर्य्यात् नयनमनोरमा ॥ २७ ॥ भ०

स्थानं न इत्यादि । हे सीते ! असौ पुरी नोऽस्माकं पूर्वजानां स्थानमधिकं अतएव च प्रेयसी प्रियतमा दूरादालोक्यते उच्चप्रासादयोगात् या हुतैर्विविधैर्हविभिराज्यादिभिः प्रीणिता अशेषदेवा यत्र देशे पुर-जनमखिलं समस्तं रुदन्तं क्षपान्ते उषसि हित्वा त्यक्त्वा छलेन आवां वनान्तं प्रयातौ सोऽयं देशः सह लक्ष्मणेन धृतधृतिना धृतसौमनस्येन ॥ २८ ॥ ज० म०

स्थानं न इत्यादि । हे सुतनु ! सेयं पुरी दूरादालोक्यते असाव-योध्या नोऽस्माकं पूर्वजानाञ्च पितृपितामहादीनाञ्च स्थानं अतिशयं प्रे-यसी प्रियतमा याऽयोध्या हुतैर्विविधैर्हविभिराज्यादिभिः प्रीणिता तर्पि-ता अशेषा देवा यत्र तादृशी हे सीते ! सोऽयं देशः यत्र रुदन्तं अखिलं पुरजनं हित्वा त्यक्त्वा क्षपाया रात्रेरन्ते धृतधृतिना लक्ष्मणेन सह आवां वनान्तं प्रयातौ गतौ ॥ २८ ॥

तूर्य्याणामित्यादि । अथानन्तरं भरतो हनूमतः समुपलब्धरामवृ-

सानन्दाश्रुविलोचनः प्रकृतिभिः सार्द्धं सहान्तःपुरः
सम्प्राप्तो भरतः समारुतिरलं नम्रः समं मातृभिः ॥ २९ ॥
अथससम्भ्रमपौरजनावृतो भरतपाणिभृतोज्ज्वलचामरः ।
गुरुजनद्विजवन्द्यभिनन्दितः प्रविशति स्म पुरं रघुनन्दनः॥३०॥

त्तान्तत्वात् सानन्दाश्रुविलोचनः सानन्दाश्रूणी विलोचने यस्य तथाभूतः प्रकृतिभिः अमात्यादिभिः सार्द्धं सहान्तःपुरः अन्तःपुरेण समं मातृभिः कौशल्यादिभिः सह मातृभिः हनूमता च सह अयं नम्रः अनुद्धतः समीपे मे नाथ आगत इति तूर्य्याणां निस्वनेन सकलं लोकं मार्गप्राप्तं समापूरयन् व्याप्नुवन् करिणाञ्च गिरीन्द्रसदृशां त्यदादिषु दृश इति चकारात् क्विन् विक्रान्तैः पादन्यासैः च्मां कम्पयन् सर्व्वतो विधूनयन् अश्विनीतत्यादिना युक् सम्प्राप्तः रामसमीपमित्यर्थः ॥ २९ ॥ ज०म०

तूर्य्याणामित्यादि । अथानन्तरं रामवार्त्तां प्राप्य प्रकृतिभिरमात्यैः सार्द्धं अन्तःपुरेण सहितो मारुतिना हनूमता सहितः मातृभिः सह भरतः सम्प्राप्त आगतः कीदृशः तूर्य्याणां चतुर्विधवाद्यानां निस्वनेन ध्वनिता सकलं लोकं भुवनं समापूरयन् गिरीन्द्रसदृशां कुलपर्वततुल्यानां करिणां हस्तिनां विक्रान्तविक्रमैः पादविक्षेपैर्वा च्मां पृथिवीं सर्व्वतः सर्व्वां कम्पयन् चालयन् तस्य करिणि द्वितीयास्तस् आनन्दाश्रुसहिते विलोचने यस्य तादृशः नमनशीलः ॥ २९ ॥ भ० ॥

अथेत्यादि । अथ भरतसम्प्राप्त्यनन्तरं रघुनन्दनो रामः ससम्भ्रमेण सादरेण सहर्षेण पौरजनेनावृतः भरतपाणिना धृतमुज्ज्वलं चामरं यस्य गुरुजनेन द्विजैर्वन्दिभिश्च स्तुतिपाठकैरभिपूजितैरभिष्टुतः सन् पुरमयोध्यां प्रविशति स्म प्रविष्टः ॥ ३० ॥ ज० म०

अथेत्यादि । अथानन्तरं रघुनन्दनो रामः पुरमयोध्यां प्रविष्टवान् कीदृशः ससम्भ्रमेण सादरेण पौरजनेनावृतो वेष्टितः ससम्भ्रमेत्यत्र ससम्मदेति क्वचित्पाठः सम्मदो हर्षः पुनः कीदृशः भरतपाणिना धृतमुज्ज्वलं चामरं यस्य गुरुजनैर्द्विजैर्वन्दिभिः स्तुतिपाठकैश्चाभिनन्दितः श्लाघितः॥३०॥भ०

प्रविधाय धृतिं पुरौजनानां युवराजं भरतं ततोऽभिषिच्य ।
जघटे तुरगाध्वरेण यष्टुं कृतसम्भारविधिःपतिःप्रजानाम्॥२१॥

प्रविधायेत्यादि । प्रविश्य च पुरं प्रजानां पती रामः जनानां धृतिं प्रीतिरूप्रचेतोवृत्तिं परामुत्कर्षां प्रविधाय कृत्वा भरतञ्च युवराजमभिषिच्य ततोऽनन्तरम् तुरगाध्वरेणाश्वमेधेन यष्टुं जघटे चेष्टितवान् कृतसम्भारविधिः सम्भ्रियत इति सम्भारः द्रव्यगण इत्यर्थः कृतोऽनुष्ठितः सम्भारस्य विधिरितिकर्त्तव्यतालक्षणो येन स इति ॥ २१ ॥ ज० म०

प्रविधायेत्यादि । ततोऽनन्तरं प्रजानां पती रामः पुरौजनानां धृतिम् प्रविधाय दानसम्वादनादिभिः प्रहृष्टां कृत्वा युवराजं भरतं अभिषिच्य यौवराज्ये भरतस्याभिषेकं कृत्वा कृतसम्भारविधिः कृतयज्ञोचितसामग्रीकः सन् तुरगाध्वरेण अश्वमेधेन यज्ञेन यष्टुं यागं कर्त्तुं जघटे चेष्टितवान् ॥ २१ ॥ भ०

कुलवितरणविद्यावैभवाम्बष्ठगोष्ठीवरहरिहरखानख्यातवंशाम्बुधीन्दोः।
भुवनविदितकीर्त्तिः सेनगौराङ्गतो योऽजनि स भरतसेनो भट्टिटीकाञ्चकार ।

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां पुरप्रवेशो नाम द्वाविंशतितमः सर्गः।

समाप्तश्चायं भट्टिग्रन्थः ।

---

इदमधिगतमुक्तिमार्गचित्रं
विवर्द्धिषतां वदताञ्च सन्निबन्धात् ।
जनयति विजयं सदा जनानां
युधि सुसमाहितमैश्वरं यथास्त्रम् ॥ ३२ ॥
दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम् ।
हस्तामर्ष इवान्धानां भवेद्व्याकरणादृते ॥ ३३ ॥
व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम् ।

नायकाभ्युदयान्तं महाकाव्यमिति परिसमापय्य तत्र जयमिच्छता अस्मिन्नादरः कर्त्तव्य इति दर्शयन्नाह

इदमित्यादि । इदं महाकाव्यं उक्तेर्वचनस्य यो मार्गः पन्थाः सुसंस्कृतशब्दलक्षणः प्रपञ्चितः तेन चित्रं विस्मयनीयं सुसमाहितं अलङ्कारयुक्तं अधिगतं परिज्ञातं सज्जनानां विवर्द्धिषतां वक्तुमिच्छतां वदताञ्च वक्तुं प्रवर्त्तमानानां सदा विजयं जनयति सन्निबन्धात् शोभनबन्धात्कारणात् यथास्त्रमैश्वरं पाशुपतं अधिगतमुक्तिमार्गं अधिगतः प्राप्तः प्रज्ञातो मोचनमार्गः क्षेपणमार्गो येन चित्रं नानावर्णकेन चित्रितत्वात् सुसमाहितं युधि संग्रामे विजयं विदधाति तद्वत् ॥ ३२ ॥ ज० म०

तस्मादादरः कर्त्तव्य इति तत्रापि य एव व्याकरणमधीतवान् तस्यैवात्रादरो युक्त इति दर्शयन्नाह

दीपतुल्य इत्यादि । अयं प्रबन्धो महाकाव्यसंज्ञकः प्रबध्यते विरच्यत इति कृत्वा शब्दलक्षणमेव चक्षुर्येषां तेषां दीपतुल्यः अत एवैतत्काव्याधिगमात् स्वातन्त्र्येणान्यानपि शब्दान् प्रयोक्तुं क्षमत्वात् व्याकरणादृते विना हस्तामर्ष इवान्धानां हस्तामर्ष इवावबोधः यथा अन्धानां हस्तेन घटपटादिवत् स्वापराद्धस्य संस्थानमात्रपरिज्ञानं यथावस्थितस्वरूपपरिज्ञानं एवमनधीतव्याकरणानां न शब्दस्वरूपपरिज्ञानं अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतोऽप्यन्यशब्दप्रयोग इति ॥ ३३ ॥ ज० म०

एवञ्च कृत्वा विद्वद्भिरनुरुध्यमानेन मयेदं काव्यं कृतमिति दर्शयन्नाह

हता दुर्मेधसश्चास्मिन् विदुषां प्रीतये मया ॥२४॥

काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेननरेन्द्रपालितायाम् ।
कीर्त्तिरतो भवतान्नृपस्य तस्य
क्षेमकरः क्षितिपो यतः प्रजानाम् ॥ २५ ॥

इति भट्टिकाव्ये द्वाविंशतितमः सर्गः ।

समाप्तश्चायं भट्टिग्रन्थः ।

व्याख्यागम्यमित्यादि । व्याख्यागम्यं व्याख्यानादिना बोद्धुं न शक्यते किमर्थमीदृशं क्रतमति चेत् उच्यते सुधियामलं शास्त्रे कुशबुद्धीनां परं प्रमोदो जायते एवञ्च सत्यस्मिन् काव्ये विषयभूतदुर्मेधसो व्याकरणबाह्याः मया हताः नानुग्रहीताः तस्माद्विद्वत्प्रियतया विद्वांसः प्रिया यस्य स मम विद्वत्प्रियः तद्भावस्तत्ता तया हेतुभूतयेति ॥ २४ ॥ ज०म०

यत्रेदं काव्यं क्रतं तद्दर्शयन्नाह

काव्यमित्यादि । मयेदं काव्यं विहितं क्रतं श्रीधरसूनुना नरेन्द्रनाम्ना न्टपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्य्यां अत एव काव्यविधानाय या कीर्त्तिः सा तस्यैव राज्ञो भवतात् आशिषि तातङ् यतः प्रजानां क्षेमकरः क्षेमानुकूलः आनुलोम्ये टः ॥ २५ ॥ ज०म०

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य महावैयाकरणस्य क्रतौ रावणबधे महातिङन्तकाण्डे लक्षणसितनाम्नो नवमपरिच्छेदस्य जटीश्वरो जयदेवो जयमङ्गल इति च नामभिस्त्रिभिः सुप्रसिद्धस्य अनेकशास्त्रव्याख्याकृतौ टीकायां काव्यस्यायोध्याप्रत्यागमनं नाम द्वात्रिंशः सर्गः ।

जयमङ्गलक्रता टीका समाप्ता ।